विश्वेश्वरानन्द-वैदिक-शोध-संस्थान-प्रकाशनम्-६८२

Vishveshvaranand Vedic Research Institute Publication-682

# नित्यानन्द-विश्व-ग्रन्थमाला

## NITYĀNAND UNIVERSAL SERIES

ग्रन्थ—१५

Volume—15



होश्यारपुर

HOSHIARPUR

1994

संस्थापक-सम्पादकः

विश्वबन्धुः

*Founder Editor*

VISHVA BANDHU

सम्पादकः

शि०-भास्करन् नायरः

*General Editor*

S. BHASKARAN NAIR

प्रकाशकृत्

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्

(पत्रालयः) साधु-आश्रमः, होशियारपुरम् (पं०, भारतम्)

*Publishers*

Vishveshvarānand Vedic Research Institute

(P.O.) Sadhu Ashram, Hoshiarpur (Pb. India)

# त्रिवेणी

( अष्टाविंशति-सर्गात्मकं महाकाव्यम् )

रचयिता

क० र० डॉ० श्यामदेवः पाराशरः

शास्त्री, M.A., M.O.L., Ph.D., साहित्यशिरोमणिः

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्

होश्यारपुरम्-१४६ ०२१

१९९४

कृति। **त्रिवेणी (TRIVEṆĪ)**

विवरणम् अष्टाविंशति-सर्गात्मकं महाकाव्यम्
(A Mahākāvya in Twenty-eight Cantos)

प्रणेता कविरत्नम् डॉ० श्यामदेवः पाराशरः, साहित्यशिरोमणिः,
शास्त्री, एम्० ए०, एम्० ओ० एल्०,
पी-एच्० डी०, पी० ई० एस्० (से० नि०)
२२३, हरिनगरम्, होश्यारपुरम् (पं०)

Dr. Shyam Dev Parāshar, Sahitya-Shiromaṇi,
Shastri, M. A., M. O. L.,
Ph. D., Kavi Ratnum, P. E. S. (Retd.)
223, Hari Nagar, Hoshiarpur (Pb.)



प्रकाशकृत्
विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्
(पत्रालयः) साधु आश्रमः, होश्यारपुरम् (पं०, भारतम्)

प्रथमं संस्करणम्
सन् १९९४ (ई०), सं० २०५१ (वि०)



*Publishers*
Vishveshvarānand Vedic Research Institute
P. O. Sādhu Āshram, Hoshiarpur (Pb., India)

FIRST EDITION, 1994, V. S. 2051

भारते होश्यारपुरे वि०-वै०-शो०-सं०-मुद्रागृहे ।
शि०-भास्करन्-नायरेण संमुद्राप्य प्रकाश्यते ।

Printed and Published by S. BHASKARAN NAIR
for V. V. R. I. at the V. V. R. I. Press, Hoshiarpur (Pb. India).

# निवेदना

प्रेयांसः प्रेक्षावन्तः पाठक-प्रवराः ! प्रतरां प्रत्नेषु पुरा-वृत्तेषु प्रायोऽप्रतिरूपाणां भूपानां पङ्क्तिष्वपि पावनतम-जीवनानाम् मानवताऽऽदर्शभूतानां, यथार्थतो देवदूतानामिव पथिकृताम् विक्रमादित्य-मातृगुप्त-प्रवरसेनाऽभिख्यानाम् प्रकटीकृत-पुण्यशीला लोकलीला अधिकृत्य प्रणीतेयं सर्वत्र सुलभ-स्वादिम-श्रेणी त्रिदिव-निःश्रेणी 'त्रिवेणी'।

चारु-चरितचर्चया स्वं ब्राह्मण्यं चरितार्थं चिकीर्षुणा मयका सुरसरस्वति-समाराधन-सौभाग्य-सम्प्राप्त्या साकमेव स्वान्तः-सुखमपि समासादि किमप्यननुभूतपूर्वम् ।

अथ चौदार्यमुषाम् मात्सर्यजुषाम् सुतमामदूरदृशां स्वार्थो-पासकानाम् च शासकानां मौग्ध्यादनुदिनं पञ्चाम्बुप्रान्ते मुमूर्षन्ती गैर्वाणी वाणी तदात्वेऽपि मनाक् प्राणितीति च प्रत्याययितुं धर्ममात्रावेष्टितमिदं नरचेष्टितम् ।

तथा च कीर्ति-कौमुद्या विद्योतित-दिक्चक्रबालानाम् साद्-गुण्यपुण्यपालानाम्, प्रजारञ्जनजीवनचर्याणाम् आर्यवर्याणाम्, त्रैकाल्येऽपि चाऽतुलप्रतापानां देशान्तर-दुरापाणां क्ष्मापाणाम्, सौभाग्यात् पुरा महीमण्डले निवसतां सतां सम्प्रति संस्तवेन समं प्रकाशित-सुकृत-सृतिः सैषा कृतिः पौनः-पुनिकया प्रतिबोधयति पूर्वजाऽवदानानि ।

अनुपदं नूनमनूनं कौतुकमङ्कुरयन्ती सेयं रचना सौरस्य-सौकुमार्य-सागरे सिष्णासूनां सहज-सुलभ-दयोदयानां सहृदयानाम् आमोदाय विनोदाय चाऽपि कल्पिष्यत इति दृढं प्रतीमः ।

क्वचित् क्वचिदिह शब्दशास्त्र-परिपन्थिनोऽपाणिनीया वाऽपि प्रयोगाः पुराण-प्रभृति-प्रबन्धेषु प्रयुज्यमानत्वादत्रापि स्वीकृता इति सूक्ष्मेक्षिका-समीक्षण-दक्षैः प्रेक्षावद्भिः क्षन्तव्याः ।

किं च—मधुरिम-म्रदिम-मिलितस्य शृङ्गारस्य स्वादिम-साम्राज्यैक-स्वामित्वाद् हृदयि-दयितत्वाच्च तत्तत्प्रदेशेषु प्राचुर्येणाऽत्र प्रपञ्चनमपि मर्षणीयं मनस्विभिः। न खल्विदमस्निग्धं द्रढिमदिग्धं हृदयहीनैर् दीनैः प्रायः प्राश्यं वैराग्य-विजृम्भणमिति।

पद्येषु बहुत्राऽदृष्टपूर्वा अप्युपजातयश्छान्दसिकानुमता इत्यभ्युपगताः। तस्मात् तत्र हतवृत्तत्वं नाशङ्कनीयं दीर्घदर्शनैः सचेतोभिः।

यन्त्राक्षरयोजक-प्रमाद-जातं त्रुटि-जातं त्विह सांसिद्धिकमिति बोधनीयं शोधनीयं च करुणा-वरुणालयैः पाठकैरिति पुटिताञ्जलयः प्रार्थयामहे।

पर्यन्ते च संस्थानस्याऽस्य निदेशकवर्याय, सर्वात्मना सततं सारस्वत-सत्र-समायोजनं प्रत्याबद्ध-श्रद्धाय, श्री एस्० भास्करन् नायर-महाभागाय क्रियासमभिहारेण धन्यवादान् वितरामः येन प्रबन्धस्याऽस्य प्रकाशन-संविधां विधाय सुचिरायाऽधमर्णतां नीताः स्मः।

ततोऽपि प्राग् दीर्घ-दर्शिनः विद्वद्गोष्ठीषु गीयमान-गुण-गरिमाणः डॉ० मुनीश्वरदेव-महोदयाः अनुवारं धन्यवादैरभिनन्द्याः यैर् महाकाव्यस्याऽस्य विशुद्धरूपेण मुद्रापणे सुचिरं साचिव्यमन्वस्थायि। अथ चानुपदं सम्पादने साहाय्यमनुचरन्तः श्रीपृथुराम-शास्त्रि-महाभागाश्चापि नैकशो धन्यवादैरभिनन्द्यन्ते। एतदतिरिक्ताः समेऽपि शोध - संस्थानेऽत्र निवसन्तः सन्तः सभाजनीयाः यैः प्रोत्साहितोऽहमभूवमेतत् - कर्मण्यात्मानं प्रवर्तयितुम्। नित्यदा विधेयव्यापारेषु वैशारद्यं व्यञ्जयन्तो मुद्रणालये व्यवस्थाविधातारः श्री शङ्करदास-महोदयाः, चौ० गुरुप्रसादादयश्च कर्मकरा अपि साधुवादैः सत्क्रियन्ते यैः भृशं कृतज्ञतां नीताः स्मः। स्थानस्य तनीयस्त्वात् तेषां तेषां साह्य-सम्पादकानां वश्यवाचां प्राचां नामानीह निर्देष्टुमक्षमः क्षमां भिक्षमाणः :—

होश्यारपुरम् विनीतः

वैशाखी, १३ अप्रेल, १९९४ श्यामदेवः पाराशरः

# समर्पणम्

किरन्तः सर्वतोदिक्कं दृशा क्षेमं दया - स्पृशा ।
धन्या मनीषि-मूर्धन्याः पुनानाः पृथिवीं पदैः ।। १ ।।

येऽत्र संस्कृत-सम्पत्त्या सन्तः सन्तोऽप्यलंधनाः ।
मान्या 'यर्वाण-तर्वाणा' मन्यन्ते मुग्ध-मानसैः ।। २ ।।

प्राणित्यद्याऽपि गैर्वाणी वाणी येषां तपोबलात् ।
स्थेयसी चार्यमर्यादा भिद्यमानाऽपि चेतरैः ।। ३ ।।

वाचामगोचराऽगण्य - गुणानां प्रतिभाभुवाम् ।
तेषां पाणि - पयोजेषु प्रबन्धोऽयं समर्प्यते ।। ४ ।।

# त्रिवेणी - वर्ण्यविषय - विवरणम्

# अथ प्रथमः सर्गः

## (१) श्वःश्रेयसाशंसा

तापत्रयीं तिरयतात् त्वरितं त्रिकालं,
तृप्तिं तनोतु तव तक्षयतात् तृषां ताम् ।
त्र्यक्षेण तत्र तुलितं त्रिगुणातिगेन,
त्रैस्रोतसं त्रिपथ-तर्पि तुषार-तोयम् ॥ १ ॥

पुण्यैः प्रपात - प्रतिमैः प्रबन्धैः, पुंसां पतत्पङ्कपरम्पराय ।
प्रवर्तकाय प्रवरस्य पूर्वं, पाणी पुटीकृत्य पराशराय ॥
पुनः पद-प्रीति-परिप्लुतेन, पाराशर--प्रेष्य-पृथुप्रथेन ।
प्रणाम-पुष्पाञ्जलयः प्रदत्ताः, प्रत्यूह-पुञ्जान् परिमार्जयन्तु ॥ २-३ ॥

आश्चर्यचारुचर्याय, रुचितैः रचना - चयैः ।
नमो नः कविवर्याय, पाराशर्याय नैकशः ॥ ४ ॥

सत्त्वात्मकः सूक्त-सहस्र-सूत्र-सम्पादकः सूक्ति-सुधा-सरस्वान् ।
सद्धर्म-सञ्चारण-सिन्धुसेतुः, स स्वस्तये सत्यवती-सुतः स्तात् ॥ ५ ॥

आशीराशींस्त्वहं तस्य, हन्त ! वृद्धस्य बालकः ।
रुषितोऽपि मृषा भूत्वाऽऽसादयामि दयानिधेः ॥ ६ ॥

महर्षेस्तस्य वात्सल्य - मूर्तेः कल्याण - कामनाः ।
अनल्पाः सत्य-सङ्कल्पाः, मह्यमेव सुरक्षिताः ॥ ७ ॥

यतः समस्त - वस्तूनां सम्पदां वाऽस्य वस्तुतः ।
निसर्गादेव दायादो निर्विवादोऽस्मि वास्तवः ॥ ८ ॥

पथिकृद्भ्यो नमस्तेभ्यो रचिताऽपचिता च यैः ।
पदन्यासैरनायासैः स्वर्ग - सोपान - पद्धतिः ॥ ९ ॥

वन्द्या नन्द्यास्तथा प्राञ्चः प्रतीक्ष्याः कविकुञ्जराः ।
सुधासार - रसोद्गाराः लोके निर्जित - निर्जराः ॥ १० ॥

कवयो वाङ्मयाकाश - रवयो ये वयोऽधिकाः ।
आद्याः कैर्नाऽभिवाद्यास्ते, नवैः सामान्य - मानवैः ॥ ११ ॥

नमोऽस्त्वहम्पूर्विकयाऽञ्चितेभ्यः,
प्राचां पदाब्जेभ्य उपेयवाचाम् ।
प्रबन्ध - गन्धानधिगम्य येषां,
मुधैव मुग्धा अपि मानिनः स्म ॥ १२ ॥

## (२) सत्कृति - सत्कृतिः

भव्यानि सद्भाषितभङ्गि - भूषा - ,
स्तव्यानि नव्यानि गिरां गरिम्णा ।
पुनः पद-प्रौढिम - पूजितानि,
स्वादीय - औचित्य - झरी - म्रदिम्ना ॥ १ ॥

सौशब्द्य - वक्रोक्ति - विलास - भाञ्जि,
काव्यानि कैः कर्ण - रसायनानि ।
गम्यानि धन्यैः रसमार्मिकैस्तैः,
नम्यानि न स्वादिम - सौभगानि ॥ २ ॥

मधुच्छटा - सम्पुटितानि तानि,
साद्गुण्य - सौरभ्य - सुवासितानि ।
वैचित्र्य - काशिष्णु - नवच्छवीनां ,
जिष्णूनि सूक्तानि च सत्कवीनाम् ॥ ३ ॥

पदमैत्री - परिस्पन्द - प्रस्तुत्या परिमार्जिता ।
रचना काचनाऽप्यत्र रोचनाऽऽलोचनार्चिता ॥ ४ ॥

मसृणैरुल्वणैः पद्यैर्लावण्य - लवलासिभिः ।
प्रबन्धः सुधियां पूज्यः प्रसादेन पुरस्कृतः ॥ ५ ॥

दोषैरुद्यदुपक्रोशैस्तर्जिताऽऽह्लाद - वर्जिता ।
मलीमसा सदास्वाद्या कविता स्यान्न सेविता ॥ ६ ।

अद्यश्वीन - यशोलाभो येन काव्येन जायते ।
षण्डत्वं सज्जते तत्र पाण्डित्यं हन्त ! लज्जते ॥ ७ ॥

दोधूयते वेदनयाऽपि मस्तकं,
रसस्य वा वेदनयाऽपि वेदिभिः ।
एकत्र हेतुः कवि - कल्प - चापलं,
परत्र तत् सत्कवि-कर्म-कौशलम् ॥ ८ ॥

यैः संगृहीतैस्तुष - तूल - तूस्तैः,
प्रपञ्च्यते काव्यकलाऽभिमानः ।
मसी - प्रयोगेण मलीयसी तैः,
शाटी शुभाऽकारि हि शारदायाः ॥ ९ ॥

तु - वै - नु - नूनं - किल - चादि - योगैः
संचिन्वते येऽपि च काव्यभित्तिम् ।
ख्याता इमे डित्थ-डवित्थ-मुख्याः,
कापेय - कल्पां तनयन्ति लीलाम् ॥ १० ॥

सन्तो मधुस्यन्ति, न रोगिणस्ते,
कुतो नु तैः सेव्यमभव्य-काव्यम् ।
तन्मा मृषोत्पुच्छय रे कवे ! त्वम्,
वैरस्य - हास्यं रचयन् यथास्वम् ॥ ११ ॥

सम्पादितं च साहित्य - सौरस्यं येऽपि जानते ।
यथेष्टं चेष्टितैः काव्ये तान् विलोक्य विशृङ्खलान् ॥
अ - शनैर् दशनैरोष्ठं पीडयत्येष पिङ्गलः ।
कृपणः पाणिनिः पाणी पिनष्टयद्य पुनः पुनः ॥ १२-१३ ॥

कार्यं निरङ्कुशेनैव हन्त ! काव्य-क्रियासु चेत् ।
वैरिणी मन्यमानाऽसौ स्वैरिणी वन्द्यते न किम् ? ॥ १४ ॥

अवैदुष्येण दूष्यं सत्, काव्यं स्ताव्यं न मन्यते ।
येषां स्यात् कविभिर् धूम्रच्छविभिः किन्तु तैर्नुतैः ॥ १५ ॥

दीनैः प्रातिभ - हीनैश्चेद्, रसराहित्यमाहितम् ।
कविभिः किन्नु साहित्य - सौहित्यं प्रतिपादितम् ॥ १६ ॥

वन्द्या नन्द्यास्तथा प्राञ्चः प्रतीक्ष्याः कविकुञ्जराः ।
सुधासार - रसोद्गाराः लोके निर्जित - निर्जराः ॥ १० ॥

कवयो वाङ्मयाकाश - रवयो ये वयोऽधिकाः ।
आद्याः कैर्नाऽभिवाद्यास्ते, नवैः सामान्य - मानवैः ॥ ११ ॥

नमोऽस्त्वहम्पूर्विकयाऽञ्चितेभ्यः,
प्राचां पदाब्जेभ्य उपेयवाचाम् ।
प्रबन्ध - गन्धानधिगम्य येषां,
मुधैव मुग्धा अपि मानिनः स्म ॥ १२ ॥

## (२) सत्कृति - सत्कृतिः

भव्यानि सद्भाषितभङ्गि - भूषा - ,
स्तव्यानि नव्यानि गिरां गरिम्णा ।
पुनः पद-प्रौढिम - पूजितानि,
स्वादीय - औचित्य - झरी - म्रदिम्ना ॥ १ ॥

सौशब्द्य - वक्रोक्ति - विलास - भाञ्जि,
काव्यानि कैः कर्ण - रसायनानि ।
गम्यानि धन्यैः रसमार्मिकैस्तैः,
नम्यानि न स्वादिम - सौभगानि ॥ २ ॥

मधुच्छटा - सम्पुटितानि तानि,
साद्गुण्य - सौरभ्य - सुवासितानि ।
वैचित्र्य - काशिष्णु - नवच्छवीनां ,
जिष्णूनि सूक्तानि च सत्कवीनाम् ॥ ३ ॥

पदमैत्री - परिस्पन्द - प्रस्तुत्या परिमार्जिता ।
रचना काचनाऽप्यत्र रोचनाऽऽलोचनार्चिता ॥ ४ ॥

मसृणैरुल्वणैः पद्यैर्लावण्य - लवलासिभिः ।
प्रबन्धः सुधियां पूज्यः प्रसादेन पुरस्कृतः ॥ ५ ॥

दोषैरुद्यदुपक्रोशैस्तर्जिताऽऽह्लाद - वर्जिता ।
मलीमसा सदास्वाद्या कविता स्यान्न सेविता ॥ ६ ।

अद्यश्वीन - यशोलाभो येन काव्येन जायते ।
भण्डत्वं सज्जते तत्र पाण्डित्यं हन्त ! लज्जते ॥ ७ ॥

दोधूयते वेदनयाऽपि मस्तकं,
रसस्य वा वेदनयाऽपि वेदिभिः ।
एकत्र हेतुः कवि - कल्प - चापलं,
परत्र तत् सत्कवि-कर्म-कौशलम् ॥ ८ ॥

यैः संगृहीतैस्तुष - तूल - तूस्तैः,
प्रपञ्च्यते काव्यकलाऽभिमानः ।
मसी - प्रयोगेण मलीयसी तैः,
शाटी शुभाऽकारि हि शारदायाः ॥ ९ ॥

तु - वै - नु - नूनं - किल - चादि - योगैः
संचिन्वते येऽपि च काव्यभित्तिम् ।
ख्याता इमे डित्थ-डवित्थ-मुख्याः,
कापेय - कल्पां तनयन्ति लीलाम् ॥ १० ॥

सन्तो मधुस्यन्ति, न रोगिणस्ते,
कुतो नु तैः सेव्यमभव्य-काव्यम् ।
तन्मा मृषोत्पुच्छय रे कवे ! त्वम्,
वैरस्य - हास्यं रचयन् यथास्वम् ॥ ११ ॥

सम्पादितं च साहित्य - सौरस्यं येऽपि जानते ।
यथेष्टं चेष्टितैः काव्ये तान् विलोक्य विश्रृङ्खलान् ॥
अ - शनैर् दशनैरोष्ठं पीडयत्येष पिङ्गलः ।
कृपणः पाणिनिः पाणी पिनष्टचद्य पुनः पुनः ॥ १२-१३ ॥

कार्यं निरङ्कुशेनैव हन्त ! काव्य-क्रियासु चेत् ।
वैरिणी मन्यमानाऽसौ स्वैरिणी वन्द्यते न किम् ? ॥ १४ ॥

अवैदुष्येण दूष्यं सत्, काव्यं स्ताव्यं न मन्यते ।
येषां स्यात् कविभिर् धूम्रच्छविभिः किन्तु तैर्नुतैः ॥ १५ ॥

दीनैः प्रातिभ - हीनैश्चेद्, रसराहित्यमाहितम् ।
कविभिः किन्नु साहित्य - सौहित्यं प्रतिपादितम् ॥ १६ ॥

पीयते श्रोत्र - पात्रेण, हृदयेषु निधीयते ।
गीयते पारिषद्यैश्च सत्काव्यं केन हीयते ॥ १७ ॥

रस्यते रचना रम्या, कवे ! या कापि यस्य ते ।
मार्द्वीक - रसमर्मज्ञैः, शस्यतेऽथ नमस्यते ॥ १८ ॥

वयस्य ! तेन तादृश्यै पुनः किं न प्रयस्यते ।
नाऽभव्यद्रव्यवद् विज्ञैरस्यते या च हस्यते ॥ १९ ॥

कुत्स्यं कषायं कटुकं क्वचिन्मा
कार्षीः कवे ! निम्ब-रसाञ्जनादेः ।
लावण्यमुद्भावय लोभनीयं
लालायितानां लवणस्यतां कृते ॥ २० ॥

वमत्येषा मसीमात्रं, तूलिका ते तपस्विनी ।
कवे ! नूनमसीमाऽत्र, कीर्तिः रजक-रञ्जनी ॥ २१ ॥

केवलं कालिमानं किं, कलमेन किरस्यये ! ।
मा कालुष्य - कलङ्कानि, कूलानि ककुभां कुरु ॥ २२ ॥

सारयन्ती सुधाऽऽसारान्, लेखनी काऽपि ते कवे ! ।
समन्तात् सितिमानं वा, स्तृणुते कीर्ति-कौमुदीम् ॥ २३ ॥

त्वत्तस्तु शौण्डिकः श्रेयान्, कवे ! चेत् कौतुकावहैः ।
भावैर् माध्वीक-मिश्रैस्ते, न माद्यन्ति मनस्विनः ॥ २४ ॥

सुधा-स्वादिम-सञ्चारात्, कविता स्थास्नुतां गता ।
आकल्पान्ताद् नवोन्मेषा, ध्रियते म्रियते न सा ॥ २५ ॥

दोषज्ञानां कटाक्षांश्चेत्, सहते रचना तव ।
भविताऽसि सुरो भ्रातः ! नाऽतस्त्वं त्वसुरो भव ॥ २६ ॥

कविता करतालैश्चेद्, रसज्ञैरभिनन्द्यते ।
भविता भवतो गूढं, प्ररूढं प्रायशो यशः ॥ २७ ॥

ललाटं ताड्यते लोकैः, श्रुत्वा चेद् वाग्विजृम्भणम् ।
दैवलेखान् विजानीयाः, तदैव स्फुटितान् कवे ! ॥ २८ ॥

विधातुर्निर्मितेरात्मा, पदार्थं - स्वादिमा मतः ।
तत् त्वया तत्त्वतस्तत्र, कवे ! कार्य उपक्रमः ।। २९ ।।

पदार्थाऽपप्रयोगेण दुर्वृत्ता ऊर्ध्वदृष्टयः ।
कदर्थयन्ति नीतिज्ञ - कविकल्पाः सचेतनान् ।। ३० ।।

अहो ! वैधात्र-पेशल्यं सत्कवेः कुकवेस्तथा ।
लक्ष्यते रसविच्छित्तिः समाना रचनासु यत् ।। ३१ ।।

श्लक्ष्ण-ऋक्षण-लाक्षण्या, द्राक्षा-माक्षिक-माधुरी ।
कृतिर्लीलायितैर् लेह्या, मृतिस्तां न प्रतीक्षते ।। ३२ ।।

माधुर्यं चेन्न, मुक्तं स्यात्, नोजश्चेन्नङ्क्ष्यति स्वयम् ।
प्रसादश्चेन्न, काव्यं तत्, प्रणाले पातयिष्यते ।। ३३ ।।

पदं कामयसे पुण्यं, कवे ! त्वं चेन्निरापदम् ।
भवभीतिं तदुत्सृज्य, त्रैगुण्य - विषयो भव ।। ३४ ।।

प्रणाम - पुष्पप्रकरेण पूज्याः,
मनाक्प्रयत्नाः कवयोऽत्र तेऽपि ।
यत्तौल्यहेतोः पटलाधिरूढः
पदं गरीयो लभते कवीन्द्रः ।। ३५ ।।

हृद्यश्चेत् सद्य आस्वाद्यो रसोऽगाधतलस्थितः ।
पिपासुकैरविच्छिन्ना विशाला रसनेष्यते ।। ३६ ।।

## (३) सतां संस्तव एव ज्यायान्

एकस्य भूमिदेवस्य, त्यागिनो न तु रागिणः ।
देव - द्वयस्य च द्विष्टोत्सादिनोऽतुल - दादिनः ।।
पवित्रेण विचित्रेण, चरित्रेण परिप्लुता ।
पीयूषस्य प्रपा लोक - कोपं लोपं च नेष्यति ।। १-२ ।।

नाकलोकस्य निःश्रेणी, शुभ-श्रेणी शरीरिणी ।
त्रिवेणी मधुधारैषा, शास्तु शस्ता मनः सताम् ।। ३ ।।

कारणं गौरवे चास्याः, न किञ्चित् काव्यकौशलम् ।
पटिमा वस्तु-बन्धे वा, नापि पण्डितिमा मम ॥ ४ ॥

सद्वृत्तभावनं त्वेषां, पावनं पाप - धावनम् ।
वाचामगोचराचारं, वैलक्षण्यं महात्मनाम् ॥ ५ ॥

एषां गौरव - गानेन प्राप्तमानेन किं मया ।
नाशितं स्यात् परं तावत् कृतज्ञत्वं प्रकाशितम् ॥ ६ ॥

किन्नु कुङ्कुम - कस्तूरी - कर्पूर - क्रय - विक्रये ।
वणिजो वित्तवृद्धया नोल्लासितः स्याच्च वासितः ॥ ७ ॥

इति श्री-वसन्तराम-पाराशर-तनुजनुषा कविरत्नादि-विविध-
विरुदभाजा, डॉ० श्यामदेव-पाराशरेण प्रणीते 'त्रिवेणी'
इत्यभिख्ये महाकाव्ये प्रथमः सर्गः पर्यवसितः ॥



# अथ द्वितीयः सर्गः

त्रैविक्रमः पातु पुराकृतः श्रमः,
यस्मिन् स्थिराऽपि प्रपदाहता क्षितिः ।
उपेयुषी विह्वलतामिव क्रमे,
लुठत्यहो ! सम्प्रति गेण्डुवद् भ्रमे ॥ १ ॥

पदाग्र - संस्पर्शमुपेत्य तस्य,
त्रिविक्रमस्यैव युगान्त - शान्ता ।
शुद्धा विबुद्धाऽखिलजीवजाता,
जाताऽभिपूज्या विबुधैरपि ज्या ॥ २ ॥

तत्रास्ति सभ्यो विषयेष्वलभ्यो
देशः शुभ - श्री - सुख - सन्निवेशः ।
अनारतं सच्चरितार्जनारतं
तमादि - कालान्निगदन्ति भारतम् ॥ ३ ॥

दुर्वृत्त - दृप्तान् दलयन् दुरन्तान्,
धर्मध्वजं धारयतां धुरीणः ।
रणे धरण्युद्धरणैककारणे,
मुहुर्जगर्जाऽत्र स रैणुकेयः ॥ ४ ॥

कुठार - कोट्या कतिशः ककुप्सु यः,
कृन्तन् क्रुधा कण्टक - काननानि ।
चक्रे सुमानीव विकस्वराणि,
म्लानानि दीनानि जनाननानि ॥ ५ ॥

पदात्पदं यत्र महालयेषु,
सुराः सुराष्ट्राऽहित - वारणातुराः ।
चरिष्णवश्चाभित एव देवाः,
समस्तसेवा - व्रतिनः प्रियङ्करा ॥ ६ ॥

विबोधयन् यत्र विकासयंश्च,
जगज्जनानां जरयन् जडत्वम् ।
महर्षिभिर्ज्ञान - मरीचिमाली,
व्यधायि मत्या महसा महीयान् ॥ ७ ॥

इतस्ततो यत्र महानदीनां,
तरङ्ग - भङ्गोच्च - भुजोन्मदानाम् ।
सौभिक्ष्य - कर्णेजप - घोरघोषाः,
दारिद्र्य - दोषानिव तर्जयन्ति ॥ ८ ॥

निर्याय नीचैर्निभृतं नगाङ्कात्,
स्वैरं सुखं सागर - चुम्बिनीनाम् ।
तरङ्गिणीनामिह चेष्टितानि,
यूनां मुदे विभ्रम - वेष्टितानि ॥ ९ ॥

एकत्र विन्ध्येन दृढं परत्र,
हिमाद्रिणाऽत्रैव धृता धरित्री ।
स्थाली विशालेव पचेलुकाभ्यां,
स्थिरा न पातालतले विलीना ॥ १० ॥

क्वचिच्चिनारास्तरवो विशालाः,
क्वचित्फलैरत्र नता रसालाः ।
ऊर्जस्वलत्वे द्रढिमानमन्तर्,
विनम्रतायां व्रढिमानमाहुः ॥ ११ ॥

विभूषयन्तो विविधैश्च वर्णैः,
मध्वादयो यत्र दिगम्बराणि ।
क्रमेण मध्वादि - रसोपहारैः,
शस्यैः रसां मेदुरयन्ति विष्वक् ॥ १२ ॥

यस्मिन् समीरो वनवाटिकानां,
सुहृत् समन्तादपि सञ्चरिष्णुः ।
व्यावृत्य शीतोष्ण - कवोष्णमासो
वासोपहारान् विभजन् प्रवाति ॥ १३ ॥

प्रवाल - शोभा - जित - विद्रुमाणां,
गन्धोत्तमानां मलय - द्रुमाणाम् ।
कोलेषु केलिं कलयंश्च वातः,
शीतोऽपि सन्धुक्षयतीव चेतः ॥ १४ ॥

गात्रं विदित्वा तृण-लोष्ठमात्रं
क्षयिष्णु तात्कालिक - काल - पात्रम् ।
यत्राऽदुरन्यस्य मुदे निरामयाः,
श्रुतास्त्वया चापि मया दयामयाः ॥ १५ ॥

कृत्वार्थिसाद् यत्र समस्त-सम्पदः,
वृत्वा कुटुम्बाय तथा महापदः ।
राज्यानि मुक्त्वा तृणवद् वदान्याः,
प्राज्यानि दुःखान्यभजन्त मान्याः ॥ १६ ॥

यस्याऽभयैः साहसधर्मनिष्ठैः,
ऋतम्भरैः स्थैर्यमहायि नाऽन्तः ।
तैर्मूर्ध - दानेन महाप्रतिष्ठैः,
उच्चैः शिरांस्यात्मवतां कृतानि ॥ १७ ॥

प्रतापपूरैरिव भूमिसूरैः,
शूरैः श्रुते सङ्गर उल्लसद्भिः ।
चिन्ता कृता दुर्बल - दुर्विधानां,
यस्मिन्नसूनां न तथा वसूनाम् ॥ १८ ॥

प्राणाः प्रनष्टा न परं रणात्ते,
शौटीर - शौण्डीर्य - ललामभूताः ।
किणा व्रणानामत एव तेषां,
दृष्टा न पृष्ठेषु परन्तपानाम् ॥ १९ ॥

सैन्याः समित्साहस - सत्त्वसिद्धयः
स्वःसुन्दरी - शंसित - शौर्यशालिनः ।
प्राजि विजानन्ति महस्य मेलां
खेलां सहेलां च विनाश - वेलाम् ॥ २० ॥

अस्त्यस्यं देशस्य महाविशाले,
शून्यावनी - शैलवनी - कराले ।
हृन्मर्म गात्रस्य यथाऽन्तराले,
तथा प्रदेशः सुभगो विचाले ॥ २१ ॥

कौबेर - कोषैरिव मोष - भीत्या,
नीचैर्निखातैर्निभृतं नगेषु ।
महार्ह - माणिक्य - मणी - जनीभिः,
यन्मेदिनी मेदुरिता खनीभिः, ॥ २२ ॥

रणाजिरोत्कण्ठित - वाजि - राजिम्,
अचिन्त्य - विद्वेष्टृ - बल - प्रवेशम् ।
धी - दोर्बलाक्रान्त - दिगन्तदेशं,
मध्यप्रदेशं मनुजा यमाहुः ॥ २३ ॥

दिशास्वनुल्लङ्घित - सन्निदेशः,
समन्ततः सैनिक - सन्निवेशः ।
एष प्रदेशः प्रणयी प्रजानां,
धीरं दधे धर्मधुरां धरण्याम् ॥ २४ ॥

पूर्वं पवित्रासु पुरीषु गुण्या,
स्मृताऽप्यघानां जयिनीति पुण्या ।
विराजते सोज्जयिनीह यस्यां
कृतालया ब्रह्मपदं श्रयन्ते ॥ २५ ॥

श्रीकालिदासस्त्रिदिवाधिवासः,
स्वप्नेऽभ्युपेतः स्वजनैः समेतः ।
व्यावर्णयत् तां च तदेव तथ्यं,
कथ्यं मयाऽद्येव निरीक्ष्यमाणम् ॥ २६ ॥

विडम्बयन्तीन्द्रपुरी - विभूतिं,
मनोहरा मध्यमणी स्रजो वा ।
आभाति देशस्य यथार्थमेव,
या देहिनी किन्त्वधिदेवतेव ॥ २७ ॥

साऽभूदवन्तीत्यपराऽभिधाना,
राष्ट्रस्य केन्द्रं स्थिरराजधानी ।
अशेष - देशस्य ललाट - लेखान्,
ममार्ज यस्यां च ससर्ज भूपः ॥ २८ ॥

मध्ये महाकाल - महेश्वरेण,
साऽध्यासिता हन्त ! तपस्विनीव ।
स्थिरासना तं हृदये निधाय,
ध्यायन्त्यजस्रं नगरी विभाति ॥ २९ ॥

सीम्नः समीपेऽल्पजलाऽत्र सिप्रा-
ऽक्षिप्रा समन्त्वाप्लव - तृप्तविप्रा ।
साक्षान्महाकाल - सटाऽवतीर्णा,
स्रोतस्विनी सा सुरसिन्धुरेव ॥ ३० ॥

अस्याः सदा सद्रव - सत्त्वसारैः,
प्रायः पयोभिः परिमृष्टपङ्का ।
पुरी परामर्शन - पाविता वा,
पूज्यास्पदं प्रत्यर्थिनां प्रपन्ना ॥ ३१ ॥

कुलङ्कषा केन न कीर्तनीया
सदा स्तुताऽसौ कवि - सार्वभौमैः ।
येषां यशोभिश्च विजृम्भमाणैर्,
गृहीतगर्भाः ककुभो लसन्ति ॥ ३२ ॥

साऽङ्के समारोप्य पुरीं विशालां
वालामिवैनां मृदुलैः समीरैः ।
लोली - विलासैर्लहरी - लयैश्च,
ग्रीष्मागमे लालयतीव रात्रौ ॥ ३३ ॥

तोयैस्तदीयैः पवनोर्मिमुक्तै-
रेषाऽभिषिक्ता महिषीव मन्ये ।
पवित्रिताऽर्हत्तम - राजधानी -
पदं प्रपेदे प्रथितं पृथिव्याम् ॥ ३४ ॥

युग्मकम्

क्वती परिष्वङ्गमवाप्य तस्याः,
समीरणः सीकर - सार - सेकैः ।
मृष्टाङ्गरागांश्च निशासु शीर्णा-
नुल्लाघयन् पौर - वधू कपोलान् ॥ ३५ ॥

चुम्बन् गृहाराम - लताश्च पश्चात्
पेप्रीयमाणो विशिखाङ्गसङ्गैः ।
शंशम्यमानः शनकैः पताका-
वराम्बरैः खेलति मन्दिरेषु ॥ ३६ ॥

तदीय - पानीय - कणावसेकैः,
स्वैर - स्वरो मान्त्रिकवत्समीरः ।
रुद्धोऽपि रोधस्तरुभिर्नगर्याः,
जहर्ति जातान् व्यसनाऽवरोधान् ॥ ३७ ॥

सा शीतला वीचि - करैरुपेतान्,
मन्दैश्च नादैरभिनन्दयन्ती ।
रोमाणि तेषां तनुषु प्रसुप्ता -
न्युद्बोध्य नूनं कुरुते स्थितानि ॥ ३८ ॥

तोयेऽदसीये स्फटिक - प्रसन्ने,
बाला विवासा अवगाह - काले ।
मत्स्यो यथाऽलं तरलास्तरन्त्यो,
निमज्जयन्तीव मनः परेषाम् ॥ ३९ ॥

निदर्शनं किञ्चन चारुतायाः,
प्रमाणपत्रं विधि - कौशलानाम् ।
इहैव काचित् कविकल्पनानां,
सन्तीर्य सीमान्तमिव स्थितासीत् ॥ ४० ॥

एकाऽत्र तोये प्रतिबिम्बिताङ्गी,
प्रतीयते मूर्तिमतीव कान्तिः ।
धारेव तीक्ष्णा स्मरसायकस्य,
स्वान्ते रयस्यापि बलान्निविष्टा ॥ ४१ ॥

स्नाता सवेशा सित - सूक्ष्म - सिक्त-
सक्तांशुकाङ्गा तरुणी तटे किम् ?
सद्यो निशातं प्रलयङ्करं वा
मीनध्वजेनेदममोघमस्त्रम् ? ॥ ४२ ॥

अकालकालादकुतोभयाना-
मत्येति कालोऽत्र हि नागराणाम् ।
कालस्य कालः प्रहरीव येषां
जागर्त्युपान्तेऽनलसः क्षपाहम् ॥ ४३ ॥

अनायि लोकः सकलः स्वरूपतां,
विभूति - भूषेण दयास्पृशा दृशा ।
कुल्या अकुल्या अत एव तुल्याः,
विभूतिमन्तो नगरौकसोऽस्याम् ॥ ४४ ॥

भूम्ना विभातेष्विह होम - धूम-
स्तोमैर्वृतं व्योम निवात-धीरैः ।
विभाति विष्वग् व्यवधीयमानं
कालैर्महाकाल - जटाकलापैः ॥ ४५ ॥

सवेषु यस्यां च महोत्सवेषु
किरन्ति कर्णेषु किमप्यवाच्यम् ।
पौराङ्गनाभिः कलकण्ठिकाभिर्
जेगीयमानानि सुमङ्गलानि ॥ ४६ ॥

सुख्याश्च मुख्याः श्रिय एतदीयाः
गेया अमेया गिरया कया मया ।
पुरन्दरस्यापि पुरा पुरी या
प्रस्पर्धमाना प्रतमा प्रतीयते ॥ ४७ ॥

द्वारैरुदारैः सुषमैरगारैः,
सुधा - सुधौतैः खचिताऽतिवेलम् ।
सौभाग्य-गर्वाममरावतीं सा,
हसन्त्यहो ! भात्यनिशं सहेलम् ॥ ४८ ॥

नानानिधानैः कृतसंनिधाना,
व्याप्ता दिगन्तागत - राजराजैः ।
समर्धिताऽसौ धनदैः कुले कुले,
स्वसाऽलकाया नियतं वरीयसी ॥ ४९ ॥

निशासु नैवार्गलितैः सुरम्यैः
सा वासवावास - विहासि - हर्म्यैः ।
लोकैर्विशोकैश्च गुणीकृताभा,
निर्वर्ण्यते नित्य - नवोत्सवैव ॥ ५० ॥

अभ्रंलिहोत्सेधमरुत्सु यस्यां,
सौधेषु सौवर्ण - घटीतटेषु ।
ध्वजाग्र - हस्ताः स्फुरितोर्मिनादाः,
आगामुकाऽऽर्त्तीरिव वारयन्ति ॥ ५१ ॥

शालासु वाचस्पतिभिः प्रभूतैः,
गिरैव भूतैः कविभिश्च पूतैः ।
सूच्यग्र - विध्यद्धिषणैश्च सेव्या
परा पुरी साऽपि कथं न दिव्या ॥ ५२ ॥

हा ! हेति नादा इह साम - गाने,
परोपताप - प्रभवा न तावत् ।
वाष्पोदयो होम - कृशानु - धूमैर्,
न चाधिभिर् दैन्य - समुद्भवाभिः ॥ ५३ ॥

उद्गीथ - वेद - ध्वनिभिश्च यस्यां,
पुरौकसोऽपोढ - समस्त - पापाः ।
संसारमुत्सृज्य विशन्त्यशङ्काः,
स्वः - सुन्दरी - सङ्गम - वाटिकासु ॥ ५४ ॥

न द्वन्द्व - दुःखैर् दलिता दुरन्तैः,
पौरास्तथाऽस्यां श्लथ - सौष्ठवा नो ।
न वैभवाभोगज - भूरि - भव्य -
भू - भोगभाजोऽपि मदाऽभिभूताः ॥ ५५ ॥

वित्रासित - त्राण - परायणानां,
वीरोत्तमानामिह गर्जितानि ।
उत्साह - शक्तेः पिशुनानि विष्वग्
विभीषिका - गर्व - विवर्जितानि ॥ ५६ ॥

शालीन - शीला महिलाऽतिरूपा,
विलासिनी मन्थज - पेशलाङ्गी ।
गृहे गृहे काम - कलत्र - चित्ते,
सापत्न्यमुन्मुद्रयतीव यस्याम् ॥ ५७ ॥

अर्हत्तमान्यत्र वपुष्मतीनां,
मुखान्यतुल्य - द्युतिमन्ति मत्वा ।
उपासितेवाऽनुदिनं वराकः,
पृथ्वीं परिक्रामति शीतरश्मिः ॥ ५८ ॥

तपस्विभिस्तामरसैस्तु तीव्रं,
तटाक - तोयेषु तपश्चरद्भिः ।
तौल्याप्तयेऽभावि वराङ्गनास्यै-
रद्यापि चाल्पेतर - शेषयत्नैः ॥ ५९ ॥

क्रियत्कठोराः सुभगा इहत्याः,
कूर्पास - सन्नद्ध - हृदः स्वयं तु ।
नेत्रत्रिभागैर्हृदयानि यूनां,
विध्यन्ति मुष्णन्त्यपि मुग्धशीलाः ॥ ६० ॥

लज्जापटैरन्तरिताननानां,
जालान्तरालेष्वपि वा स्थितानाम् ।
नितम्बिनीनामभिचारि रूपं,
द्वैगुण्यमायाति न हीयतेऽस्याम् ॥ ६१ ॥

लोकोत्तरासेचन - सौभगास्ताः,
सौभाग्यभाजां सदनेषु येषाम् ।
तेऽन्ते यियासन्ति सुराङ्गनानां
नाके न सङ्केत - निकेतनेषु ॥ ६२ ॥

अखण्ड - कौमार - निसर्ग - सौम्यैः
रूपैरचिन्त्यैः पुरि पूरितायाम् ।
निवेशिनां वीथिषु देशिकानां
स्याच्चाक्षुषी कांचन पारणाऽस्याम् ॥ ६३ ॥

लावण्य - कुल्याः प्रमदा इहत्या
हत्यासु दक्षा युवजीवनानाम् ।
सकृद् यदाभा - वशतामुपेता-
स्तृष्णोपतापैरनिशं व्यथन्ते ॥ ६४ ॥

व्यापाद्य कामं समवाप्तकामो,
वृथा महाकाल इह स्थितोऽसौ ।
कामोऽत्र तु प्राणयितोऽङ्गनाभिः,
कुले कुले केलिकलाः करोति ॥ ६५ ॥

कान्तेषु कान्तालक - कण्टकेषु,
संश्लिष्ट - हृद्भावशता विलासिनः ।
सरन्ति किं वा न सरन्ति यस्या
वीथिष्वसम्बाध - निराकुलास्वपि ॥ ६६ ॥

मर्मस्पृशो ये विषयाः कवीनां,
स्फुरन्ति तेऽस्यां वरवर्णिनीनाम् ।
अद्यापि वात्स्यायन - शिक्षकाणां
चारुण्वहो ! चाक्षुष - चेष्टितेषु ॥ ६७ ॥

बालोत्तमानां मदिरेक्षणानां,
चित्ताभिचारा मदिरालया दृशः ।
आचम्य यास्ते वशिनोऽपि दूरतो,
यस्यामकाण्डे मदयित्नवः स्युः ॥ ६८ ॥

दृष्ट्वैकदैवात्र वराङ्गनाङ्गं,
कविर्विराको जडिमानमाप्तः ।
चिरात् प्रबुद्धः पतितः प्रतोल्या-
मुद्विग्नं - पान्थैः परिवार्यमाणः ॥ ६९ ॥

लावण्यमस्यां ललनोत्तमानां
वीक्ष्याऽतुलं लोलविलोचनानाम् ।
अपक्वता - मुग्ध - मतेरवश्यं,
रिक्तो विधेः रूपनिधिः प्रपन्नः ॥ ७० ॥

स्वोऽमोचि यो वासवदत्तयाऽस्यां
सौन्दर्य - दायो नियतं तदीयाः ।
सौशील्य - सात्मीकृत - मुग्धलीला
इमा भवन्त्यंशहरा महीलाः ॥ ७१ ॥

वादित्र - मिश्रैः कलकण्ठगीतैर्
लास्योल्लसन्नूपुर - शिञ्जितैश्च ।
निशीह सौधोपरि - भूमिकासु,
प्रबोध्यते पञ्चशरः प्रसुप्तः ॥ ७२ ॥

कलान् कलाच्यां कटकान् दधाना,
कुमारिका काऽप्युपवीणयन्ती ।
बालैकलाऽत्र स्वयमेव तन्वी,
गीति-प्रवीणा प्रतिभाति वीणा ॥ ७३ ॥

अगण्य - पण्य - क्रय - विक्रयार्थं,
गतागतैर्देश - विदेश - जातैः ।
कोलाहलाऽऽध्मात - महापणाऽसौ,
रेरिच्यते नाऽपि च पूर्यते पूः ॥ ७४ ॥

संलक्ष्यते श्रीर्मुषिताऽङ्गनाभिर्
विलुण्ठितश्चाढ्यजनैः कुबेरः ।
कुतोऽन्यथाऽस्यां हि सुवर्णसम्पत्,
संदृश्यते सम्प्लववत् समन्तात् ॥ ७५ ॥

सन्मन्दहासा मृदु - चिह्नासा,
लवङ्गरत्नोल्लसित - प्रभांशुभिः ।
बाला वयस्यान् विहितान् वशेऽस्यां,
नस्योत - जन्तूनिव नर्त्तयन्ति ॥ ७६ ॥

गोणीष्वितो याति कुतोऽपि खाद्यं,
द्रोणीषु तैलासव - माक्षिकाद्यम् ।
आनीयतेऽन्यत्र च चैलजातं
चेचीयते वस्तु ततश्च लातम् ।। ७७ ।।

बद्धाः कुटाग्रे शकटे कटाहाः,
वाहाः खराः खेसर - भारवाहाः ।
फेनं वमन्तः समया मयाश्च,
स्ववाट - भाटं प्रतिपालयन्ति ॥ ७८ ॥

वीक्ष्याऽत्र वाजी बहुधा वराकीं,
स्वैरं सकाशाद् वडवां व्रजन्तीम् ।
पूर्वं सुशीलोऽपि च भग्नकीलकः
तां ब्रह्मचारी सहसाऽनुधावति ॥ ७९ ॥

प्रायो विपण्यो विशिखाश्च यस्यां,
विष्वग् व्रजद्भिर् वलिता वणिग्भिः ।
स्वैरं सरद्भङ्गुर - वाहिनीनां,
विडम्बयन्तीव पयः - प्रवाहान् ।। ८० ॥

सौधैः सिता सैनिक-सङ्घ - संस्थैः,
सीम्नां समीपे पटमण्डपैः सा ।
व्यूहस्थितैर्मण्डलिता समन्तात्,
सुधांशु - मूर्त्तिः परिवेषिणीव ॥ ८१ ॥

पादात - पङ्क्तेरिह पादनादैः,
पलायते कातरता खुरल्याम् ।
संहूतिभिर्विक्रम - दूतिकाभिः,
प्रतायते चाऽऽतुरता जयाय ॥ ८२ ॥

भ्रमन्ति भूतानपि भीषयन्तः,
भुजेषु भूयो भृतभीमभल्लाः ।
मृधेऽरि - मिथ्या - मद - मर्दनाय,
मुष्टिन्धमा मेदुरिताश्च मल्लाः ॥ ८३ ॥

विक्रान्त - घोषैर् उपबृंहितानि ।
ततः प्रभिन्न - द्विप - बृंहितानि ।
एषा च युद्धाभिगमार्थमेषा,
ह्लेषा तताऽधीश्वर - मन्दुरायाम् ।। ८४ ।।

शाक्तीका इह निर्भीका याष्टीका वीरमानिनः ।
धनुष्मन्तोऽतुला लोके वपुष्मन्तः पराक्रमाः ।। ८५ ।।

प्रासिका वर्मिणः क्रूराः शूराश्चर्मिण आसिकाः ।
समराय सदा सज्जाः सर्वे संशप्तक - व्रताः ।। ८६ ।।

जयं वा प्रलयं वाऽऽजावीहन्ते समितिञ्जयाः ।
आत्मयाजिन एवैतेऽभया वैरिषु निर्दयाः ।। ८७ ।।

वीरा विदन्त्यत्र यदुग्र - शस्त्रैर्,
भवन्ति राष्ट्राणि सुरक्षितानि ।
स्युरन्यथा मान्द्य - मलीमसानि,
अग्नध्वजानीतर - भक्षितानि ।। ८८ ।।

घर्षन्ति कौण्ठचोरद्धणाय बाणान्,
शाणात्र एकत्र तथा कृपाणान् ।
पाषाण - पट्टेषु परत्र पूजा—
परायणाः पुण्य - पटीर - खण्डान् ।। ८९ ।।

क्वचिद् वयस्य - द्वय - कोशपानं,
क्वचिद् बहिर्विग्रह - वीर - पानम् ।
पौरैः प्रशान्तैश्च परं परत्र,
विधीयते देव - पदाम्बु - पानम् ।। ९० ।

एकाग्रता क्वापि धनुर्धराणां,
लक्ष्येष्वभुग्न - स्थितिमच्छराणाम् ।
सायुज्य - लाभाय तथेष्ट - देवे,
क्वचिद् यतीनामचलन्मतीनाम् ।। ९१ ।।

सामग्र्यमग्र्यं　　कतिकालमस्याः,
निगाद्यमद्यापि　　गिरामगम्यम् ।
याऽऽस्ते　　नगर्यास्त्रिदिवेश्वराणां,
पुरी　　पृथिव्यां　　प्रतिमूर्तिरेव ॥ ६२ ॥

रङ्गे काममवेक्ष्यते बलवतां शस्त्रास्त्र - चर्याऽनिशं,
प्रत्येकं सदने च विक्रमकथाः सद्धर्मनिष्ठाजुषाम् ।
कारुण्य - क्रतु - दीक्षिता मृदुहृदोऽहिंसाव्रताः साधवः,
वाञ्छन्तीह समेऽपि हर्षमतुलं ते सार्वभौमं परम् ॥ ६३ ॥

इति श्री-वसन्तराम - पाराशर - तनुजनुषा कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव-पाराशरेण प्रणीते
'त्रिवेणी' इत्याख्ये महाकाव्ये, उज्जयिनी-
वर्णनाभिख्यो द्वितीयः सर्गः पर्यवसन्नः ॥

# तृतीयः सर्गः

एकत्र देशे सकलाऽऽर्यजातिः,
प्रोता यया मौक्तिक - मालिकेव ।
वैयासिकी सूत्र - परम्पराऽसौ
समुद्धरेन्नो भवकूप - मग्नान् ॥ १ ॥

प्रदेश - पाल्या धुरि कीर्तनीयो,
राराज्यते पञ्चनदोऽत्र धन्यः ।
यस्योर्वरायां भुवि शौर्य - शौण्डा
गृहे गृहे मानधना युवानः ॥ २ ॥

अस्यैकदेशो बल - विक्रमाढ्यः,
पद्मांश इत्येव हि 'ला-लवा'ऽऽख्यः ।
संहूति - हुङ्कार उदायुधः सन्
सज्जः सदा सङ्गर - सङ्गमाय ॥ ३ ॥

राष्ट्रं विकीर्णं परितो विशीर्णं
प्रागेव जीर्णं विधि - दुर्विलासात् ।
बभूव चात्मम्भरिभिर्महीपैः
प्राज्येषु राज्येषु पुरा विभक्तम् ॥ ४ ॥

निर्वर्ण्य तां देश - दशां दुरन्ता-
ममर्ष - विस्फूर्जित - तेजसस्ते ।
व्यपोहितुं तत्तिमिरं त्वरातुरा-
स्तुरङ्गिणस्तूर्य - रवैः प्रतस्थिरे ॥ ५ ॥

दुर्दान्त - दुर्वृत्त - दलान् दलन्तो
दोधूयमाना दरितान् दिगन्तान् ।
सर्वङ्कषा स्वैर - विहारिणी च ते
सर्वत्र शास्ति विदधुर्जयिष्णवः ॥ ६ ॥

प्रवर्धमाना प्रलयाम्बुवाहा
वाहा पुरस्ताद् विषयेषु तेषाम् ।
प्रमिश्र - वित्रासन - रौद्रहेषाः
शौर्यावदानान्यलिखन् खुराग्रैः ॥ ७ ॥

ते खड्ग - खेट - प्रखर - स्वनेना -
ऽऽदेशं द्विषां दिक्षु निवेशयन्तः ।
यतस्ततोऽभ्येत्य जिति - श्रियाऽऽसन्
समाश्रिताः केसर - सूनवर्षैः ॥ ८ ॥

प्रत्यङ्गमाघात - विमुद्रितानि
किण - व्रणाङ्कोल्लिखितानि तेषाम् ।
प्रशस्ति - पत्राणि यथा जयानां
वपूंष्यभिख्यां बिभराम्बभूवुः ॥ ९ ॥

ते पत्रभङ्गान् ककुभां कपोल-
स्थलीषु शस्त्राग्र - रिपुक्षतास्त्रैः ।
शौर्येतिहासानथवा लिखन्त
उत्पातवातोपमितिं वितेनुः ॥ १० ॥

एतद्भटाटोप - घटाऽऽरटीभिर्
दिक्चक्रवाले मुखरान्तराले ।
विपन्न - विद्वेषि - बलाऽबलानां
विलापितोऽभूद् विपुलो विलापः ॥ ११ ॥

इत्थं प्रजानां परिपूरिताशैः
कथा - प्रथाभिश्च समाचिताशैः ।
तैरेकसूत्र - ग्रथितः स्वदेशो
विधूय बाधा विविधा व्यधायि ॥ १२ ॥

अनुक्रमं ते जगतीं जयन्तः
पञ्चाम्बु - वीरा समरेषु धीराः ।
चिकीर्षवः स्थास्नु दृढं च राष्ट्रं
मध्य - स्थितामुज्जयिनीमुपागुः ॥ १३ ॥

बलेषु नित्यं रणमित्वरेषु
विक्रान्त - बाहुल्य - विजित्वरेषु ।
अवार्य - वीर्यः सुभगः समेषा-
मेषामभूद् 'विक्रम' इत्यभिख्यः ॥ १४ ॥

नासीर - चारी रणचत्वरेषु
स सर्वदा सर्वपथीन एकः ।
युद्धोत्कटानां द्विषतां भटानां
धैर्याण्यबभ्भज्यत सिंहनादैः ॥ १५ ॥

तमायुधीया युधि मालवीयाः
आरम्भतोऽभीकमनीक - नायकम् ।
महाबलाऽऽजानुभुजं तितिक्षुम्
अमीमनन् देवमिवार्चनीयम् ॥ १६ ॥

अथैकमत्येन शुभे मुहूर्त्त
तमिष्ट - लग्नोदय - राशियोगे ।
तैर्थैः पयोभिस्त्वरयाहृतैस्ते -
ऽभ्यसीसिचन् याचक - कल्पवृक्षम् ॥ १७ ॥

तैः शीतपूतैः पतितैः पयोभिः
पङ्कानि पार्थस्य पराकृतानि ।
रोमोद्गमेनाऽथ सहैव तावत्
पुण्यानि चाऽप्यङ्कुरितानि तानि ॥ १८ ॥

भद्रासनं तत्र चतुष्पदं तद्
अध्यासितेऽस्मिन् श्रुत-शौर्य - शीले ।
दिशश्चतस्रोऽप्यनुभाव - भूम्ना
दोधूयमाना दमिता बभूवुः ॥ १९ ॥

छत्रेण तस्यातप - रेणु - वृष्टि -
व्याघात - बाधा बहुधा विधूताः ।
देवैरिताश्चापद ऊर्ध्वलोकाद्
विशाल - ढालोपमितेन रुद्धाः ॥ २० ॥

महीमघोनो मुकुटोऽस्य मौलौ
पुरोहितेन प्रथमं पिनद्धे ।
मनोज - मुख्या मतिमोह - मूला
द्विषोऽपि बद्धा वशगा बभूवुः ।। २१ ।।

दासीद्वयान्दोलित - चामरीभ्यां
संमार्जनीभ्यामिव तस्य तूर्णम् ।
ग्ररुन्तुदान्युद्धत - कण्टकानि
हृद्देश - निष्ठानि विशोधितानि ।। २२ ।।

पुरातनानां पृथिवी - पतीनां
प्रेष्ठः प्रजापालन - पेशलानाम् ।
पाप - प्रमाथाय स पुण्य - पण्यः
प्रायः प्रणुन्नः परमेश्वरेण ।। २३ ।।

स तस्थिवांस्तत्र जगद्धिताय
प्रिय - प्रजो 'हर्ष' इति प्रतिष्ठः ।
मानोन्नतो मानयिता गुणानां
शशास राष्ट्रं नृप - सार्वभौमः ।। २४ ।

स मेचकैः कुण्डलितैश्च केशैर्
विधूपमोद्वृत्त - लसल्ललाटः ।
प्रसन्न - पञ्चानन - चारुचक्षुः
श्मश्रुच्छटाच्छन्न - कपोल - पालिः ।। २५ ।।

निमग्न-जत्रुः कलहंस - कण्ठः
भेरुण्ड - शुण्डाभ - विशाल - बाहुः ।
विस्तीर्ण - वक्षा वृष - मांसलांसः
त्वष्ट्रा भृशं शात - कटि - प्रदेशः ।। २६ ।।

जयश्रियाः स्यात् परिरम्भणैः पुनः
पदे पदे पिच्चितमस्य वक्षः ।
यदेकलं कोट - कपाट - कल्पं
रूढान् रणाद् - राष्ट्र - रिपून् रुरोध ।। २७ ।।

क्लेशं विदेशाद् विषये विविक्षुं
विदूरतो वारण - वाञ्छयेव ।
विनिर्ममे व्यायत - बाहुयुग्मं
महार्गलाभं विधिना विशेषम् ॥ २८ ।

तद्व्यासचक्रे सुदृढे जयश्री
स्थास्नुर्निबद्धेव च राजलक्ष्मीः ।
सुमन्त्र - कारा - यमिते व्यमुञ्चतां
चाञ्चल्यमेत्याऽथ नु कान्त - सङ्गम् ? ॥ २९ ॥

सिंहासनं रत्नरुचाऽतिरम्यं
रौक्मं रमावासमिवाऽधितिष्ठन् ।
स राजसिंहः स्मित - मुग्धमाऽश्चर्यो
बभार सैंहीं सुतरामभिख्याम् ॥ ३० ॥

तस्मिंस्ततो दण्डधरे पटिष्ठे
लब्धप्रतिष्ठे कुहकोपमाने ।
आशान्त - विश्रान्त - बलाऽनुभावे
हस्तङ्गतोऽजायत भूत - सर्गः ॥ ३१ ॥

तच्छासने चैकपदे बभूवुर्
गावो घटोध्न्यश्च समांसमीनाः ।
प्रजाः पुनः पुण्य - पथे प्रवृत्ता
उत्सृष्ट - माध्वी - रस - मांस - मीनाः ॥ ३२ ॥

ववर्ष सम्यक् समये पयोदस् -
तत्याज भीतेव च राष्ट्रमीतिः ।
वसुन्धरा सस्यधराऽस्य चक्रे
चक्रे न किं माङ्गलिकी सुनीतिः ॥ ३३ ॥

आशाः प्रकाशा विमलं विहायः
सौम्यः समीरः समभूच्च सूरः ।
प्रतापरश्मि - प्रकरेण तस्य
न्यग्राहि नूनं सचराचरं तत् ॥ ३४ ॥

विशां पतिर्वांपि दिशां पतिः सः
शनैः शनैः शेष - नरेश - देशान् ।
द्राग् दण्डदानैर्दमयन् दविष्ठान्
नीत्या नवीनान् नमयाम्बभूव ॥ ३५ ॥

द्योती दिनेशो दिवि दूरदेशे
स्मेराणि साध्नोति सरोरुहाणि ।
एवं समेषां समभूत् सुखाय
स सिन्धुसीमाऽवधि सार्वभौमः ॥ ३६ ॥

प्रान्त - प्रजापीडन - पाटवेषु
चाटेषु चौरेष्वथ चाक्रिकेषु ।
उल्केव वेगी रिपु - घस्मराऽस्त्र-
श्चस्कन्द सद्यो जनवत्सलोऽसौ ॥ ३७ ॥

चण्ड - प्रदीपेऽप्रतिमे महीपे
द्वीपान्तरीपेष्वपि जाग्रतीह ।
प्रगल्भता - दीर्घदृशो न शालभीं
दशां द्विषन्तः क्व नु हन्त ! लेभिरे ? ॥ ३८ ॥

धरेश एवाऽऽस्त ततो हि देशो
देशोऽभवत् सङ्कुचितो धरेशः ।
देशस्य दौःस्थ्यं तत एव चाऽसौ
स्व - देह - दुःखादितरन्न मेने ॥ ३९ ॥

तस्मात् प्रजानां प्रतिभू - सरूपे
भूपेश्वरे छत्रतले निषण्णे ।
देशोऽप्यशेषो निषसाद चैक-
च्छत्रस्य नीचैः शमितोपतापः ॥ ४० ॥

मतान्तरे प्रान्तमशान्तमन्त -
श्चिकीर्षवः साऽसिकरा नृशंसाः ।
आस्कन्दनं चक्रुरिततस्ततो वा
विनाशकाः कारणतो विना शकाः ॥ ४१ ॥

आक्रम्यमाणा जनता वसन्ती
सीम्नः समीपेऽनिशमुल्लसन्ती ।
आक्रान्दितैर्व्यञ्जित - सर्वनाशा
हा ! ऽऽशा अपोपूर्यत वेपमाना ॥ ४२ ॥

दहन्निशान्ता दरिता अशान्ताः
भ्रान्ताः सतोकाः परितोऽपि लोकाः ।
कर्त्तव्य - मूढा गहने निगूढास्
तस्थुः शरण्यं प्रतिपालयन्तः ॥ ४३ ॥

शुष्यद् - गलानां भय - विह्वलानाम्
प्राणा अपीयुः शुषिकां जनानाम् ।
स्वेदेन गात्रेषु तु सिक्तताऽस्त्र-
रालोचि गल्लेषु च लोचनेषु ॥ ४४ ॥

ग्रस्ताञ्चलाभिः सममम्बिकाभी-
रोरुद्यमानाः शिशवो विशीर्णाः ।
स्वाऽम्बालिका एव समाह्वयन्तो
हा ! ऽरोदयन् स्थावर - जङ्गमानि ॥ ४५ ॥

जाताऽङ्ग - भङ्गा अभवन्नटङ्गा
द्रोतुं न लङ्गाः प्रभविष्णवो ये ।
नोनुद्यमाना इव तोदनैस्ते
वेगाद् ययुर्वेगतरं श्वसन्तः ॥ ४६ ॥

दोद्रूयमाणानवलोक्य लोकान्
द्विजा द्रुमेभ्यो वियति व्यसर्पन् ।
मत्वा च तच्छन्दमराति - धाटीं
ते कान्दिशीका न ययुर् न तस्थुः ॥ ४७ ॥

पद्भ्यां प्रणुन्नं पथि पांसु - पूरं
सेसिच्यमाना नयनाम्बुवाहैः ।
पश्चात् परावृत्य परं प्रियं वा
प्रैक्षिष्ट हा ! हा ! जनता न कञ्चित् ॥ ४८ ॥

सर्वेऽप्यहम्पूर्विकया मनोभिस्
तथा भयादाश्वदिधाविषंस्ते ।
यथा स्वगात्राण्यपि भारवन्ति
मत्वाऽमुमुक्षन् पदवीषु पश्चात् ॥ ४९ ॥

श्वासा अमीषामथ दण्ड - दीर्घा -
स्तेभ्योऽप्यहो ! तीव्रतरं त्रसन्तः ।
मन्ये मुहुर्निष्क्रमणाऽभिलाषाः
प्राक् तन्मनोभ्योऽप्ययतन्त यातुम् ॥ ५० ॥

पुनः स्खलन्तश्च समुत्पतन्तो
लघु - क्रमाः क्षुद्र - पदाश्च बालाः ।
उद्वेग - वेगान् द्विगुणानगत्या
दधुर्वराकाः पुरुषान्तरेभ्यः ॥ ५१ ॥

नतोन्नतेषु द्रु - नखाऽऽवृतेषु
लोष्टेष्टका - प्रस्तर - दन्तुरेषु ।
पथेष्वधावन् प्रमदा रुदन्त्यः
शिरीष - मृद्व्योऽह्ह ! शून्यपादाः ॥ ५२ ॥

बाला-क्षताऽङ्घ्रि - क्षतजाङ्किताना
मार्गोपलानामपि निष्ठुराणाम् ।
दीनां दशां तां हृदयानि दृष्ट्वा
दीर्णान्यभासन्त पदे पदेऽद्य ॥ ५३ ॥

स्मृत - प्रजापैरमिताऽभितापैस्
तासां विलापैरनुनादितानि ।
गेहानि यद्वा गिरि - गह्वराणि
प्रारोदिषुः किं न सहानुभूत्या ? ॥ ५४ ॥

सासज्यमाना वसनेषु चाऽऽसां
ते कण्टका द्राव - विलम्ब - मूलाः ।
आजन्मिवद्भ्यः शक - कण्टकेभ्यो
भूयस्तरां क्लेश - करा अभूवन् ॥ ५५ ॥

स्खलत्पदानां विपदास्पदानाम्
पश्चात् पुनः प्रेक्षण - तत्पराणाम् ।
शब्दाः स्व - गत्यैव समुद्भवन्तस्
त्रासं तदासां गुणयाम्बभूवुः ॥ ५६ ॥

द्विषां विरावैरसि - दीप्तिभिश्च
सद्योऽद्य शून्यीकृत - चेतनानाम् ।
विस्फूर्जितं वारिमुचां न विद्युद्-
विजृम्भितं भीतिकरं बभूव ॥ ५७ ॥

धूम्यामिषोन्नामित - दीर्घमस्तकाः
भूयश्च हिल्लोलित - हेति - हस्तकाः ।
गृहाश्चटत्कार - भयोच्चकैः स्वरैर्
उत्सादिता आजुहुवुर् धराधिपम् ॥ ५८ ॥

सोऽरुन्तुदं चार - मुखेन वृत्तं
निशम्य देशव्यसनं निशीथे ।
अरिन्दमः प्रागचिरात् प्रतस्थे
वरूथिनीनाथ - बलाऽनुयातः ॥ ५९ ॥

प्रयोज्यमानोऽपि स मन्त्रिमुख्यैः
प्रातः - प्रयाणाय न चानुमेने ।
खे स्फूर्जितैः किं नु घनाघनानां
दावेन दग्धासु वनस्थलीषु ॥ ६० ॥

लोके विनिद्रे स उपप्लवेन
नाऽलन्तमोऽभूत् सुखशायिकायै ।
कर्त्तव्यनिष्ठोऽनिश - जागरूकः
आस्थां भजेन्नेत्र - निमीलने कः ? ॥ ६१ ॥

सम्राट् कृत - स्वस्त्ययनः स साकं
तुरङ्गिभिः संङ्गर - सङ्गमोत्कैः ।
द्विष्टान्तकैः कौन्तिक - वीर - वर्यैर्
अवीविपद् गामपि तूर्यनादैः ॥ ६२ ॥

मोदाश्रुमग्नैरनिमेष - लग्नैर्
भक्त्या प्रजानां नयनैः कृतार्थैः ।
ग्रामाङ्गनाऽऽस्तीर्ण - सुमस्तरस्वी
मार्गेष्वविश्रान्त - भटश्चचाल ॥ ६३ ॥

उद्भावयन्त्यभ्रभर - भ्रमं सा
सेनोज्जिहानैः रजसां वितानैः
वपुष्मती दूरत एव काचिद्
उपद्रुतेभ्यो नृपसान्त्वनाऽभूत् ॥ ६४ ॥

अपूर्व - सर्वेश्वर - सादि - सेना
यथा यथाऽऽसन्नतरा बभूव ।
तथाऽन्तरालेन समं शकानां
जीवातु - कालस्तनिमानमागात् ॥ ६५ ॥

खुराहतीनां तुमुलैर्निनादैर्
भेरीभराणामथ भैरवैः रवैः ।
विक्षोभयन्ती लघु रोदसी चमूः
सा शाक - शौर्यं श्लथयाम्बभूव ॥ ६६ ॥

तमन्तकादेशमिवान्तिके ध्वनं
श्रुत्वैव शान्त - श्वसिताः शठाः शकाः ।
शरीर - शेषा अपि लज्जया मिथो
दिशो न भेजुर्विरता रणाऽजिरात् ॥ ६७ ॥

वेलेव विध्वंसक - वेग - वाहिनी
सा वज्रवद् विक्रम - वाजि - वाहिनी ।
विद्रोहिवृन्दे विपदां विधातरि
पपात कल्पान्तमुपानयन्ती ॥ ६८ ॥

श्येनाः शकुन्तेषु यथा मृगेन्द्राः
कुरङ्ग - सङ्घेषु यथा तथैव ।
शकेषु चक्रुर्द्रुत - झम्प - पातं
चमूचरा विक्रम - वाहिनीनाम् ॥ ६९ ॥

आजि - स्फुरद् - विक्रम - वाजि - राजि-
रध्यासिताऽनुत्तम - सैन्य - सारैः ।
शाकं दलं वेगवती विदित्वा
शाकं दलन्तीव पुरश्चचाल ॥ ७० ॥

प्रभोः पर - प्राणरसं पिपासन्
करे करालः करवाल - कालः ।
कृतान्त - जिह्वां क्षतजोक्षितां तां
विडम्बयामास विधूयमानाम् ॥ ७१ ॥

राजाधिराजो जनतार्त्ति - नाशकः
शत्रूनसङ्ख्यान् ग्रसिसाञ्चकार सः ।
सर्वत्र युद्धे समवेक्षितेन
तेनाहवेऽमोचि न कोऽपि ना शकः ॥ ७२ ॥

युद्धे स्फुरद् - विक्रम - सिंहनादै -
राक्रोश - वादैश्च भटोद्भटानाम् ।
विहाय हूता इव वैरि - कायान्
प्राणा भयार्त्ता बहिरभ्युपेताः ॥ ७३ ॥

शस्त्रेष्वमित्राः स्फुरित - प्रभेषु
बिम्बानि विश्वे वसुधाधिपस्य ।
आलोकमाना भय - भग्न - माना -
स्तं मेनिरे कालमिवाऽग्रतो विभुम् ॥ ७४ ॥

स्तब्धानि दर्पेण शिरांस्यरीणां
नतानि पार्थस्य पुरो न तानि ।
कृपाण - कृत्तानि पतन्ति पृथ्व्यां
स्वतः प्रणाम - प्रवणान्यभूवन् ॥ ७५ ॥

श्यामाऽस्रशोणैः शक-शत्रु - शीर्षैर्
लुठत्कबन्धैरपि विस्र - गन्धैः ।
कालाय सज्जीकृत - मुण्ड - माला
बभौ विशाला भुवि बध्यशाला ॥ ७६ ॥

ध्वस्तान्यहो ! द्वेषण - मस्तकानि
शूत्कारि - शस्त्राहति - भीति - हेतोः ।
शेषो धराधीश - चमूचराणां
यत्नो यथार्थं तु गतार्थ आसीत् ।। ७७ ।।

शस्त्रास्त्र - शीर्णोद्धत - शीर्ष - भालो -
द्वान्तैर्विशद्भिर् वदनेषु रक्तैः ।
फूत्कारिणोऽकारण - वैरि - वीरा
व्यधुर्वराकाः किमु वीरपाणम् ? ।। ७८ ।।

संघट्टमानायुध - सम्प्रसूता
बभुः प्रभूता नभसि स्फुलिङ्गाः ।
कोपाग्नि - लिङ्गाकृतयो भटानां
निस्साध्वसाऽव्याज - रणोत्कटानाम् ।। ७९ ।।

लङ्गैर्विहस्तैर् दलिताग्र - मस्तैर्
विशीर्ण - कर्णैश्च विदीर्ण - नासैः
सैन्यैः सदैन्यैः कलह - स्थलीयं
कीर्णाऽभवत् काचिदपाऽङ्गशाला ।। ८० ।।

द्वेष्यं कियन्मात्रमुपेक्ष्य गर्जन्
सम्राट् समुत्साहित - सादि - सङ्घः ।
सम्पूज्य सैन्यानथ साधुवादै-
रदीदिशद् वीर - वरूथनाथान् ।। ८१ ।।

विहाय शस्त्रमाश्रिताय विक्षताय शत्रवे
निरायुधाय वा रणाङ्गनात् पलायिताय वा ।
महोदयैर्दयामयैस्तितिक्षुभिस्तथाऽभयम्
अभीरु - वीरनायकाः ! भवद्भिरत्र दीयताम् ।। ८२ ।।

परं परोऽपकार - तत्परोऽथ सङ्गरोत्सुकः
क्षमां न भिक्षते क्षतौ न मन्युनाऽनुशोचकः ।
रुषारुणेक्षणोऽनतो न दीनतामितो यकः
शकः सको न हीयतां शिरस्तु तस्य दीयताम् ।। ८३ ।।

शकान्तका। शस्त्र - शयेन नामं
नामं समे श्रेणि - समाहिताङ्गाः
निशम्य लोकेश - निदेशमेवं
योधा। प्रवृत्ता अथ शत्रु - शोधे ॥ ८४ ॥

प्रभोर्वाहिनी वीरताया वहन्ती
तृणाभान् रिपून् धावतोऽग्रे वहन्ती।
युयुत्सून् ययौ कण्टकानुद्धरन्ती
प्रताप - प्रभावैस्तदाशा दहन्ती ॥ ८५ ॥

हेतिमत्या तयाऽकार्यसौ कोऽप्यनेहा।
हेति - निर्दग्ध - सीमाऽबल - ग्राम - गेहाः ।
हेति - शक्त्या शका भग्न - भूलुण्ठनेहाः
हेति-(हा+इति-) विच्छिन्न-वाचोऽभवन् मुक्तदेहाः ॥ ८६ ॥

प्रत्यर्थि - पाटच्चर - मण्डलेषु
सङ्ग्राम - भूमौ यमसात्कृतेषु।
गोमायु - गृध्र - श्वगणैः शवाऽशनैः
प्रारम्भि भूयः समरोऽपरो मिथः ॥ ८७ ॥

व्याप्ते खगैः खे मृत - मांस - लुब्धैः
प्रेतैः परीता समर - स्थली सा।
सान्द्राऽन्धकाराऽद्भुत - कालरात्रि-
क्रोडाञ्चलाऽन्तः पिहिता बभासे ॥ ८८ ॥

प्रागेधमानोद्धत - सिंहनादं
संख्य - स्थलं वल्गदसंख्ययोधम्।
प्रपञ्चयत् क्रूर - कृतान्त - शिल्पं
साक्षादभूत् सम्प्रति मृत्यु - चित्रम् ॥ ८९ ॥

प्रस्थान - काले समराय गेहाज् -
जानी - जनीभिः परिचुम्बितानि।
रक्तेन सिक्तानि शिवा अलिक्षन्
विक्रान्त - वक्त्राणि विचेतनानि ॥ ९० ॥

जिह्वा भटानां मुखरा महत्त्वं
विकत्थमाना युधि या अभूवन्
आः ! साम्प्रतं मूकिम - मुद्रितास्ता
गृध्रैरखाद्यन्त विकृष्यमाणाः ॥ ९१ ॥

महार्हं - मुक्तामणि - मण्डितानि
बलीयसां विक्रमिणां वपूंषि ।
मानेन मुक्तानि महीतले हा !
मृदा मृतानां मलिनीकृतानि । ९२ ॥

येऽनन्त - सम्पत्त्यधिकारभाजो
ऽभूवन् पृथिव्यां प्रथिता नृनाथाः ।
काया अमीषामधुनाऽसहाया
जाता अनाथा इव शेष - गाथाः ॥ ९३ ॥

गृध्रादिकान् द्रावयतां स - दन्त -
दर्शं मुहुर्योधयतां मिथश्च ।
शुनां कृत - व्यायत - घुर्घुराणाम्
महत्तमा खादतमोदताऽभूत् ॥ ९४ ॥

छिन्नैः प्रभिन्नैरथ लोहितेन
क्लिन्नैश्च गात्रैर्निचिता शकानाम् ।
बभावपूर्वा समर - स्थली पुं -
निर्माण - शालेव जगद्विधातुः ॥ ९५ ॥

लूनैश्च टङ्गैर्लघु - लाङ्गलाभैः
दन्तैर्गृहीतैः कृषका इवैके ।
तुष्टा रणक्षेत्रमिदं तरक्षा
वृका अकृक्षंश्च यथाभिलाषम् ॥ ९६ ॥

अत्रैव तावद् धरणौ रणस्य
सङ्कल्पितायां सुचिरात् प्रजाभिः ।
बीजं शुभं विश्वजनीनशान्ते-
रुप्तं सुगुप्तं विधिना बभूव ॥ ९७ ॥

द्विषां पालनार्हं - प्रजा - घातुकानां
स्वकैः पातकैर् नारके पातुकानाम् ।
अयं संपरायोऽभवद् दुर्विपाकः
क्व शिष्टो वराकः स योद्धाऽत्र शाकः ॥ ९८ ॥

आक्रामन् भुवनस्थलीं खरकरैर्लोकं समुत्तापयन्
प्राचण्ड्येन यतस्ततोऽनवरतं जैवं रसं शोषयन् ।
वैरी श्रीकरमण्डलानि बलवत् काष्ठासु च स्फोटयन्
आरोही स गभस्तिहस्त इव यो ध्वस्तोऽस्तमस्तं गतः ॥ ९९ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव-शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्याख्ये महाकाव्ये, 'शकातङ्कान्तक-
वर्णनम्' नाम तृतीयः सर्गः सम्पन्नः ॥



# चतुर्थः सर्गः

शिवाऽपि यस्य संसर्गात् संप्राप्ताऽभ्यर्हितं पदम् ।
शिवाय कल्पतां देवः कश्चित् पञ्चाननः स नः ॥ १ ॥

काश्मीर-देशे समयात् ततः पुरा
द्विड् - दाहनः कश्चन मेघवाहनः ।
बभूव यो भू - वलयस्य विश्व -
द्वीपाऽन्तरीपैः सहितस्य जिष्णुः ॥ २ ॥

प्रत्यर्थि - सार्थस्य रण - स्थलीषु
सामर्थ्य - याथार्थ्यमसौ प्रकाश्य ।
आशान्त - विश्रान्त - यशः - प्रकाशो
रेजे विवस्वानिव सार्वभौमः ॥ ३ ॥

स सौख्य - साम्मुख्यमुपेक्षमाणः
क्लैव्यं न वैक्लव्यमिहाऽऽललम्बे ।
वैदग्ध्य - दिग्धेन हृदा त्वजस्रम्
प्रजा ररक्षौरस - निर्विशेषम् ॥ ४ ॥

क्रमेण कुर्वन् द्विषतां दलानाम्
मुखान्यसौ म्लानिम - मीलितानि ।
अगाज् जुषाणो जनतां जयश्री -
कटाक्ष - पात - प्रथमाऽतिथित्वम् ॥ ५ ॥

आसिन्धु - रोधः सहसाऽऽव - रोधिनो
विरोधिनो देव - सखान् विधाय ।
स राजसिंहो लघु सिंहलादीन्
पराहतान् हस्तगतांश्चकार ॥ ६ ॥

निःशेष - देशेऽथ स वीक्ष्य विष्वक्
सत्त्वादिषु प्राणि - वधाऽतिरेकम् ।
सत्त्वानुकम्पी स्पृहणीय - चर्यो
वैकल्य - शल्यैर्विहतो बभूव ॥ ७ ॥

संत्यज्य सैन्याऽस्यसि - सम्परायान्
सर्वत्र सम्यक् स सुशील - शाली ।
क्षिति - क्षितः क्षान्तिमतो म्रदिम्ना
व्यधार्दहिंसा - व्रत - दीक्षितांस्तान् ॥ ८ ॥

पश्चात् प्रजासु प्रचुर - प्रचार -
प्राणि - प्रमाथ - प्रतिरोधनाय ।
प्रतिप्रदेशं पटहान् पटूंश्च
प्राताडयत् पुण्य - पथ - प्रवृत्तः ॥ ९ ॥

महार्णवाऽभ्यर्णमुपेत्य तेन
रतेन सायाह्न - बहिर्विहारे ।
निर्वर्णितोऽवर्ण - विवर्जितेन
देवालयः कश्चन कालिकायाः ॥ १० ॥

स तत्र देव्याः पुरतः कुमारं
दीनं नताऽऽस्यं शवराग्रगेण ।
जिघांसिनाऽऽभासि - खराऽसिना च
लक्षीकृतं लक्षितवान् कृपालुः ॥ ११ ॥

दृष्ट्वा द्रुतो दीन - दशां तदीयां
सोऽतर्जयत् तं शवराऽधिराजम्— ।
'रे ! गर्हितं मूढ ! विधित्सितं धिग् !
अमानुषं कर्म कुतस्त्वये'ति ? ॥ १२ ॥

तद् - धिक्क्रियाभिः शवरोऽवरोऽसौ
भूयो भयाद् वेपथु - विश्लथाङ्गः ।
खड्गं - विकोशं परिहृत्य जोषम्
भास्वन्मुखं भूभृतमाबभाषे ॥ १३ ॥

सूनुर्ममाऽग्रे कुल - मूलभूतो
व्यथामयेनैष तथाऽऽमयेन ।
चिरात् कुकूलानल - पच्यमानः
कालस्य कण्ठे तिलशः प्रयाति ॥ १४ ॥

ममाऽङ्गजेऽस्मिन् मरिमाणमाप्ते
सबन्धु - वर्गः सकलोऽन्ववायः ।
निष्प्राणवत्त्वं गमितो ध्रुवं द्राक्
कृशानुसाद् यास्यति दुःख - दूनः ॥ १५ ॥

राजन् ! रजन्यामिह निर्जरेण
स्वप्नेऽहमुक्तोऽस्मि कृपाकरेण ।
प्रदीयते यद् नृ - बलिस्त्वया चेद्
देव्यै भवेत् ते तनुजोऽरुजोऽयम् ॥ १६ ॥

सुस्थः सुतः स्यादिति साधु सर्वैर्
गवेषयद्भिर् गहनं गिरिं च ।
हीनो जनन्या जनकेन चाऽयं
दीनो मुमूर्षुः शिशुरापि सायम् ॥ १७ ।

एवं स्थितेऽस्मिन् भगवन् ! अनाथे
प्रजापते ! किं नु कृपां करोषि ? ।
उपेक्षमाणः श्वसितं कुलस्य
मरिष्यमाणं कृपणं सुतं मे ॥ १८ ॥

तन्मा स्म मेऽस्मिन् बलि-साधने भू-
स्त्वमन्तरायो दयया द्रुतात्मा ।
हितेन कालो च समीहितेन
पेप्रीयतां बालक - लोहितेन ॥ १९ ॥

कष्टेन नष्टेन तथा ह्यनेना -
ऽऽनन्दं प्रयास्यन्ति समेऽप्यमन्दम् ।
भूयस्तरां स्तूयत एव शस्तः
कृशस्य नाशेन भृशस्य लाभः ॥ २० ॥

बभाण भिल्लेन स भूभृदेवं
विज्ञापितो विश्वजनीन - वृत्तिः ।
वाढं वहद् - वाष्प - विलोचनेन
वध्येन वत्सेन विलोक्यमानः— ॥ २१ ॥

'किरात ! किं कातरताऽऽतुरत्वं
धत्से च किं वत्स ! वृथा व्यथां त्वम् ।
धुरीण - धर्मध्वज - धारकस्य
न क्लेश - लेशोऽपि ममाऽस्तु देशे ॥ २२ ॥

तत् ते तनूजोऽथ च वध्य - वत्सः
उभावपि श्रील - शुभौ भवेताम् ।
उपायनत्वेन मया स्वकीयः
कायः प्रदेयः किल कालिकायै ॥ २३ ॥

विधेहि तस्मादकुतोभयस्त्वम्
असिं समादाय मयि प्रहारम् ।
धर्मोऽयमित्येव तनुत्यजोऽद्य
प्रसीदतां मेऽपि तथाऽन्तरात्मा' ॥ २४ ॥

श्रुत्वेत्युदारां गिरमात्तसाराम्
महात्मनस्तस्य दयाम्बुराशेः ।
रोमाञ्चमञ्चन् कुतुकी किरातो
वाचंयमः प्राक् पुनरभ्युवाच ॥ २५ ॥

'अदृष्ट - पूर्वं किमपि त्वदीयं
कारुण्यमेतद्धि मही - महेन्द्र ! ।
व्यनक्ति लोके तु तवाऽतुलत्वम्
बुद्धेस्तथाऽल्पेतर - वातुलत्वम् ॥ २६ ॥

पराऽवधिं प्राप्य कृपा तवैषा
स्वात्मन्यलं निष्ठुरतामुपेता ।
शस्यं च रस्यं च तदेव मिष्टं
प्राज्य - प्रयोगे तु भवेदनिष्टम् ॥ २७ ॥

तत्किं वृथा पार्थिव - भोग - पात्रं
गात्रं लसद् - यौवन - लोभनीयम् ।
पुण्यैः पुराणैः प्रचुरैः प्रपन्नं
तुच्छस्य हेतोरसि लोप्तुकामः ? ॥ २८ ॥

धनानि धर्मानथ धर्म - दारान्
सम्बन्धिनः स्निग्धतमान् सुतांश्च ।
रिरक्षिषन्तः क्षितिपाः स्वसत्ताम्
उपेक्षमाणास् तृणवत् त्यजन्ति ॥ २९ ॥

तस्मात् प्रजापालक ! बालके त्वम्
बध्ये ऽधुनाऽस्मिन् बलि - कर्म - मध्ये ।
वृथा कृथा मा करुणां ममाऽयं
निरामयत्वं तनयोऽभ्युपैतु ॥ ३० ॥

भूलोक - भद्रङ्करणो भवांश्च
त्रास - व्युदासं जनयन् जनानाम् ।
स्पर्धार्ह - सौजन्य - सुधा - समुद्रः
सञ्जीवितः सम्भजतां सुखानि ॥ ३१ ॥

इमाः प्रजास्त्वद् - गत - जीविताश्च
पोपुष्यमाणा महसो महिम्ना ।
परत्र चाऽत्रापि सुखोद्भवानि
चिन्वन्त्वचिन्ता भव - वैभवानि' ॥ ३२ ॥

मृदु - स्मितैर् मृत्युमथाऽवजानन्
वाचो विलासैर् विकिरन् सुमानि ।
दुर्गार्चिषाऽर्चन्निव चण्डिकां च
बलिं विधित्सुः स्वमुवाद देवः ॥ ३३ ॥

'न मर्म धर्मस्य भवान् जडात्मा
जानाति शौवापद - शीलशाली ।
गीताऽमृताऽऽस्वादन - कीर्त्तनेषु
क एड - मूकः प्रभवेद् वराकः ? ॥ ३४ ॥

आः ! गुण्य - पुण्यं परिणतुं प्रवृत्तं
कलेवरेण क्षण - नश्वरेण ।
मां वारयन् बर्बर ! खर्व - बुद्धे !
मुक्तोऽसि मन्ये त्रपयाऽपि तावत् ॥ ३५ ॥

उत्पन्नमेतच्च भवद् विपन्नं
गात्रं सुलभ्यं भुवि भस्म - मात्रम् ।
नैवंविधं चाऽवसरं तु दैवं
सदैव दातुं करुणोन्मुखं स्यात् ॥ ३६ ॥

अनाथताया विषये त्वया प्राग्
वध्यस्य बालस्य यदप्यवादि ।
अलीकमेतद्धि भवेदनाथः
को विद्यमाने मयि लोक - नाथे ? ॥ ३७ ॥

देवं च देवीं प्रति यन्न्यगादीर्
अनर्हतामेति च गर्ह्यतां तत् ।
देवाश्च देव्यो हि दयादि - दानाद्
एकान्ततोऽन्वर्थ - शुभाऽभिधेयाः ॥ ३८ ॥

संरक्षिणः प्राणभृतां स्वयं चेत्
स्युर् भक्षिणो हिंसन - पक्षिणश्च ।
क्रव्याद - हव्याद - पदाऽभिधानां
किमन्तरं शेक्ष्यति धातृ - सर्गे ? ॥ ३९ ॥

पीयूष - पानैर् हृत - हृत् - पिपासा
भवेन्नु देवी कथमस्रपा सा ।
तत् पूजनीयामपभाषणैः किं
कलङ्कयन् दौष्ट्यमिवाऽऽतनोषि ॥ ४० ॥

एकस्य चेत् प्राणभृतः प्रदाय
प्राणान् परः जीवनमभ्युपेयात् ।
तथाऽपि वाणिज्य - विदां मतेन
लाभाय नायं कृपणः पणः स्यात् ॥ ४१ ॥

वितीर्य मूल्यं शिशु - मृत्यु - रूपं
क्रयाऽभिलाषं पर - जीवनस्य ।
महार्मणि पाणि - गतं विहाय
श्वस्तद् - द्वयाऽऽशंसनमेव मन्ये ॥ ४२ ॥

सत्कर्मभिर् जीवन - मङ्गलाऽऽप्तिर्
न पातकै रौरव - पातकैश्च ।
हिंसाऽपि सत्कर्मतयेष्यते चेज्-
जघन्यमन्यत् कलुषं किमाहुः ? ॥ ४३ ॥

एवंगते ऽप्याग्रहवान् भवांश्चेत्
सङ्कोचमायासि मयि प्रहर्तुम् ।
तन्मोक्यमातिष्ठ न किं ममासिः
समीहितं साधयितुं समर्थः ?' ॥ ४४ ॥

इत्येवमालप्य निरूपिताऽर्थः
पार्थः स्व - मुण्डस्य विखण्डनाय ।
यावद् विकोशं कृतवान् कृपाणं
तावत् किमप्यद्भुतमाविरासीत् ॥ ४५ ॥

विकीर्ण - पुष्प - प्रकरा वराङ्गे
काचित् करं तस्य रुरोध शक्तिः ।
तिरोबभूवाऽथ किरात - काली -
बाल - द्वयादेः सहसैव दृश्यम् ॥ ४६ ॥

स्वस्थस्ततोऽसौ नृप आत्म - यार्जः
कौतुहलोन्मुद्रित - लोचनः सन् ।
दिव्याकृतिं कञ्चन भव्य - रूपं
स्तूपं कृपायाः पुरतो ददर्श ॥ ४७ ॥

स दिव्य - कायस्तमुवाच तावत्-
'सत्त्वेन जानीहि वशीकृतं माम् ।
अपां - पतिं ते करुणामभार -
व्रतं च जिज्ञासितुमभ्युपेतम् ॥ ४८ ॥

दयामयेयं निरमायि माया
मया, त्वयाऽतारि तथा परीक्षा ।
तत् त्वं यथाकाममुदार - बुद्धे !
विकल्पमुत्सृज्य वरं वृणीष्व' ॥ ४९ ॥

गत - स्पृहश्चापि स चक्रवर्ती
प्राणत् - प्रियो दान - मतिः प्रकृत्या ।
बद्धाञ्जलिः प्राञ्जलतां विवृण्वन्
विनीत - वाचा वरुणं बभाषे— ॥ ५० ॥

'नाऽदेयमाभाति तवाऽत्र किञ्चित्
नाऽऽदेयमस्तीह ममाऽपि किञ्चित् ।
तथाऽपि चेद् दित्ससि वत्सलस्त्वं
लाभाय लोकस्य परं प्रसीद ॥ ५१ ॥

आप्लावयेत् ते करुणाऽम्बुराशिर्
देशानशेषान् भुवनेश ! चैषः ।
येनाऽञ्जसा शाम्यतु चेतनानां
हिंसैक - हेतुस्त्रिविधोऽपि तापः ॥ ५२ ॥

न कर्मणा नो मनसा न वाचा
व्यापाद आसज्जतु कश्चनाऽपि ।
परस्परं प्रेम - परायणत्वाज्
जीवन्तु जीवाः सकलाः सुखेन' ॥ ५३ ॥

इत्येवमुक्तः पयसां परेशः
सत्त्वात्मना सत्त्व - सुखङ्करेण ।
स्मेरोऽभिवर्षन्निव शीतिमानम्
प्रसाद - सौम्यं वचनं बभाण— ॥ ५४ ॥

'नैःस्पृह्यमेतन्ममता - विहीनं
दृष्टं श्रुतं वा न कुतोऽपि पूर्वम् ।
औदार्य - चर्यावर ! त्वयाऽहो !
यन्नार्थितं किञ्चन याचताऽपि ॥ ५५ ॥

यथा भवानाह तथा तदस्तु
स्यात् ते यशः स्थास्नु तथाऽऽयुगान्तम्' ।
वरं वितीर्येति वियद् - विभासो
विद्युद् - विलासो वरुणो विलिल्ये ॥ ५६ ॥

सर्वेश्वरः प्राप्त - वरः स चैवं
देशेष्वनुल्लङ्घित - सन्निदेशः ।
हिंसा - विरामाद् वसुधामभीमाम्
द्वीपान्त - सीमां सुचिरं शशास ॥ ५७ ॥

तस्मिन् नरेशे सति नाम - शेषे
सास्मर्यमाण - प्रगुणाऽवदाने ।
प्रजा अनाथा हृदयाऽभितापम्
अजस्रमस्रैः शमयाम्बभूवुः ॥ ५८ ॥

तस्यात्मजः 'प्रवरसेन' इति प्रसिद्धो-
पाधिर्विपत्पतित - तापहरः प्रतापी ।
पूर्वं - प्रजाप - पदवी - पथिकः प्रवर्ष-
न्माङ्गल्य - वैभव - सुधां वसुधां जुगोप ॥ ५९ ॥

नयेन चैवं विनयेन राज्ये
पराऽविभाज्ये जनयन् स वृद्धिम् ।
प्रजा - जनानां वृजिनैर्धरित्रीं
विसृज्य यातो द्युनिवासभूयम् ॥ ६० ॥

हिरण्य - नामा तनयोऽदसीयः
कुल - क्रमेणात्त - नयोऽनुजातम् ।
श्री-'तोरमाणम्' सहसाऽनिमित्तं
चकार कारा - गृह - संनिरुद्धम् ॥ ६१ ॥

अत्रान्तरे प्राणसमाऽऽत्त - गर्भा
श्री - तोरमाणस्य कुलाल - गेहे ।
प्रासूत सूनुं विदिताऽवदानं
सम्पत्स्यमानं भुवि राजराजम् ॥ ६२ ॥

तन्नाम साऽथ च घटेन्धम - धर्मपत्नी
सम्प्रेरिता जनिकया शिशुकस्य लोके ।
पैतामहं 'प्रवरसेन' इति प्रगीतम्
प्राख्यापयत् प्रथमतः प्रथितं पृथिव्याम् ॥ ६३ ॥

स लाल्यमानो निलये कुलाल्या
मात्रा सुगुप्तं परिपाल्यमानः ।
लोकम्पृणत्वं यशसा गमिष्यन्
फलीव शाखी ववृधे क्रमेण ॥ ६४ ॥

वीर्ये कुमारं लवणिम्नि मारं
तं तर्जयन्तं जनता कुमारम् ।
आश्चर्य - चर्यं पटु - सङ्गि - वर्यं
शौवस्तिकं शासकमेव मेने ॥ ६५ ॥

खेलासु वेलासु मृषा रणानां
नेता गणानां प्रतिपक्ष - जेता ।
सञ्चारकः सन् सखिभिः समं स
वत्सो व्यहार्षीद् वन - वाटिकासु ॥ ६६ ॥

व्यायाम - वृत्त्या सुदृढाङ्ग - संस्थो
दीने च दूने दलिते दयालुः ।
सौम्य - स्वभावेन स संनिधातॄन्
स्मेरः समस्तान् स्व - वशीचकार ॥ ६७ ॥

स राज - बीजी घटकृत्कुलेऽपि
शुचि - व्रतः प्राक्तन - पुण्य - पुञ्जैः ।
राजायमानोऽपि सम - स्वभावात्
सखीन् स्वकीयान् सुखयाञ्चकार ॥ ६८ ॥

द्रव्य - प्रदानैर् महयंश्च मानैर्
दुःखायमानान् सुकुमार - चेताः ।
अदृष्ट - पूर्वाश्चकृवान् स चेष्टाः
सौख्यानि सर्वैः सह संविभेजे ॥ ६९ ॥

यावद् हिरण्येन यदृच्छयैव
बन्धाद् विमुक्तोऽहह / तोरमाणः ।
कायं विहायाऽथ च बन्धु - वर्गं
स्वर्गं सदाचार - फलं जगाहे ॥ ७० ॥

ततोऽनपत्यो जगतीपतिश्च
सन्तापितानां स पिता शरण्यः ।
हिरण्य - वर्षी नियतं हिरण्यः
प्राक्पाप - पुञ्जैः प्रलयं प्रपन्नः ॥ ७१ ॥

लोकेऽपि कीर्त्याऽमरतां प्रयाते
गुणाऽवदाते पितरि स्वकीये ।
गतेऽस्तमर्केऽम्बुजवत् कुमारो
मम्लौ शुचाऽसौ सहसाऽचिराय ॥ ७२ ॥

परं प्रकृत्याऽविकलो द्रढिम्ना
तस्थौ महात्माऽविचलः स धीरः ।
वज्राऽभिघातेऽपि महामहीध्राः
कदाऽपि नैवाऽऽत्मपदाच्चलन्ति ॥ ७३ ॥

बृहद् - विपद् - वज्र - विघात - विघ्नां
जनीं निवार्यात्म - वधात् तदाऽसौ ।
उद्भिन्न - कौमार - मनोहराऽङ्ग -
स्तीर्थोत्सुको याम्य - दिशामयासीत् ॥ ७४ ॥

अस्तोक - शोकान् अपहाय लोकान्
उपेयुषि स्वामिनि चोर्ध्वं - लोकम् ।
काश्मीर - धात्री समभूद् अनाथा
हिरण्य - हीनाऽतितमां च दीना ॥ ७५ ॥

व्योमाऽश्म - घूर्णन - विघट्टन - घृष्ट - रश्मेर्
भानोः स्थितस्य शिखरे चरमाचलस्य ।
प्राची कपोल - मुकुरे प्रतिबिम्ब-कल्पस्
तावच्छनैः समुदियाय सुधामयूखः ॥ ७६ ॥

यावत् पश्चिम-पर्वतस्य शिखरात् सन्ध्या-वधू-प्रेरितः
साक्षी संसृति-सूत-भूत-सदसत्-कृत्या-कलापस्य यः ।
अन्यस्मै रहयन् पदं किमथवा स्वं राजराजाय स
निर्मग्नः सहसोदयाय च पुना रत्नाकरे भास्करः ॥ ७७ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव-शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'प्रवरसेन-पूर्वज
वर्णनम्' नाम चतुर्थः सर्गः परिणतः ॥



# पञ्चमः सर्गः

सच्चाऽसच्च गुणातिगं च सगुणं लोकम्पृणं तैजसं
त्रैकाल्येऽपि यदस्ति यत्र च यतः सर्वं प्रपञ्चात्मकम् ।
वाचां चानुमितेरगोचरमथो तर्काद् दवीयः स्थितं
शस्तं वस्तु तदस्तु वस्तु सततं शौवस्तिकस्वस्तये ॥ १ ॥

कन्दर्पोद्धतशासनः प्रतिदिशं माद्यन्मिलिन्दोत्सवः
पीतामन्द - मरन्द - मन्थर - परिश्राम्यत्समीरोर्मिलः ।
कूजत्कोकिल - काकली - कलनया कुञ्जेषु वाचालितः
पुष्यत्पुष्प-परम्परा-प्रहसनः कालो जजृम्भे ततः ॥ २ ॥

शान्तेऽपि शत्रौ दलिते दरेऽपि
प्रान्त - प्रजा नैव परं प्रसेदुः ।
व्याधौ हि वैद्येन विनाशितेऽपि
बलाढ्यतामेति किमामयावी ? ॥ ३ ॥

वैदेशिकैर्बर्बर - वैरि - वृन्दैर्
विप्लाव्यमाना बहुशो वराकाः ।
विसीम - वासा विभवैर्विहीना
विद्राविता व्याकुलिता विलेपुः ॥ ४ ॥

युग्मकम्

निर्बन्धु - निर्दग्ध - निकेतनानां
निर्घात - निर्लुण्ठन - निर्धनानाम् ।
नितान्त - नैराश्य - निराश्रयाणां
निशम्य नष्टिं निपुणं नृनाथः ॥

पेपीड्यमानाः परिश्रुत्य पूर्वं
पुनः प्रजापः परिचारकेभ्यः
प्रान्ते प्रजानां परिदेवितानि
पप्रच्छ पूज्यान् प्रकृति-प्रधानान् ॥ ५-६ ॥

ततस्तदात्वे तरुणानतृष्णा-
स्तेजस्विनस्तीक्ष्णतरांस्तितिक्षून् ।
त्रासात्तथा तर्जक - तस्करेभ्य-
स्त्राणाय तेषां त्वरयाम्बभूव ॥ ७ ॥

संसार - सौमङ्गल - सूत्रधारः
सर्वत्र सम्राट् स्पृहयन् सुखानि ।
सौहार्द - सद्धर्म - समीहितानां
सतां सहस्राणि समायुयोज ॥ ८ ॥

यैर् यातना योधनजा यतो यतो
याप्यत्यमानैर् यतमाऽपि यायिभिः ।
यशस्य - यादृच्छिक - योजनाभिर्
यथोक्त - युक्त्या यमिता यथायथम् ॥ ९ ॥

दृष्ट्वाऽथ दुःखैर् दलितान् दवीयो-
देशेषु दासान् दमितान् दयालुः ।
दूनो दृढं दक्षिण - दीर्घदर्शी
द्राग् देशिकं दूत - दलं दिदेश ॥ १० ॥

एकान्ततः प्राणभृतां प्रियेण
कृपालुनैवं विहिते विधाने ।
देशान्तरे स्वर्ग - सुखं समृद्धि
देशान्तरे चापि समाससाद ॥ ११ ॥

युग्मकम्

शीर्ण - श्रियः शातित - पत्र - पुष्प-
प्रवाल - पुञ्जा द्रुलतादि - कुञ्जाः ।
शुष्यच्छिखा - शोच्य - शरीर - शाखाः
शीतेन शून्ये शिशिरावसाने ॥

रसायने स्थावर - जङ्गमानां
सर्वर्तु - चक्राधिपतौ समन्तात् ।
आमोद - दानेऽन्तरुपंधमाने
विकास - हासोत्सव - भाजिनः स्युः ॥ १२-१३ ॥

## युग्मकम्

तथैव तत्तेजसि तायमाने
सद्भावना - सौष्ठव - सान्त्वितानाम् ।
महीतले मानव - मानवीनां
म्लानानि मान्द्येन मलीमसानि ॥

दैन्येन दूनानि दरोदराणि
मुखानि मित्रेतर - मुद्रितानि ।
नैश्चिन्त्य - हेतोः पुपुषुस्तदानीं
फुल्लोत्पलानीव परं प्रसादम् ॥ १४-१५ ॥

विद्या - विसारे विहिते च वेगाद्
दयास्पृशा दूरदृशाऽधिपेन ।
लोका विलुम्पत्तिमिरा क्रमेण
चक्षुष्मतां श्रेणिषु सन्निविष्टाः ॥ १६ ॥

श्लाघ्य - श्रियः शिक्षित - शेमुषीका
शिष्टा अशोभन्त पदे पदेऽत्र ।
न पाप - सङ्कल्पकरा नराश्च
शिष्टा न ते शील - बहिष्कृता ये ॥ १७ ॥

लोकाः सतोका मुदिताश्च पुण्य-
श्लोकाऽधिराजेन कृता विशोकाः ।
सुपुण्य - सोपान - मुखेन पुण्य-
लोकाऽऽप्तये ऽनारतमायतन्त ॥ १८ ॥

स्वभावतो येऽत्र च राक्षसा यथा
प्रजाजनोद्वेगकरा अरुन्तुदाः ।
क्षिप्रं विपर्यासमिता विनीता-
स्ते साक्षराः सच्चरिता बभूवुः ॥ १९ ॥

व्यमोचि दुष्टैरथ दानवत्वम्
अलाभि चौरैरपि दान - वत्त्वम् ।
अग्राहि गर्ह्यैरपि मानवत्वम्
मर्त्यैः पुनः प्रापि च मान - वत्त्वम् ॥ २० ॥

एवम्प्रकारेण स कोऽपि भूभृद्
बुद्धया बलेनाऽथ बलेन बाह्वोः ।
वैदेश्य - वैर्याक्रमण - प्रजातम्
उत्पात - वातं सहसा रुरोध ॥ २१ ॥

प्रताप - राशेस् तपताम्पतेर्वा
तेजिष्ठ - वक्त्रस्य महामहिम्नः ।
ताप - त्रयी त्वस्य तिरस्कृतेव
प्रशासनं नाश्रयितुं शशाक ॥ २२ ॥

लोकं यथावत् सदसच्च तेन
वेविद्यमानेन प्रिय - प्रजेन ।
स्थितिः कृताऽस्मिन् कृतिना कृताख्य-
युगस्य देशे सुकृत - व्रतेन ॥ २३ ॥

तेनाऽर्थि - चिन्तामणिना तदानीम्
अकारि दानं विगताऽनुमानम् ।
येनाऽर्थिनोऽप्येकपदे सुभागा
अबोभवन् भाविनि दान - शौण्डाः ॥ २४ ॥

तस्य प्रदित्सोः करुणा - पयोधे-
रनल्प - सङ्कल्प - जलस्य धारा ।
देशस्य दैन्याय दिवङ्गताय
प्रदत्त - तोयाञ्जलितां जगाम ॥ २५ ॥

स देहि देहीति गिरोऽधनानां
द्विरुक्त - दुःखा विनिशम्य दूनः ।
द्राग् देहि देहीति चुचोद कोशा-
ऽध्यक्षं तदिष्टाद् द्विगुणं प्रदातुम् ॥ २६ ॥

गां मे प्रयच्छेति कदाचिदुक्तः
स धेनु - कामेन यथेष्टदायी ।
उदारधीरेकपदे बभूव
समुद्यतोऽशेष - धराऽर्पणाय ॥ २७ ॥

दिवानिशं याचक - पारिजातो
यत्तद् ददानोऽभिमताऽतिरिक्तम् ।
शशाक निर्वर्णयितुं प्रदाता
दीनस्य पाणि प्रसृतं न रिक्तम् ॥ २८ ॥

धनं धनीयन्नथ गां च गव्यन्
लेभे न कोऽन्यच्च ततः प्रदातुः ।
स घातुकायाऽप्यरये तितिक्षुर्-
अभीति - दानेऽपि न संचुकोच ॥ २९ ॥

घटचोऽरघट्टस्य यथैव रिक्ता
निर्यान्ति कूपाद् भरिता पयोभिः ।
तथार्थिनोऽभ्येत्य दयानिधिं तम्
आप्यायिताः प्रत्यगमन् समेऽपि ॥ ३० ॥

ये याचका आगमकाल आसन्
दौर्बल्य - दैन्यादि - भरेण भुग्नाः ।
निवर्तमाना निकटान्नृपस्या-
ऽदृश्यन्त ते द्रव्य-भरेण भुग्नाः ॥ ३१ ॥

महीभृतस्तस्य मतेन सत्यं
करः कृतार्थस्तु स एव पुंसः ।
दूनाय दीनाय दयाकरः सन्
दिने दिने दानकरो भवेद् यः ॥ ३२ ॥

दानेऽङ्गकस्याऽपि सदोद्यतेन
तेनोदितं नैव कदापि नेति ।
तस्मै किलाऽरोचत दान - शब्दे-
ऽपि निष्ठितोऽयं नतमां नकारः ॥ ३३ ॥

अकिञ्चनत्वेन कदर्थितानां
मुखान्यपि म्लानिम - मुद्रितानि ।
विकासभाञ्जि प्रतिपादयन्नलं
रराज दानेन स राज - कुञ्जरः ॥ ३४ ॥

स आह — लोकादनिशं स्वयं करा-
ऽऽदानाय स त्वेष करः प्रसार्यते ।
मयाऽपि लोकस्य करे प्रसारिते
न्यधायि किञ्चिद् यदि किं विचित्रम् ॥ ३५ ॥

लोकेऽधमर्णेन वितीर्यते स्वं
यदुत्तमर्णाय गृहीतपूर्वम् ।
प्राचां मतेनापि यथार्थवाचां
दानं न तत्स्यान्न तथाऽवदानम् ॥ ३६ ॥

रहः स्थितोऽसौ विममर्श चैवं
कल्याण - कीर्त्तिर्बहुधा प्रजापः ।
लोकस्य - नार्ति यदि संहरेयं
कथं नु कथ्योऽर्थपतिर्वृथाऽहम् ॥ ३७ ॥

स्वामिन् प्रभो नाथ महेश्वरेति
सम्बोधयन्त्यो विहिताभिवादाः ।
प्रजा मया दीनमुखा विपत्ता-
वुपेक्षणीया कृतवेदिना किम् ? ॥ ३८ ॥

मां राज्यनिष्ठाः सरलस्वभावाः
नैजं विजानन्ति पृथङ् न लोकाः ।
आत्मम्भरिः किं परिवञ्चयंस्तान्
कृतघ्न - कोटौ गणनां भजेयम् ? ॥ ३९ ॥

उत्सृज्य सम्पत्स्वजनादि - मोहं
मद्राज्यहेतोरिह भक्ति - भाजः ।
धीराः शरीराण्यवधीर्य वीरा
एते मृधे मृत्यु - मुखं विशन्ति ॥ ४० ॥

एषामहं चेद् व्यसनोपतापे
न सम्भवेयं सुतरां सहायः ।
कोऽसौ जघन्यो भविता मदन्यो
विलुम्पकः पार्थ - परम्पराणाम् ॥ ४१ ॥

चिकीर्षता क्षेममिह प्रजाना-
मास्थीयते यच्च मयाऽत्र साह्यम् ।
तत् तत्कृतानामभिवन्दनानां
न मूल्यमप्यस्त्युचितं यथार्थम् ।। ४२ ।।

नीचैः स्थिताभिः प्रणत - प्रजाभि-
रारोपितेनोच्चपदे नृपेण ।
यदा कदा यद् विहितं हितं स्याद्
आचार - मूलः स तु धन्यवादः ।। ४३ ।।

अज्ञान-जाड्यं तु हृतं प्रजानां
तीव्र - प्रतापोत्थ - करच्छटाभिः ।
आडम्बरोऽभासत विक्रमस्य
यत्नो व्यवस्थान्तर - संविधाने ।। ४४ ।।

ततो यथापूर्वमशेष - देशो
भुज - द्वयेनाऽर्गलितो नृपस्य
स्वप्नेऽपि चाऽशक्य - परप्रवेशो
लीलासु लीनो लघु लौकिकीषु ।। ४५ ।।

युग्मकम्

मान्यैर्वदान्यैः सहितेऽर्हणीये
सत्त्वस्य सत्त्वान्न विगर्हणीये ।
प्राज्ये वणिज्यार्ऽजित - वैभवाढ्ये
राज्येऽभितः सन्ततमेधमाने ।।

विद्याविहीनः सुलभो न दीनः
क्रौर्ये प्रवृत्तो न च कोऽपि चौर्ये ।
क्रोधी बभूवाऽत्र न वा विरोधी
प्रकृत्यमित्रः क्व नु दुश्चरित्रः ।। ४६-४७ ।।

जिताऽरि - षड्वर्गं इहाऽखिलोऽपि
जितेन्द्रियश्चास्त सतां समाजः ।
जैत्रे जगत्याः सति सार्वभौमे
तदोज्जयिन्यां जय - राज्यमासीत् ।। ४८ ।।

## युग्मकम्

ततः प्रजापालन - जागरूको
न्यस्ताऽस्त्र - शस्त्रोऽपि च चार - चक्षुः ।
त्यागी सुपात्रेषु गुणानुरागी
लब्ध - क्षणोऽलौकिक - साहसाङ्कः ॥

प्रजा - प्रसादाय द्विषद्दमाय
लेभे रणे विक्रम - दर्शनेन ।
आदित्य - संस्पर्धि - महाप्रतापः
स 'विक्रमादित्य' इति प्रतिष्ठाम् ॥ ४९-५० ॥

कालत्रयेऽभूद्गहो ! दुरापः
क्ष्मापः पृथिव्यामतुल - प्रतापः ।
इतीव तस्य स्मृतयेऽमरस्य
संवत्सरः स्थास्नुरयं प्रवृत्तः ॥ ५१ ॥

स चक्रवर्ती नियतेर्नियन्ता
महीभृतां हर्ष - निकर्षयोर् वा ।
क्रमेण चाप्यायित - विक्रमेण
निष्कण्टकं राष्ट्रमिदं शशास ॥ ५२ ॥

आकर्षकल्पेऽप्युरुविक्रमेऽस्मिन्
स्थास्नावपि - स्वप्रभुतानिमित्तात् ।
आकृष्टिमानं विषयान्तरेभ्यो
वसून्यहम्पूर्विकयेव भेजुः ॥ ५३ ॥

यथा नगादेरवतीर्य निम्नगा-
वेगाः स्वतो वारिधिमाविशन्ति ।
तथा विनम्रं प्रदिमाणवं तं
गुणाः समस्ताश्च सतामशिश्रियन् ॥ ५४ ॥

सर्वेश्वरेऽस्मिन्नथवा स्वभावात्
साद्गुण्य - सम्पत् स्फुटतां प्रपेदे ।
सञ्चार्यते कैः कुसुमे कदा वा
सुवर्ण - सौरभ्य - मरन्द - सारः ॥ ५५ ॥

सौराज्य - तुष्टाश्च सुभिक्ष - पुष्टाः ।
प्राज्यं प्रजा ऐधिषताऽस्त - दुष्टाः ।
तृप्तालिमालास्ततयो लतानां
मधौ स्वतो मञ्जुल - गुञ्जिताः स्युः ॥ ५६ ॥

अगर्धनो लोक - समर्धनोऽसौ
भूपस्तथात्वेऽप्यनवाप्त - कामः ।
तथाऽमितः संजगृहेऽत्र सारं
मन्था कलश्या इव तक्रसारम् ॥ ५७ ॥

तेन क्रमाद् याचक - मन्दरेण
नानागुणाढ्यं नर - रत्नजातम् ।
आनायि देशाम्बुधि - मध्यगुप्तं
सभाजनायेव सभा - जनानाम् ॥ ५८ ॥

सोऽग्रणीः करुणाकराणाम्
अर्चको रचनाकराणाम् ।
सोदराऽऽदरदोऽदराणां
सत्क्रिया - कुशलः कलानाम् ॥ ५९ ॥

पोषकः प्रिय - साहसानां
सेवकोऽभूत् सत्कवीनाम् ।
संग्रहीता नर - मणीनां
संयतात्मा न रमणीनाम् ॥ ६० ॥

युग्मकम्

विज्ञान - वारानिधि - कर्णधाराः
शिष्येषु सञ्चारित - शास्त्रसाराः ।
वेलाभसर्वङ्कष - कीर्तिधाराः
नैकेऽतलस्पर्श - मतिप्रसाराः ॥

श्रीकालिदास - प्रमुखाः प्रभूताः
नाकादुपेता इव देवदूताः ।
स्वे स्वे बभूवुर्विषयेऽद्वितीयाः
धुर्यास्तदीया अपि सार्वभौमाः ॥ ६१-६२ ॥

तारातत्तीनां गणने गतीनां
वाचस्पतीनां निविशन्मतीनाम् ।
श्रेष्ठाश्चिकित्सा - चतुरा अलभ्याः
बभासिरे भूमिभृतोऽस्य सभ्याः ॥ ६३ ॥

महीप - मौलौ महिते मणीभिस्
ते विम्बिता मन्त्रकृतो महान्तः ।
गुणान् स्वकीयानिव तस्य मत्वा
सञ्चारयन्तोऽभ्युपगम्य तस्थुः ॥ ६४ ॥

रोरुच्यमानैः रमणीय - रत्नैस्
तैश्चातिगम्भीर - कुशाग्रधीभिः ।
अस्मादृशां स्वल्पदृशां सुखोऽसौ
चकास्यते ज्ञानपथोऽधुनापि ॥ ६५ ॥

ते मूर्तिमन्तो निधयोऽभ्युपेता
दैन्याऽपहारार्थमितो नवत्वम् ।
धियां दधाना अतुलं नवत्वं
राष्ट्रस्य नूनं विभवा बभूवुः ॥ ६६ ॥

प्रजोदयाऽपाय - नियन्त्रणाय
तेऽलन्तमा विश्वजनीन - चिन्ताः ।
दधुः स्थितिं विस्तृत - राष्ट्रचक्रे
यथा ग्रहा मानव - राशि- चक्रे ॥ ६७ ॥

स चक्रवर्ती चकमे प्रजानां
हिताय यद् यत् सदसद्विवेक्ता ।
साचिव्यमेषामधिगम्य तत्तद्
निःसंशयं साधयितुं शशाक ॥ ६८ ॥

नित्यं यथान्यायमुपात्तमन्त्रे
व्यवस्थिते साधु च राष्ट्र-तन्त्रे ।
स लब्धवान् वीतजनापवादः
सङ्कल्पितार्थं विगत - प्रमादः ॥ ६९ ॥

उपेयुषां ब्रह्मणि चैकरूप्यं
तपस्विनां शैल - वनाश्रमेषु ।
न श्वापदेभ्यो जनितापदेभ्यो
भयं तनीयोऽपि बभूव तत्र ॥ ७० ॥

देशे समुत्खात - समस्त - कष्टे
विश्वग् विशेषाद् ववृधे वणिज्या ।
मोमुद्यमाना मनुजा ममज्जुर्
मखेषु मेलासु महोत्सवेषु ॥ ७१ ॥

धरा - धवे धारित - धुर्य - धर्मे
हितेहया चाऽवहितेऽविरामम् ।
कला - कलापा निरवद्य - विद्याः
प्रत्तावलम्बा अभजन् समृद्धिम् ॥ ७२ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव-शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'प्रजा-प्रसादनं'
नाम पञ्चमः सर्गः परिणतः ॥



# षष्ठः सर्गः

स्तुत्यः सर्वं - समर्थं एष गिरिशो यस्यादिकालादियं,
चूडा-चन्द्रक-विच्युताऽमृत-झरी-सेकेन जञ्जन्यते ।
जूट - प्रस्रुत - जाह्नवी - जल - लवैः पोपुष्यते संसृतिः,
ज्वाला-जाल-कराल-भाल-दहनाऽऽलेहैश्च लेलीयते ॥ १ ॥

अथो गुण - ग्राहितयाऽऽप्त - कीर्तिम्
आस्थान - संस्थं वसुधाऽधिनाथम् ।
उपेयिवान् कश्चन मातृगुप्त -
नामा कविश्चेतसि सञ्चिताशः ॥ २ ॥

अदृष्ट - पूर्वं स निरूप्य तेजो
राजाधिराजस्य तथाऽनुभावम् ।
सकौतुकाऽऽह्लादित - मानसः सन्
चिराय दध्यो स्वगतं महात्मा ।। ३ ।।

पुण्यानि गुण्यानि पुराकृतानि,
फलेग्रहित्वं समुपागतानि ।
सायास एषोऽपि मम प्रयासो
नूनं शुभोदर्कं इह प्रपन्नः ।। ४ ॥

उदारचेताः स्मितपूर्वभाषी
मनोगताऽर्थाधिक - सम्प्रदायी ।
सम्प्रापि यत् कारुणिको यशस्वान्
सौम्यो गुणोपासक एष पार्थः ॥ ५ ॥

अद्यापि सङ्कल्पित - लाभ - लोभिना
ये पार्थं - सार्थाः समुपासिता मया ।
ते लेशतोऽप्यस्य न यान्ति तौल्यम्
महामणिः क्व क्व शिला-लवाश्च ॥ ६ ॥

कलाविदो वा कवि-कोविदा वा
यद्वाऽग्रगण्या गुणिनां गणेषु ।
संसेवमाना गुणगृह्यमेनम्
प्रयत्नतो मान-धनार्चिताः स्युः ॥ ७ ॥

सर्वेश्वरस्याऽस्य सभामुपेताः
पुरस्क्रियां काञ्चन लिप्समानाः ।
नाऽलीक - वादैर् गुण - कीर्तनैश्च
विकत्थमानाः पुटयन्ति पाणी ॥ ८ ॥

परीक्षकस्याऽस्य पुरः प्रपन्ना
माहार्घ्यभाजो मणयो महान्तः ।
यथार्थ - दृग्भाजनतामुपेता
अतर्कितं गौरवमाश्रयन्ते ॥ ९ ॥

विवेक - दृश्वैष हि राजहंसः
शुश्रूषणार्थं शरणाश्रितानाम् ।
मन्येऽवतीर्णस् त्रिदिवाद् वपुष्मान्
कल्पद्रुरेवाऽभिमतार्थं - दाता ॥ १० ॥

नियुक्ति - भाजो गुणिनोऽत्र धीराश्
चिरात् कृतार्था अकुतोभयाश्च ।
नैराश्य - निघ्ना न विपत्ति - विघ्ना
जाताऽनुतापाश्च न सम्भवन्ति ॥ ११ ॥

महामहिम्नोऽस्य महीश्वरस्य
सर्वेऽपि सभ्या धरणावलभ्याः ।
नैजं विजानन्ति निषेवणं नो
बीजाकृतं वन्ध्यमनुर्वरोर्व्याम् ॥ १२ ॥

छायामुपेतः फलदस्य चाऽस्यो-
त्तप्तः प्रवासी विगतावसादः ।
सुखेन सुप्तः सुभगम्भविष्णुर्
न मन्यते कञ्चन कार्यं - शेषम् ॥ १३ ॥

अस्य प्रसादाङ्कमधिष्ठितानां
श्वःश्रेयस - श्री - परिरम्भ - भाजाम् ।
पाप - प्रलोपात् सुकृत - प्रवृद्धैर्
इतोऽमुतो वा न कुतोऽपि भीतिः ॥ १४ ॥

अत्राऽऽश्रितानां परिषज्जनानां
लोकोत्तर - स्पर्श-मणि - प्रभाणाम् ।
संसर्ग - लाभः समुपागतस्य
कालं नु कस्याऽन्यथयेन्न जन्तोः ? ॥ १५ ॥

शिष्टैरिमं मण्डलितं विशिष्टैर्
उपास्य राजेश्वर - रत्नराशिम् ।
यशो - धनाद्यैः सममेव धन्यैर्
नाऽवाप्यते कैर्गरिमाऽद्वितीयः ? ॥ १६ ॥

सदैव लज्जाकर - कर्म - सज्जा
नाऽसत्य-सारा इह चाटु - काराः ।
न सन्त्यसन्तोऽस्य तथा सभायां
कर्णेजपाः कर्ण - कदर्थनाय ॥ १७ ॥

रारक्ष्यमाणं प्रभुणाऽत्र कञ्चित्
सभा - जनं तं न विलोकयामि ।
नाऽवाप्यते येन यतस्ततो वा
सभाजनं स्वर्ग्य - सुखाऽतिरिक्तम् ॥ १८ ॥

सम्प्राप्य सम्बन्धमनेन केऽपि
त्रपा - नताक्षा न चरन्ति लोके
कुटुम्बिनां कुञ्चित - नासिकानां
न लक्ष्यतां यान्ति च तर्जनीनाम् ॥ १९ ॥

प्राप्तो गुणी संसदि यस्य बाह्यो
लब्धाऽधिकारोच्च - पद - प्रतिष्ठैः ।
मात्सर्य - मिश्रैः कुटिलैः कटाक्षैर्
न वीक्ष्यते चेतसि जात - शूलैः ॥ २० ॥

न विद्यते कोऽप्यपवाद - शीलो
न खिद्यतेऽत्राऽपर - साध्य - सिद्धचा ।
न नर्म - वाग्भिः पर - मर्म - वेधी
विधर्म - मग्नो न कुकर्म - लग्नः ।। २१ ।।

बैडाल - वृत्त्याऽथ बक - व्रतेन
क्षुद्रान् बलेनेह कदर्थयन्तः ।
मिथ्या - क्रियाः कापटिकाश्च धूर्त्ता-
वार्तास्वपि श्रोत्र - पथं न यान्ति ।। २२ ।।

पाकात् पटीयानिति राजसिंहो
ऽयं सर्वथा पाशयितुं न शक्यः ।
वाग् - वागुरायां हि 'लपोट - शङ्खैः'
पटिष्ठ - धी - भण्ड - तपस्विभिर् वा ।। २३ ।।

अभ्यर्हणीयत्वमथाऽऽत्म - मानं
सर्वेऽत्र सेवा - व्रतिनोऽधिगम्य ।
प्राप्ता इवैन्द्रं पदमद्वितीयम्
पद्भ्यां धरित्रीं विरलं स्पृशन्ति ।। २४ ।।

अङ्गीकृतोऽनेन नरेश्वरेण
विद्वद्वरस्त्वेकपदे वृतः स्यात् ।
अहो ! अहम्पूर्विकया प्रसत्ति-
कीर्ति - प्रतिष्ठा - कमला - वधूभिः ।। २५ ।।

देवेन येनाऽथ च साहचर्यं
प्राप्ता महीमण्डल एव मन्ये ।
प्राग् देह - पातात् प्रतरां प्रसन्नाः
स्वर्गीय - सौख्यं तृणयन्ति तावत् ।। २६ ।।

तुतोदिषन्तोऽत्र मनः परेषाम्
अशिष्ट - वाग्भिर् न भवन्ति केऽपि ।
सुशील - शून्या अथ पैशुनैः शनैः
सतां न शूलाकरणे धृत - व्रताः ।। २७ ।।

संश्रित्य सात्मीकृत - सत्यमेनं
सन्ताप - दीर्घं श्वसताऽत्र शश्वत् ।
धिक्कार - वाचा स्वयमेव नूनं
न गर्हणीयो भविता मयाऽऽत्मा । २८ ॥

सर्वात्मनाऽऽवेदयतः स्वमस्मै
सम्पत्स्यते जीवनमर्थवन्मे ।
द्वाराणि दैवस्य शुभानि यस्माद्
अपावृतानीव पुरो विभान्ति ॥ २९ ॥

सौजन्य - सीमा समवाप्यचिन्त्यश्
चिन्तामणिश्चैष करे स्थितो मे ।
त्यागोऽस्य पादेन निपातनं स्यात्
पात्रस्य पीयूष - परिप्लुतस्य ॥ ३० ॥

पूर्वार्जितैः पक्त्रिम - पुण्य - पूगैर्
एनं तथेनं सुखमेव साक्षात् ।
आसाद्य सद्यो निरवद्यमद्य
सङ्कल्प - सिद्धो मम को विकल्पः ? ॥ ३१ ॥

न क्लेश - लेशोऽपि सुखैषिणो मे
वैराग्य - हेतुर् भविता हिताऽन्तः ।
किं वेधनं नो मधु - मक्षिकाणां
सासह्यते सारघ - संजिघृक्षुः ? ॥ ३२ ॥

अदूर - दर्शित्वमिदं स्फुटं चेद्
भविष्णु - बाधा - विकलो भवेयम् ।
उपेयुषीं तन्न तिरस्करिष्ये
रमामिदानीं गलहस्त - दानैः ॥ ३३ ॥

एवं स सम्यक् स्वगतं वितर्क्य
निर्णीय चान्ते प्रभुणा नियुक्तः ।
लब्ध - प्रवेशो न पराधिकार -
[illegible] व्यधात् सर्वं [illegible] सभायाम् ॥ ३४ ॥

गोष्ठ्यां निषीदन् प्रतिभाऽन्वितोऽसौ
कलाविदां वा गुणिनां कवीनाम् ।
स्नेहाऽतिरेकैः सुख - सूक्ति - सेकैः
मनांस्यमन्दं अदयाम्बभूव ।। ३५ ।।

वर्षन् सुमानीव मृदु - स्मितैस् तैर्
वीताऽस्मितैर् वाङ्मधुभिः कृताऽर्घः ।
सच्चेष्टितैश् चन्दन - भक्ति - वेष्टितै
राजाधिराजं स्व - वशे चकार सः ।। ३६ ।।

स सार्वभौमः प्रथयन्तमेवं
सर्वङ्कषं स्वं प्रतिभानवत्त्वम् ।
मोमुह्यमानो मनसैव मेने
तं सर्वथाऽदृष्टचरं गुणाढ्यम् ।। ३७ ।।

तथा सदाचार - कुशाग्र - बुद्धि
सभासदानां गुणिनां सदाऽग्र्यम् ।
महार्हं - मुक्ता - मणिवन्महीपो
विवेकवान् ग्राह्यमिमं विवेद ।। ३८ ।।

व्यचीचरच् चेतसि चाऽधिराजो
न भक्तिमानेव कुलीन एषः ।
गाम्भीर्यमस्याऽद्भुतमद्वितीयं
सम्मान - पात्रत्वमभिव्यनक्ति ।। ३९ ।।

इत्थं विमृश्याऽवनिपस् तदीयां
मनः - स्थितिं वास्तविकीं विवित्सुः ।
तिष्ठन्नुदासीन इवाऽस्य चक्रे
मानाय नाऽप्यभ्युदयाय किञ्चित् ।। ४० ।।

सोऽप्यस्य माहात्म्यमुदारतायां
धीमद् - धुरीणोऽधिपतेर् विदित्वा ।
संसेव्यमानोऽप्यकृतोपचारः
प्रीत्या स्वमात्मीकृतमेव मेने ।। ४१ ।।

इत्थं नृनाथेन तथैव सम्यग्
उपेक्ष्यमाणोऽप्यचलात्म - वृत्तिः ।
नित्यं स्व - कृत्यं विदधत् स लेभे
न ग्लास्नुतां कांचन लेशतोऽपि ॥ ४२ ॥

दिष्टं शुभोदर्कमुदीक्षते तान्
उत्कण्ठयाऽलं परिरिप्सते श्रीः ।
श्वःश्रेयसं सत्कुरुते च धीराः
वीरा न ये स्व - क्रिययोद्विजन्ते ॥ ४३ ॥

उपाचरन् देवमनन्य - वृत्त्या
शनैः शनैः पाकिम - पुण्य - राशिः ।
तस्य प्रभोः स्नेहमयः सुधीः स
सुकोमलाऽन्तःकरणे विवेश ॥ ४४ ॥

गुञ्जोपासन - मन्त्रेण, भ्रमतः परितोऽलिनः ।
सारसं सारघ-स्यन्दि, क्रमशः स्याद् विकस्वरम् ॥ ४५ ॥

सेवा - श्रमेणाऽस्य ततः क्रमेण
चेचीयमानेन मही - महेन्द्रः ।
चक्षुष्मतां चित्त - चकोर - चन्द्रो
भेजे मनागप्यरुचिं न तावत् ॥ ४६ ॥

न तस्थुषाऽल्पाय न पुष्कलाय
कालाय तेनाऽथ च नाथ - पार्श्वे ।
आढ्यम्भविष्णुस् त्वरयाऽत्र नून-
मनून आत्मैव पणीकृतोऽभूत् ॥ ४७ ॥

ऋतं मितं स्वादु हितं च सस्मितम्
पार्थेन पृष्टः प्रतिवाक्यमाह सः ।
वाचालतां वा प्रतिकूलतां वा
विनीति - मूर्त्तिर् नतमां व्यतानीत् ॥ ४८ ॥

स्थिते समीपे महिते महीपे
स प्राप्त - कालं वचनं ब्रुवाणः ।
हंसश्च नोच्चैर् हृदयाऽनुवर्ती
माहात्म्यमेकं प्रथयाम्बभूव ॥ ४९ ॥

जजल्प नाऽल्पामपि कण्ट - कल्पां
कट्वीं कठोरां कुटिलां च वाचाम् ।
कुतोऽपि तावत् कुपितं स भूपतिं
विनोद - वृत्त्याऽनुनिनाय चाऽनिशम् ॥ ५० ॥

निरीक्ष्य नारीर् निभृता नृपस्य
नते नितान्तं निमिमेष नेत्रे ।
सङ्गं विवादं कलहं च ताभिर्
दुरन्तमित्येव जहौ स दूरात् ॥ ५१ ॥

अम्बां कुमारं महिषीं महीक्षितो
मुख्यान् महामात्र - पुरोहितांस्तथा ।
वयस्य - बन्धून् सुभगम्भविष्णुस्
समान् समान् भूमिभृता स मेने ॥ ५२ ॥

विपत्प्रतीकार - परोऽधिपस्य
हिताय कष्टं चकवांश्च कार्यम् ।
प्र - ख्यापयन् सिन्धु - गभीर - चेता
ह्री - मुद्रिताऽऽस्यः समयाकरोत् सः ॥ ५३ ॥

राज्ञोऽपकारं च कुतोऽप्यनिष्टं
सेहेऽल्पमप्येष न पार - दृश्वा ।
नाऽपुण्य - वैगुण्यमथाऽस्य हास्यं
किञ्चिद् रहस्यं प्रकटीचकार ॥ ५४ ॥

समर्प्य सम्राट् गुरु कार्यमस्मै
नैश्चिन्त्य - निद्रा - सुखमभ्युपैषीत् ।
तत्पूर्त्तये सोऽपि तथा मनोवाक्-
क्रियाभिरेकाग्रतया प्रयेते ॥ ५५ ॥

छन्दानुवर्ती पृथिवीपतेः स
प्रेष्ठं द्रढिम्ना स्वकमेव जानन् ।
कृच्छ्रेषु कण्ठागत - जीवितोऽपि
सद्वृत्त - सीमां नतमाम् अलङ्घीत् ॥ ५६ ॥

कैङ्कर्य - वैदग्ध्य - विमोहनाऽस्त्रैस्
स सज्जितस् सज्जन - सार्वभौमः ।
द्विष्टं व्यजानाद् नृपतेररिष्टम्
इष्टं च मिष्टं व्यवहार - काले ॥ ५७ ॥

सम्पत् - प्रसादं च विपद् - विषादम्
पैशुन्य - शून्यो हृदि गूहमानः ।
असावनुक्तोऽप्यहितं नृपस्य
निवारयामास सुखं परणायन् ॥ ५८ ॥

स शास्त्र - शस्त्राऽस्त्र - कला - प्रवीणो
धीमद् - धुरीणोऽचल - चेतनः सन् ।
माने न मानं न तथा विमाने
व्रीडां स पीडां भजते स्म काञ्चित् ॥ ५९ ॥

अमर्ष - हर्षौ नृपतेर् विदित्वा
व्यापारयन् कर्माणि चेन्द्रियाणि ।
नाऽपीड्यताऽसौ शयनाऽशनाऽऽशा-
शीताऽऽतपाद्यैः सुतरां सहिष्णुः ॥ ६० ॥

पुरः स पार्थस्य कदाऽप्यपृष्टो
न प्रावदत् पेशल - पारिषद्यः ।
दुरुक्त्ययुक्ताऽऽचरणेऽपि चाऽस्य
न चिन्तयामास हृदाऽप्यनिष्टम् ॥ ६१ ॥

दत्तानि दासेर : दरिद्रितेभ्यो
वसूनि वासांसि विभूषणानि ।
पुनः प्रशंसन् परितः प्रजासु
पार्थ - प्रभावं प्रथयाम्बभूव ॥ ६२ ॥

शौर्यविदानं श्रुतवान् स किञ्चित्
साङ्ग्रामिकं भूमिपतेः पुरस्तात्
प्रसन्न - मुद्रः सततं निदेशम्
प्रत्यैक्षनोत्कन्धर एतदीयम् ॥ ६३ ॥

विवेद वीरः शरणं रणं स
तथा प्रवासं नगराऽधिवासम् ।
राजोपसेवैव सु - खाद्यमस्य
पेयं च यद्वाऽपि सुखाद्यमासीत् ॥ ६४ ॥

भक्तश्च शक्तः स्व - नियोग - सक्तो
नक्तं - दिनं राज्य - हिताऽऽनुरक्तः ।
आकर्षणं किञ्चिदसावकार्षीद्
अमन्त्र - यन्त्रेण धियः पटिम्ना ॥ ६५ ॥

स लोक - यात्रामवधीर्य योग-
क्षेमं च विस्मृत्य कुशाग्र - बुद्धिः ।
न वाच्यतामध्यगमन्नृनाथम्
अनुप्रविश्याऽऽत्म - वशं निनीषुः ॥ ६६ ॥

अनेड - मूकत्वमिवाऽभ्युपेतो
ऽधिकारिणां वाक्कलह - क्रियासु ।
मितङ्गमो धर्म - पथेऽचरत् स
ऋतम्भरो हा ! व्रतमासिधारम् ॥ ६७ ॥

स द्योतयन् स्वामनवद्य - विद्यां
गायन् गरिम्णश्च गुणान् गुरूणाम् ।
गिराऽमृतानीव किरन् समन्तात्
सौम्यः समेषां हृदयङ्गमोऽभूत् ॥ ६८ ॥

रीत्याऽनया सोऽथ नयाऽनुयायी
राज्ञोऽनुकूलं द्यु - निशं व्यवस्यन् ।
तन्मन्यु - मूलं प्रतिकूलमुज्झन्
स्व - साध्य - सिद्धेः समवाप कूलम् ॥ ६९ ॥

समाधि - निष्ठेन तपस्विनेव
स्व - लक्ष्य - सारूप्यमुपागतेन ।
स्फीता उपासा - प्रचुर - प्रयासा
नीता अहो ! द्वादश तेन मासाः ॥ ७० ॥

आराधितः सन् भगवांश्च तेन
भक्त्याऽनुरक्त्या च गत - क्लमेन ।
शालीनता - शोभन - शील - शाली
वर - प्रदित्साऽभिमुखो व्यभासीत् ॥ ७१ ॥

## युग्मकम्

ततः कदाचिज् जगती - विजेता
विद्विड् - विनेता स बहिर्विहारी ।
श्री - विक्रमो लोक - दशां दिदृक्षुर्
यदृच्छयाऽऽलोकत मातृगुप्तम् ॥

कारुण्य - पात्रं कृश - सर्व - गात्रं
कङ्काल - मात्रं प्रतिभासमानम् ।
सुजीर्ण - चीरं पथि तत्र धीरं
सञ्चारिणं पाण्डिम - पुत्तलं वा ॥ ७२-७३ ॥

तथा कथां कारुणिकीं व्यथायाः
संश्रावितो भूमिपतिर् दृशैव ।
दया - बहिःप्रेरित - वाष्प - बिन्दुर्
दध्यौ हतो हा ! ऽशनिनाऽशनैः सः ॥ ७४ ॥

## युग्मकम्

विदेश - वासी शरणेन शून्यो
विवर्जितो वंशज - बन्धु - वृन्दैः ।
सौमुख्य - सौशील्य - सुसंस्कृतात्मा
गण्यैर् गुणैर् गौरवितो गभीरः ॥

जिज्ञासमानेन मया स्वभावं
गाढं तथाऽन्तर्द्रढिमानमेषः ।
आयासितो हन्त ! चिरं तपस्वी
स्वर्णो मुधौ तर्कयतेव दोषम् ॥ ७५-७६ ॥

अहो ! मम स्वार्थ - परायणत्वं
धिग् राज्य - तन्त्रं करुणा - विहीनम् ।
दुःखासिका हा ! जगतो यदग्नौ
सन्तीह सन्तोऽपि परीक्षणीयाः ॥ ७७ ॥

युग्मकम्

किं खाद्यतेऽजस्रमतन्द्रितेन
किं छाद्यते कीदृगनेन वासः ।
सम्पाद्यते कुत्र कथं च वासः
आसाद्यतेऽन्यच्च कदा कुतश्च ॥

एतन्महैश्वर्य - मदाऽन्धितेन
विनोद - कर्त्रा पर - जीवितेन ।
न चिन्तितं हन्त ! मया नितान्तम्
अयोमयेनेव हृदाऽदयेन ॥ ७८-७९ ॥

सुखंकर - स्वार्थ - परायणत्वं
संत्यज्य धर्मान्नितमां प्रमाद्यन् ।
शीताऽऽतपाद्यैः क्षुपवत् तपस्वी
शुष्यन्नयं शोच्य - दशां प्रपन्नः ॥ ८० ॥

अद्यापि नाऽऽकाङ्क्षितमस्य भद्रं
कृपा - कटाक्षेण न वीक्षितोऽयम् ।
सौहार्द - सिक्तैर् मधुरैर् वचोभिः
प्रोत्साहितो नैष च साधुवादैः ॥ ८१ ॥

न पाणिना प्रीति - परिप्लुतेन
पुनः परामृश्य पुटीकृतेन ।
प्रसादितोऽयं परिषत्सु पूज्यो
न सत्कृतो नाऽपि पुरस्कृतो हा ! ॥ ८२ ॥

अयं पुमान्, पुंसु विदग्ध - बुद्धिः
विदग्ध - वृन्देऽपि विशेष - विद्यः ।
ज्ञातोऽकृतज्ञेन मयाऽधमेन
न विप्र - वर्यः पशुनाऽपि तुल्यः ॥ ८३ ॥

कैर् व्याधितः सन्नुपचर्यतेऽयं
भजंस्तथा म्लानिम - मूकिमानम् ।
विनोद्यते चैष विषण्ण - चेताः
ग्राः ! केन सम्पत्ति - सहाय - हीनः ॥ ८४ ॥

चिरोपचारैर् मुदितोऽपि नाऽस्मै
लोकोत्तरं किञ्चन दातुमीशः ।
तत्किं मुधा मुग्ध - धिया मयाऽयं
परीक्ष्यते कश्चन पातकीव ॥ ८५ ॥

तदस्य सेवा - व्रत - तीव्रताया
वैदुष्य - वैदग्ध्य - विशेषतायाः ।
को वाऽनुरूपो भुवने पदार्थः,
स्याद् यत्प्रदानेन कृतार्थता नो ॥ ८६ ॥

सेवा - बृहद् - भार - विकुञ्चितेऽस्मिन्
सङ्कल्प्यते यद् हृदये मयाऽद्य ।
ग्रस्मै महिष्ठाय वशंवदाय
तद् दित्सितं स्वल्पतरं विभाति ॥ ८७ ॥

मयाऽस्य सेवा विनिमीयते चेत्
कैङ्कर्यमावर्षमुपाश्रितेन ।
ग्रानृण्यमेष्यामि यथार्थतोऽहम्
ग्रामुष्मिकं मङ्गलमीहमानः ॥ ८८ ॥

एवं चिरं चिन्तन-चेष्टकोऽपि
धराधवोऽसौ सुतरां कृतज्ञः ।
देयं प्रसादोचितमत्र यद् वा
तद् वा न निर्णेतुमलन्तमोऽभूत् ॥ ८९ ॥

ग्रनन्तरं साधित-कृत्यजातो
विसर्जिताऽमात्य-नियोज्य-वर्गः ।
भूभृद् भरं कञ्चन विभ्रदन्तः
सिंहासनं स्वं [illegible] ॥ ९० ॥

क्षात्रं पुरस्कृत्य सदैव धर्मम्
प्रेष्ठ - प्रजा - पालन - जागरूकः ।
श्रान्तः सुषुप्सुः स ततस्तदाऽन्तः-
पुरं दिनान्ते प्रविवेश पार्थः ॥ ९१ ॥

क्रिया-कलापं स समाप्य सान्ध्यं
चतुर्विधास्वाद्य-निगाद्य-खाद्याम् ।
सग्धिं महिष्यादि-वधू-कुमारैश्
चक्रे ततो हास-विलासकारैः ॥ ९२ ॥

देवो यथाचारमथो कृताशीर्
विसर्जिताऽशेषजनस् ततोऽसौ ।
अन्वीयमानो महिषी-मणीभिर्
विलास-वासं विहसन् विवेश ॥ ९३ ॥

तं तस्थिवांसं तत-तूल-तल्पे
रत्न - प्रभा - तारकिताऽभ्र - कल्पे ।
प्रीत्या परीता विविधैर् विनोदैः
राज्योऽररञ्जन् रमणीय-रूपाः ॥ ९४ ॥

शुच्यम्बुधारा - श्लथहारभाजा
सुवर्ण - कुम्भ - स्तन - युग्मकेन ।
नता नृपस्योपरि मालवी किं
राज्याभिषेकं पुनरस्य चक्रे ? ॥ ९५ ॥

अर्धाङ्गमाहुः सकलाः कलत्रम्
परं कला - कौशल - कीर्तनीया ।
आत्मैव भूभर्त्तुरभूद् बहिःस्था
सा प्राणधारा यदि वाऽपि साक्षात् ॥ ९६ ॥

प्रत्यग्र - लावण्य - परिष्कृताङ्गीं
निर्माय नूनं निपुणो विधाता ।
दिदृक्षयेमामभितोऽष्टनेत्रस्
तुष्टूषमाणश्च चतुर्मुखोऽभूत् ॥ ९७ ॥

काश्मीरिका काचन काच - कूपी
कादम्बरी - स्वादिम - सार - सम्भृता ।
उन्मादनोद्दाम - चलाक्षि - विभ्रमैर्
विहस्तितं हस्तकितं चकार तम् ॥ ९८ ॥

जिष्णोः सदा सङ्गर-नायकस्य
विपक्ष - विध्वंसक - सायकस्य ।
स्मारीव साक्षाच्छर-यष्टिरेषा
प्रागेव राज्ञी हृदये विवेश ॥ ९९ ॥

अङ्गेषु लग्नेन्दु - कला - कलापा
शरीरिणी मन्मथ-शासनाज्ञा ।
आन्ध्रीश्वरस्योर्जित - शासनस्य
हृदा सहाऽशादवरोध - राज्यम् ॥ १०० ॥

अनन्य - सामान्य - शरीर - शोभया
विस्मापनी स्रष्टुरहो ! विधेरपि ।
पीयूष-वृष्ट्या वदनेन्दुना स्मर-
द्रुमं जगत्यङ्कुरयन्त्यभात् सा ॥ १०१ ॥

कर्णाटजा मन्मथ - मोह - मन्त्र -
विद्येव मूर्ता त्रिजगद्-विजेत्री ।
विनोदिनी मानस - मोदिनी च
पार्थं पराजेष्ट कटाक्ष - बाणैः ॥ १०२ ॥

विघूर्णमाना नव - यौवनेन
वातेन तन्वी ललिता लतेव ।
कान्त्यैव लोके कृत - कौतुका या
प्रथाऽनुरोधादिव संस्कृताऽभूत् ॥ १०३ ॥

गान्धार - गौरी नत - केशजाला
बाल - प्रवालाऽधर - लोभनीया ।
गेया गरीयो - गुण - गुम्फितेत्यहो !
चेतश्चमत्कृं नृपतेरपाशयत् ॥ १०४ ॥

सविभ्रम - प्रौढिम - रञ्जितेव
विद्योतयन्ती ककुभः - स्व - कान्त्या ।
सौधेन सार्धं क्षितिपं सुधाभि-
रवाकिरन्मूर्त्तिरिवैन्दवी या ॥ १०५ ॥

सा पारसीक - प्रभवा च राज्ञी
गताऽतिभूमिं लवणिम्न आसीत् ।
यत्पीयमानाऽपि दृशाऽधिराजस् -
तृष्णां क्रमेण प्रचुरीचकार ॥ १०६ ॥

मही - महिष्ठस्य मनो - मृगो मा
धावीच् चतुर्दिक्कमितीव धात्रा ।
रूप - श्रिया वागुरयेव सज्जा
लज्जावती सा रचिता विचित्रा ॥ १०७ ॥

सर्वातिशायिन्यथ सैन्धवी वधूः
सौन्दर्य - सर्वस्व - समृद्ध - सौभगा ।
स्वःसुन्दरीणामपि साहचर्यं
स्वप्नेऽपि भर्तुर् मनसो ममार्ज ॥ १०८ ॥

आत्मानुरूपाऽत्र च साऽतिरूपा
पद्माननेनैधित - माननेन ।
तच्चक्षुषी चञ्चल - चञ्चरीकौ
कर्तुं मधूत्कौ प्रभविष्णुरासीत् ॥ १०९ ॥

सुहासिनी सिंहल - वासिनीह
सिंहस्य सिंहीव सुलासिनी सा ।
आदित्य - रूपस्य . सरोजिनीव
दूरेऽस्य तिष्ठन्त्यपि पुष्पितासीत् ॥ ११० ॥

तं राजसिंहं जघनं घनं तत्
तस्या मुहुः कुञ्जर-कुम्भ-कल्पम् ।
काञ्च्याः क्रमे किङ्किणिका - क्वणस्य
[illegible]ऽऽह्वयत् किं स्मर-सङ्गराय ? ॥ १११ ॥

परस्पर - स्पर्धि - गुणैरुपेत-
मेतद् विलोक्याऽद्भुतमत्र यौवतम् ।
महीमहेन्द्रस्य सुरत्न - कोषं
स्युर् निर्निमेषाः किमु ताः स्वरङ्गनाः ? ॥ ११२ ॥

एता महिष्यो हृदये महीपतेर्
दत्तावधाना द्युनिशाववस्थिताः ।
शृङ्गारिणी - पौरुष - लम्पटाभ्यस्
तद्रक्षणं चक्षुरिवाऽङ्गगोपिकाः ॥ ११३ ॥

नीत्वा मिताः कालकलाः स तत्र
कलत्र - काक्षैः कल - केलिकारः ।
भटैर् भवत् - सर्वपथीन - रक्षं
स्वं स्वप्न-कक्षं क्षितिरक्षकोऽगात् ॥ ११४ ॥

दाराश्च दासीः परिवर्त्य पश्चात्
प्रणम्य पार्थः पृथिवीं पुरस्तात् ।
ततो निमीला - मुकुलीकृताक्षः
पर्यङ्किकाऽङ्के निममज्ज तस्मिन् ॥ ११५ ॥

सा शायिना जागरिणाऽप्यजस्रं
तेनाधिराजेन रराज शय्या ।
निमीलिताब्जा सरसीव शुद्धा
शिलास्थली केसरिणेव हैमी ॥ ११६ ॥

स्फीताच्च शीतात् तपनोऽतिभीतो
वेगी बभूवाऽन्तरितोऽस्त - कुक्षौ ।
यातोऽथवा तापयितुं स्वमङ्गम्
मन्ये पयोधावुपवाडवाग्नि ॥ ११७ ॥

इने निमग्ने क्षितिजे रुवत्सु च
नीडेषु विष्वग् विहगा विलिल्यिरे ।
मिथो विविक्ते मिथुनानि यूनाम्
एकत्वमापुश्च भुजान्तरेषु ॥ ११८ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'मातृगुप्तोपचार-वर्णनम्' इत्यभिधेयः षष्ठः सर्गः पर्यवसितः ॥

# सप्तमः सर्गः

यातो यत्करुणा - कटाक्ष - विषयं रङ्कोऽपि राजायते,
दुर्लक्ष्यः कृपणः कणोऽपि सहसा भूभृच्च जाजायते ।
मार्जारः प्रभविष्णुतां च कलयन् सद्यो मृगेन्द्रायते,
तिग्मांशोस्तुलनां दधत् किमपि तत् तेजोऽस्तु भद्राय ते ॥ १ ॥

अथ प्रदोषे प्रसृतं पृथिव्या
तिरश्चिकीर्षुस्तिमिरं सुधांशुः ।
पूर्वाद्रि - पृष्ठाच्छनकैर् उदञ्चन्
ऐक्षिष्ट काक्षेण तनु - प्रकाशः ॥ २ ॥

समुच्छलद् - यौवन - चापलानां
स्निग्धैः कराग्रैः कुतकूतयित्वा ।
कण्डूलमन्तःकरणं विधित्सुः
रोहाऽऽनुपूर्वीमभजत् सितांशुः ॥ ३ ॥

नभोऽङ्गनाऽन्तर्विशतैव तेन
संमार्जनी - स्पर्धि - गभस्ति - गुच्छैः ।
तमस्ततिः कोकिल - धूलि - कल्पा
प्रास्ता प्रतीचीन - गिरेर् गुहायाम् ॥ ४ ॥

प्राची - वधू - केलिकया प्रणुन्नः
तुषार - संपिण्डित - कन्दुकाभः ।
व्योमाजिरेऽसौ विलुठन्निवेन्दुः
शनैः प्रतीच्यङ्कमभिप्रतस्थे ॥ ५ ॥

अनुव्रजन् लम्पटवद् दिन-श्रीं
दराद् विदूरं दिवि विद्रवन्तीम् ।
स्रस्तस्य तस्याः किमु नूपुरस्य
लेभे न साम्यं स्वयमेव सोमः ? ॥ ६ ॥

उपाव्रजन्तं द्विजराजमेनम्
अन्तःस्थ - संकल्पित - बिम्ब - रूपः ।
हिण्डीर - हुङ्कार - हसा सरस्वान्
सभाजयामास महोर्मि - माल्यैः ।। ७ ।।

छायामिषात् संनिहितं सुधांशुं
रत्नाकरस् तात इवाऽऽत्मजातम् ।
बाहूपमोत्तुङ्ग - तरङ्ग - भङ्गैः
परिष्वजन् नैव पुनर् व्यरंसीत् ।। ८ ।।

स्मेरैर् मुखैश् चन्दिरमुत्पतिष्णुं
सभाजयद्भिः सहसा समीनम् ।
पूजार्थमात्मैव सितैः सरोजैर्
व्यधायि दीनैः प्रणयोपहारः ।। ९ ।।

अजङ्गमाश्चैव शिरीष - मुख्याः
पुटीकृताऽशेष - पलाश - हस्ताः ।
स्रवत्प्रमोदाऽस्र - तुषार - धाराः
सम्भावयामासुरिवौषधीशम् ।। १० ।।

## युग्मकम्

दूरात् स्फुटचञ्चु - पुटैश् चकोरैः
पेपीयमानं, युव - दम्पतीभिः ।
औत्सुक्य - निःस्तब्ध - दृशाऽथ चन्द्र-
शालासु दूरं प्रतिपाल्यमानम् ।।

वत्स - प्रियं वस्तु विलोभनीयम्
अज्ञातमन्यैर् मदनस्य मित्रम् ।
नभः - सरोजात - सिताऽरविन्दं
विदिद्युते सुन्दरमिन्दु - बिम्बम् ।। ११-१२ ।।

सूची - सहस्रोपमितैर् मयूखैः
प्राणंददं किञ्चन सत्त्व - तत्त्वम् ।
संचारयन् स्थावर - जङ्गमेषु
सार्थामभिख्यामभजत् सुधांशुः ।। १३ ।।

ख-चत्वराऽन्तर्विशताऽथ विष्वक्
चङ्क्रम्यमाणेन सुधाकरेण ।
सुधा - सुधौतो वसुधा - महल्लो
मरीचि - कूर्चैर् अचिराद् व्यधायि ॥ १४ ॥

अख्यातमस्त्वं मदनस्य किञ्चिद्
द्यु - देवता - पिष्ट - पुटाऽनुरूपम् ।
प्राची - वधूट्याऽखिल - मोहनाया -
ऽभिचारितं प्रास्तमिदं प्रसूनम् ॥ १५ ॥

प्रियापराधैः पुनराप्त - पोषो
रोषो दिवा मानभृतां वधूनाम् ।
अस्थास्नुना सन्तमसेन साकम्
अतर्कितं हन्त ! तिरोबभूव ॥ १६ ॥

भिन्नं तदा मेदुर - मान - मूलम्
मौनं तथाऽऽसां हृदयं कठोरम् ।
शीतांशु - कान्तोपलवद् द्रुतं सद्
द्रुतं व्यतानीन् मृदुतामपूर्वाम् ॥ १७ ॥

समन्ततः सन्तमसं सितांशोः
सन्त्रासतः सङ्कुचित - स्वरूपम् ।
शिश्राय शीघ्रं शरणाऽभिलाषि-
च्छाया - छलेनाऽद्रि - दरी - द्रुमादीन् ॥ १८ ॥

कुञ्जेषु मूका निभृतेषु घूकाः
कक्षेष्वथो कन्दर - मन्दिराणाम् ।
चान्द्रीं प्रभामातपमेव मत्वा
नीडानहो ! नोदसहन्त मोक्तुम् ॥ १९ ॥

द्यु - देवताऽऽदाय शशाङ्क - दीपं
चङ्क्रम्यमाणाऽम्बर - चक्रवाले ।
नष्टं निचोलं तिमिर - स्वरूपम्
अद्याऽप्यभासिष्ट गवेषयन्ती ॥ २० ॥

निरीक्ष्य तं शीत - सुधानिधानं
दीनोऽध्वनीनः स्मृत - वल्लभाऽऽस्यः ।
वेविध्यमानः खर - कण्टकाऽग्रैर्
अभूत् कुकूलानल - पच्यमानः ॥ २१ ॥

निमेष - वर्जं विधु - दर्शिनोऽस्य
वियोगिनो वाष्प - पयः - प्रवाहे ।
वाचंयमानां मृदु - मानसानां
नेत्रे परेषामपि हा ! निमग्ने ॥ २२ ॥

केदारमुत्सृज्य तथाऽर्धं - कृष्टं
स्मरन् प्रियामिन्दुमुखीं कृषाणः ।
वृष - श्रम - व्याजमहो विधास्यन्
चचाल जङ्घाल - जवोऽभिगेहम् ॥ २३ ॥

सद्यः समास्वादित - यौवनानां
विधेर्विलासेन वियोगभाजाम् ।
सङ्कल्प - लीला नवदम्पतीनां
विनिद्रयामास करैः कलावान् ॥ २४ ॥

उत्कण्ठयाऽऽलोडित - चेतनानां
विलम्ब - वर्जं विहिताऽऽह्निकानाम् ।
चक्रे स चन्द्रो मिथुनानि यूनां
विलास - वाटी - वलभी - प्रियाणि ॥ २५ ॥

कोक - द्विकानां स दिदृक्षमाणः
सङ्गं, तथा शाश्वतिकं जिहीर्षुः ।
शोकं शशी बिम्बमिषात् तटिन्या-
मवातरच्चन्द्रिकयोपगूढः ॥ २६ ॥

सम्प्राप्त - नैसर्गिक - सङ्गमानि
स्युश्चक्रवाक - द्वितयानि विष्वक् ।
इतीव सोऽभूत् तिमिराऽपहारी
प्रज्वालितः कोऽप्यपरः प्रदीपः ॥ २७ ॥

युगायमानान् गमयन् निमेषान्
युवा न जाने विमृशन् किमन्तः ।
निःश्वास - बाष्पैर् मुकुरेऽन्धितेऽपि
चुचुम्ब बिम्बं शशिनोऽनुवारम् ॥ २८ ॥

केन्द्रं कवेः कोमल - कल्पनानाम्
मेरुर् महांस्तारक - मालिकायाः ।
राजा रजन्या उपमान - नेता
द्योरङ्क आभात् स शिशोर्मुखाभः ॥ २९ ॥

श्रान्तान् नितान्तं श्रमिकान् दिनान्ते
कर्पूर - मिश्रैर् नवनीत - लेपैः ।
आप्याययन् चन्दन - चर्चया वा
सोऽवाकिरच् चन्द्रिकया दिगन्तान् । ३० ॥

आघात - हेतोश् चरमाऽचलस्य
सन्ध्या-श्रियो हस्ततलाच् च्युतं सत् ।
व्यलोकि तारा - युतमिन्दु - बिम्बं
तद् राजतं स्थालमिवाऽस्त-मुक्तम् । ३१ ॥

चान्द्री प्रभा केलिक - दम्पतीनाम्
अधिष्ठितोत्तुङ्ग - शिरो - गृहाणाम् ।
मुखेषु पिष्टेन विनैव काञ्चिद्
अलङ्क्रियां साहजिकीं चकार ॥ ३२ ॥

स दन्तुरेण क्रकचेन तौल्यं
विधुर् वहंश्चक्र - वर्तुलेन ।
व्यापारयन् शूल - शतानि पान्थ -
स्वान्तेषु तिग्मांशुरिवाऽभ्यनैषीत् ॥ ३३ ॥

अयाद् यथा दन्तुरमिन्दु - चक्रं
करानराऽऽभान् निखनन् दिवोऽङ्गे ।
तोदस्तथाऽभूद् विधवाऽक्षि - युग्मे
शीतांशुरेवाऽजनि हा ! शितांशुः ॥ ३४ ॥

रेजे यथाऽपास्त - जनोपतापो
महीभृतां संसदि साहसाङ्कः ।
चराऽचरं शीतलयन् नितान्तं
तथैव तारा - वलये शशाङ्कः ।। ३५ ।।

बिभ्रद् विभां कामपि कामधेनोर्
बाणस्य कुक्षि - स्थित - दुग्ध - सिन्धोः ।
गां प्लावयत् पायस - कौमुदीभिर्
बिम्बं बृहद् व्योम्नि विधोर् बभासे ।। ३६ ।।

कलावतः कौतुक - कारि किञ्चित्
कूट-क्रिया-कार्मण-कौशलं किम् ? ।
यच्चन्द्रिमा - चन्दन - चुम्बिताङ्गी
श्यामाऽपि गौर्या गुरुतां जगाहे ।। ३७ ।।

वृन्दार - बाला - वदनं बभौ तद्
वृथैव बालैर् विधु - बिम्बमुक्तम् ।
नाऽसौ कलङ्कः किल कालिमाऽङ्कः
कुदृष्टि - दोषोपशमाऽभिचारः ।। ३८ ।।

कवीश्वरैः कीर्तित - मञ्जिमानि
विधुर् वधूनां वदनान्यजैषीत् ।
ताभिर् हृतं तद् हृदयं निशातैः
कार्श्यैर् ध्रुवं येन स रिक्त - मध्यः ।। ३९ ।।

दोषाऽऽदिभिर् दुष्ट - पदैस् त्रियामां
मुधैव मुग्धा इह दूषयन्ति ।
शीतं निपीतं नयनैर् न यैः स्यात्
सुधाकराऽऽख्यं वदनं तदस्याः ।। ४० ।।

## त्रिकम्

मञ्जीर - मुख्यानि विभूषणानि
विमुच्य शुक्लाऽम्बर - संवृताङ्गी ।
काऽपीक्षमाणा परितोऽपि पृथ्वीम्
पद्भ्यां स्पृशन्ती यदि वाऽस्पृशन्ती ।।

छायां विलोक्याऽध्वनि वेणु - पार्श्वं -
प्रशाख - जातां भुजग - भ्रमेण ।
उल्लङ्घयन्ती कृत - झम्प - पातं
निशाचरी पीन - नितम्ब - विम्बा ॥

वात्योपमर्द् भाव - शतैः प्रणुन्ना
दिवान्ध - घूत्कारमुपेक्षमाणा ।
विलासिनी वामनतामुपेत -
च्छायाऽभिसङ्केत - निकेतमागात् ॥ ४१-४३ ॥

उच्चावचाऽऽभा - निचयैश्चकासत्-
तारावली - मण्डलितेन्दु - मूर्त्तिः ।
वधूरिवाऽभासत शुभ्र - चोला
वृतालिभिः कौतुक - केतनस्था ॥ ४४ ॥

संहृत्य सारं सकलं सुधांशोर्
वक्त्राणि वेधा विदधे वधूनाम् ।
मध्यं यदद्याऽपि हि तस्य रिक्तं
सुधा च तिष्ठत्यधरेषु तासाम् ॥ ४५ ॥

वामा - मुखानाम् उपमान - मानं
प्राप्य क्रमात् पाद-नखैश्च साम्यम् ।
लप्स्येऽधुना कस्य तुलां खलस्ये—
त्येवाऽति दूरात् प्रचचाल चन्द्रः ॥ ४६ ॥

चकोर - चन्द्रातप - चुम्बनानि
रहश्चिरेणाचरितानि चौर्यात् ।
वृथा व्यमृश्यन्त भृश - प्रलापैः
कर्णेजपैष्टिट्टिभ - दम्पतीभिः ॥ ४७ ॥

ध्रुवं हिमांशो हरिणं विलोक्य
कुतोऽप्यबुक्कत् कुकुरः किलैकः ।
क्रमाद् यदग्रे भषणं दिगन्ते—
[illegible] दूरम् - सञ्चाल्य - सङ्घैः ॥ ८४ ॥

प्राचीन - लाम्पटच - कलङ्किताऽङ्गः
प्राचीं पुरस्तात् परिचुम्ब्य पश्चात् ।
प्रायात् प्रतीचीं परिरिप्सुरिन्दुर्
दुर्वार - वीर्या मदनस्य माया ॥ ४९ ॥

स्थिते तदानीं निभृते निशीथे
ज्योत्स्नांऽशुकेनाऽन्तरिता 'विशाला' ।
सूत्कारिणी स्वप्नमवेक्षमाणा
साऽङ्के विलिल्ये सुखशायिकायाः ॥ ५० ॥

मूकिम्नि मज्जन्मणितेषु तस्या
पराङ्मुख - स्वप्तृ - वधूवरेषु ।
कासः क्वचिद् वेश्मसु कुत्रचिच्च
वत्स - प्रलापः श्रुति - गोचरोऽभूत् ॥ ५१ ॥

विवर्तमानाः शयनेषु योग—
निद्राभृतोऽस्थास्नु - हृदश्च केचित् ।
विजृम्भमाणा घुरिका - जुषश्चो -
त्स्वप्नायमाना बहवो बभूवुः ॥ ५२ ॥

स्नातं सुधा - चन्द्र - रुचा तदानीं
हर्म्यं शकारेस्तुहिनाऽवदातम् ।
तदीयमेवाऽनुपमं वपुष्मत्
सम्पिण्डितं सच्चरितं बभासे ॥ ५३ ॥

हर्षो यथाऽनन्य - गुण - प्रकर्षो
विख्यात - नामा भुवनेश्वरोऽसौ ।
प्रासाद एषोऽपि तथैव वास्तु-
विद्या - स्वरूपो भवनेश्वरोऽभूत् ॥ ५४ ॥

धुर्यं धराऽधीश्वर - धाम धौतं
पवित्रितं पार्थ - पद - प्रसङ्गात् ।
सम्मान - शीलः सकलोऽपि लोको
मनोहरं मन्दिरमेव मेने ॥ ५५ ॥

सौरभ्य - संवासित - पत्र - पुष्पैर्
महीरुहैर् मण्डलितं मनोज्ञैः ।
सैन्यैरिवाऽहर्निश - सावधानैः
रारक्ष्यमाणं रुरुचेऽभितस्तत् ॥ ५६ ॥

स्थापत्य - कौशल्य - निदर्शने तद्-
द्वारे द्रुमा माङ्गलिका लसन्तः ।
दण्डायमाना इव पार्श्वयोश्च
दौवारिकाणां व्रतमन्वतिष्ठन् ॥ ५७ ॥

प्रसून - जालैर् मुकुलैः प्रवालैः
प्रसाधिता मालिक - कल्पनैश्च ।
लता भुजिष्या इव यस्य कान्तिम्
अनेक - रूपा गुणयाम्बभूवुः ॥ ५८ ॥

रक्षा - निमित्तं परितः पदव्या
यदावृतं लक्ष्मण - लेखयेव ।
राजाधिराजस्य महो - महत्त्वाद्
आ सिन्धु - कूलाज् जगतीं जुगोप ॥ ५९ ॥

चैतन्य - धन्यश् चर - चारु - चक्षुर्
जगज्जनारक्षण - जागरूकः ।
पल्यङ्कमाश्रित्य सुपेशलाङ्कं
शिश्येऽत्र भव्ये भवनेऽवनीशः ॥ ६० ॥

अध्यासितं केसरिणेव कन्दरं
विष्वक् परेषां तनुतेऽमितं दरम् ।
स्वाऽभिख्यया निन्दित - पूर्ण - चन्दिरं
तद् विक्रमेणाऽपि तथैव मन्दिरम् ॥ ६१ ॥

तात्कालिकाऽल्प - क्षुप - पालिकाभिः
संलालिता मालिक - बालिकाभिः ।
विलोक्य तत्तोरण - सिंह - मूर्त्ती
कुरङ्गिका दूर-दिशो व्यधावन् ॥ ६२ ॥

तदाऽटवी - वाटक - वाटिकासु
पदे पदे श्वापद - मण्डलानि ।
नादैर् मिलन्मान - मनः - प्रसादै-
राध्मापयन् मूक - दिगन्तराणि ॥ ६३ ॥

स्व - यूथनाथस्य निशम्य दीर्घ-
रावं कुटुम्बानुगतस्य पश्चात् ।
शृगाल - बालास् तनु - कण्ठनालाः
क्रोशाऽवधि क्रोशमहो ! वितेनुः ॥ ६४ ॥

अत्रान्तरे चैकपदे समस्ताः
प्राणानिवाऽऽयम्य दिशो निषेदुः ।
मौक्यं गते खे जडिमानमाप्ता
तारा - ततिस् त्राटकिनीव तस्थौ ॥ ६५ ॥

नूनं गलेष्वर्गलितानि तानि
शान्तान्यलं श्वापद - शब्दितानि ।
यथार्थतो नैङ्गत तस्थुषो च
धराऽभितः स्तम्भित - जीवजाता ॥ ६६ ॥

विष्वक् परं वायस - वाशितानि
विजृम्भमाणानि च रम्भणानि ।
उद्वीक्षमानस्य गवां गणस्य
न्यवेदयन् भावि किमप्यपूर्वम् ॥ ६७ ॥

युग्मकम्

ततो दिनाऽर्क - ज्वलित - प्रतीची-
धूमेन नूनं तरसाऽऽगतेन ।
यतस्ततोऽन्तर्हित - निःसृतेन
दुध्रुक्षुणा वा तमसाऽहितेन ॥

यद्वाऽब्द - रूपेण पयोधिनेन्दुं
स्व - दारकं द्रष्टुमुपाश्रितेन ।
अनुक्रमं छन्न - पदार्थ - जालं
दिक् - चक्रवालं प्रलयं प्रपेदे ॥ ६८-६९ ॥

यथा विवाहेष्विह होम - धूमो
वरस्य वक्त्राऽभिमुखं प्रयाति ।
तथाऽसरीसृप्यत वेग - वाही
स पश्चिमः श्यामलिमाऽभिचन्द्रम् ॥ ७० ॥

तदाऽसितिम्नेत्य मनाग् धृतः खे
गजेन्द्र - दन्तोपमितिं प्रपन्नः ।
अकाण्ड एवैष च शीतभानुः
स्वर्भानुनाऽऽक्रान्त इवाऽऽबभासे । ७१ ॥

मुहुर् महीं काण्ड - दलैः स्पृशद्भिर्
नन्नम्यमानेन दराद् द्रुमाद्यैः ।
प्रासार्यताऽऽन्ध्यं परितः करीष-
ङ्कषेण रौद्रेण समीरणेन ॥ ७२ ॥

अरण्य - वाटीषु शरण्य - भूतान्
प्रियानिवाऽऽसन्न - तरांस्तरूंस्ताः
दोधूयमानाः कृपणा व्रतत्यः
परामृशन् हन्त ! वृथाऽसहायान् ॥ ७३ ॥

लता - द्रुमाः शीतलतामिवाप्ताः
प्रवेपमाना विपिनेऽपि विष्वक् ।
आच्छादयन् ध्वान्तमिषात् स्वदेहान्
स्थवीयसा कालिम - कम्बलेन ॥ ७४ ॥

काष्ठा - कडत्कार - महोत्कटानि ।
टङ्कार - ठात्कार - कठोरितानि ।
धूत्कार - धूतानि वियत्तटानि
जातानि चीत्कारज - चण्डिमानि ॥ ७५ ॥

हुङ्कार - गर्भो निरवग्रहोऽग्रे
प्रधर्षयन्नेव चराऽचरांस्तान् ।
संरोधिनो द्वन्द्व - नियुद्ध - हेतो-
श्चक्रन्द मन्ये भुवि चक्रवातः ॥ ७६ ॥

भूकम्प - भीत्या बहिरभ्युपेता।
सङ्घट्टमाना रमणी - मणीभिः।
आम्रेडयन् वेश्म - मुखे जरन्तो
रामेति रामेति मुखेन दीना। ॥ ९१ ॥

उत्पात - भी - विह्वलया तरुण्या
भर्त्तेति मत्वा सहसोपगूढः।
सौभाग्यभाजामधिपो युवैको
ननाम वात्यां मनसैव मौनी ॥ ९२ ॥

झञ्झा नगर्या ध्वज - हस्त - कम्पैर्
आपृच्छ्यमानाऽम्बु - कणान् किरन्ती।
वाष्पोष्म - गन्त्रीव जगाम विद्युद्-
वर्ति समादाय ततोऽन्य - देशान्। ९३ ॥

एवंगते प्राणभृता समस्ता
प्रस्तात्म - देहाः शयनेषु लीनाः।
कोलाहलोऽपि क्लिशितः क्रमेण
मूर्छिम्न्यमाङ्क्षीत् सह सम्भ्रमेण ॥ ९४ ॥

सपदि पिहित - काये विप्रलीनेऽन्तराये
पुनरुपहित-रूपः कोऽपि पीयूष-पूपः।
नियमित-भ-समाजोऽभ्यर्चितो राजराजो
जगति जनित-नन्दः खे चकाशे स चन्द्रः॥ ९५ ॥

रजनि-जनिकयाऽन्ते प्राणि-जाते प्रशान्ते
त्वरितमवनि-वत्सा गोपनीयाऽङ्गवत् सा।
भपति - रुचि - पटेन श्वेतिमाऽब्धिच्छटेन
पवन-हति-विमूढा प्रागिवाऽभून्निगूढा ॥ ९६ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ॰ श्यामदेव - शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, चन्द्रोदयादि-
वर्णनम्' नाम सप्तमः सर्गः समाप्तः॥

# अष्टमः सर्गः

अद्यापि धाम्नो ध्वज-वस्त्र - हस्त-
संज्ञा - सहस्रेण निमन्त्र्यमाणाः ।
प्रधावनाच्छ्रान्त - नितान्त - शान्त-
वात्योर्मयो जातु पुरीमधुन्वन् ॥ १ ॥

शिखाऽवशेषाणि शिरांसि नामं-
नामं द्रुमाः शून्य-विशीर्ण-शाखाः ।
यातं प्रवातं पुनरागमिष्णु
मत्वेव मन्येऽन्वनयन् वराकाः ॥ २ ॥

ततो निशान्ते नृपतिः हसन्त्या
सन्ताप्यमाने ससुखं शयानः ।
खडक्किकाऽऽघात - रवं निशम्या-
ऽकस्माज् जजागार महानिशायाम् ॥ ३ ॥

स लोकपालो भवने प्रदीपान्
प्रवेपमानान् पवन - प्रहारैः ।
निर्वापितान् वाऽपि तदा प्रभूतान्
खद्योतवच्च स्फुरतो लुलोके ॥ ४ ॥

ततः स तान् दीपयितुं महीपः
संलक्ष्य पार्श्वानुचरान् अगादीत् ।
"कक्ष्यागतस् तिष्ठति यामिकेषु
सज्जोऽथवा रक्षिषु कोऽधुने"ति ॥ ५ ॥

सुखं समस्तोऽप्यनुजीवि - वर्गो
निद्रा - निमग्नः समभूत् तदानीम् ।
व्यबुध्यतैकः स परन्तु बाह्य-
कक्ष्या - गतः पण्डित - मातृगुप्तः ॥ ६ ॥

सौधे नियुक्तेषु स यामिकेषु
दत्ताऽवधानः शित - हेति - हस्तः ।
प्रमाद - वर्जं नियताऽधिकारे
स्थूणेव तावत् स्तिमितोऽवतस्थे ॥ ७ ॥

निशम्य नाथस्य निदेशमेष
कर्त्तव्यनिष्ठो विनयं विवृण्वन् ।
"इहैष सर्वेश्वर ! मातृगुप्तः,
कक्ष्यान्तराऽन्तेऽस्म्यह'मित्युवाच ॥ ८ ॥

इत्येवमुक्ते प्रविशेति सद्यो
दत्ताऽभ्यनुज्ञः प्रभुणा स्वयं सः ।
लावण्य - लक्ष्मी - सुख - संनिधानं
स्थानं विवेशाऽन्यजनैरदृष्टः ॥ ९ ॥

"मन्दानिमान् साधय दीप - वृक्षान्
दृष्ट्वा दशां चाऽत्र दशा-मुखानाम् ।
तैलादिना प्रोज्ज्वलय प्रदीपान्"
इत्यादिदेशाऽथ महीपतिस्तम् ॥ १० ॥

ततो यथाऽऽदेशमसावशेषं
प्रकाश - भूम्ना परिपूरिताशान् ।
सम्पाद्य तान् प्राक् चिलिमीलिकाभान्
सज्ज-क्रमः शीघ्रतयाऽधियासत् ॥ ११ ॥

"तिष्ठ क्षणम्" तावदितीश्वरेण
प्रोक्तो भियाऽऽप्त - द्विगुणाङ्गकम्पः ।
किंनु ब्रवीतीति विचिन्तयन् स
नम्रो न्यषीदन्निकटे नृपस्य ॥ १२ ॥

एवं स्थिते ऽसाववनीश्वरेण
"निशाऽस्ति शेषा कियती"ति पृष्टः ।
"सार्धोऽवशिष्टः प्रहरः क्षपायास्"
तदेति सप्रत्ययमाह वाक्यम् ॥ १३ ॥

जगाद भूयो जगदेकनाथः
"कथं यथार्थः समयो रजन्याः।
ज्ञातस्त्वया केन च हेतुना त्वं
निद्रा - दरिद्रो न सुखं प्रसुप्तः ?" ॥ १४ ॥

ततो दशां वास्तविकीं निवेद्य
संत्यक्तुकामोऽधनतां स्पृहां वा।
सद्यः स पद्ये हृदयेऽनवद्ये
निर्माय निर्माय्यमिदं चचक्षे ॥ १५ ॥

"यदुच्यते नाथ ! कुतोऽस्म्यसुप्तः
तन्न्यायिनः कस्य नु कौतुकाय।
को धर्मभीरुः प्रथयन् प्रमादम्
पतेद् विजानन् निरये रयेण ॥ १६ ॥

आसादयन् 'किञ्चन' राजकोशाद्
नियोजितो वैतनिकोऽत्र हर्म्ये।
नाऽनुग्रहीतुं नरनाथ ! कञ्चिद्
निर्निद्रतायां गमयामि यामान्" ॥ १७ ॥

विशांपतिस्तां विनिशम्य वाचं
वशंवदस्याऽस्य विदांवरस्य।
भूदेवमादर्श - चरित्रमेनम्
विवेद साक्षाद् भुवि देवमेव ॥ १८ ॥

पद्ये निशम्याऽस्य तु 'किञ्चनेति'
पदं, विचार्याऽस्य च गौरवं तत्।
लघिष्ठमात्मानमथाऽगुणाज्ञम्
प्रीतोऽपि पार्थैस्तुलयन् ललज्जे ॥ १९ ॥

स दीर्घ - दर्शी कवि - कोविदोऽथ
विलोक्य विग्नं नृपतिं नताक्षम्।
पुष्णन् पुनः पद्यमयं स्व-पक्षम्
विपद्दशा - व्यञ्जकमित्युवाच ॥ २० ॥

"आकीर्णं वलिमण्डलैर् मम मुखं दौःस्थ्यस्य चिन्नैरिव
दारिद्र्योत्कषितस्य पाकिम - विशुष्यत्कारवेल्लोपमम् ।
शीत-स्फीत-विपादिका-वलयितं यत् पाणिपादं स्फुटद्
व्याचष्टे विगुणं विधेर्विलसितं तद् व्यात्त-वक्त्रं ध्रुवम् ।। २१ ॥

कक्ष्यायां भ्रमणं करोमि च तथा कालस्य संसूचको
देवाभं परितो ध्रुवं चरति खे सप्तर्षि - सङ्घो यथा ।
प्रत्यूषाऽवधि धर्मपाल ! दरितो दण्डात् प्रचण्डात्तथ
स्वापो नैति सदोषवन्नयनयोः पापो न पार्श्वेऽपि मे ।। २२ ॥

जाड्येनेव जडीकृता न रजनी राजन् ! तथा क्षीयते
चिन्ता चेतसि सञ्चिता च सुचिरात् काचिन्ममाशा यथा ।
प्रोद्बोधः परतस्तथा च नतमां तापाय मे कल्पते
दत्तो योग्यतमाय साधुपुरुषायो"च्चोऽधिकारो" यथा ।। २३ ॥

आचम्य वाचो वदतांवरस्य
प्राचोऽस्य सारस्वत - सार - सौम्याः ।
विनाऽपि शीतं पुलकी प्रसादात्
तं साधुवादैः प्रशशंस पार्थः ॥ २४ ॥

प्रायः प्रमोदाऽश्रु - परिलुप्ताभ्याम्
विलोचनाभ्यां पुरतोऽभिषिञ्चन् ।
तं सन्दिहानं हृदयेऽधुनाऽपि
सम्प्रेषयामास स बाह्य - कक्षाम् ।। २५ ॥

ततो विविक्ते व्यथितः स नूनं
वैलक्ष्य - वश्यो वसुधां विविक्षन् ।
नरेश्वरो निश्चल - निम्न - नेत्रो
व्यचीचरच्चेतसि चाऽचिराय ॥ २६ ॥

अनोपदेशिकं तत्त्वं काव्ये स्वारसिकेऽद्भुतम् ।
प्रातिभं व्यञ्जयत्यस्य बन्ध - कौशल्य - शालिनः ॥ २७ ॥

देहे दर्शयता दूरं दीनतां हर्षं - हीनताम् ।
आशा - नाशाऽमुनाऽऽख्याता [illegible] ॥ २८ ॥

शिरोऽमुना गालित - नाग - तुल्याः
प्रवेशिता यद्यपि कर्णयोस्ताः ।
तथाऽप्यजात - व्यथ एव वर्ते
हा ! शोचनीयो जडिमा हृदो मे ॥ २९ ॥

वैदुष्य - वैदग्ध्य - विभूषितस्य
खिन्नं विवर्णं वदनं विलोक्य ।
विलोचने विप्लुत - बाष्प - बिन्दु -
विस्रावणे मेऽद्य कुतो न जाते ॥ ३० ॥

नाऽमुष्य शीतैः श्वसितैः, सतापैः
पदैर् न वा यद् हृदयं द्रुतं मे ।
ततो गरीयानुपलो द्रुतः स्याद्
विधौ रवौ वाऽपि य उज्जिहाने ॥ ३१ ॥

आर्त्तोदितैस्तोदितमस्य पद्यैः
पुण्यस्य गुण्यस्य महामहिम्नः ।
अद्याऽप्यनासादित - वेदनं मे
धिगाश्मनं मानसमस्तु भूयः ॥ ३२ ॥

रवेः रुचा काञ्चन - चारु - रूपो
यो दृश्यते दूरत एव रम्यः ।
भूभृत् स वन्ध्यश्च महीरुहोऽस्मि
कोऽद्यान्यवादी तुलितो मया स्यात् ॥ ३३ ॥

व्यर्थान् विदन् वाचिक - साधुवादान्
सामान्य - लोकेन कथास्विवोक्तान् ।
किन्त्वस्ति चित्तेऽद्य ममेत्यजानन्
नूनं बहिस्तिष्ठति खिन्न एषः ॥ ३४ ॥

हिरण्य - भारैर् वसनोपहारैस्
तारैश्च मुक्तामणि - मञ्जु - हारैः ।
उच्चैरगारैरथवाऽग्रहारैर्
अर्चोचितैः क्वाऽपि च नाऽस्य याति ॥ ३५ ॥

निर्णीयते मे मनसा यदद्य
सभाजनायाऽस्य पदार्थ - जातम् ।
एतन्महिम्ना तुलनामगच्छल्
लज्जावहं भाति च तल्लघीयः ॥ ३६ ॥

अस्तु, स्मृतं यत् करणीयमस्मिन्
आनृण्यमाप्येत मया च येन ।
हाप्येत दैन्यं द्रुतमेतदीयं
स्यात् किं तया सन्तत - चिन्तया मे ॥ ३७ ॥

अस्यैव पद्ये चरमेऽतिहृद्ये
'उच्चाऽधिकारस्य' निदर्शनेन ।
मुग्धस्य मेऽकारि पथोपदेशो
दीनाऽध्वनीनस्य घने वने वा ॥ ३८ ॥

कश्मीर - नाम्ना प्रथिते प्रदेशे
लावण्य - लक्ष्म्या इव सन्निवेशे ।
प्रजा - हितानां परिरक्षणाय
न विद्यते कोऽपि नरेश्वरोऽद्य ॥ ३९ ॥

मुहुर्महीपैरपरैः प्रसिद्धैः
सम्प्रार्थितोऽप्येष महाप्रदेशः ।
उपेक्ष्य तान् पात्रतराय चाऽस्मै
प्रदीयते प्राभृतवत् प्रसादात्" ॥ ४० ॥

इति स्व - चित्ते कृत - निर्णयो द्राग्
औदार्य - मूर्त्तिः स निशीथ एव ।
"दूतानिदानीं त्वरयाऽऽनयेति"
कञ्चिच्छनैर् द्वारिणमादिदेश ॥ ४१ ॥

तथा कृतेऽसौ विहित - प्रणामान्
वार्त्ताहरानेवमचोदयत् तान् ।
"कश्मीर - देशं समुपेत्य तत्र
वाच्या रहो मद्वचनानामा ॥ ४२ ॥

यो 'मातृगुप्ते'त्यभिधो महात्मा
प्रदर्शयेद् वो मम शासनं सः।
अपास्त - शङ्कैः सकलैर् भवद्भिः
सङ्गत्य राजेत्यभिषेचनीयः' ॥ ४३ ॥

इत्येवमाज्ञाम् अधिगम्य राज्ञो
दूताः प्रदत्त - प्रणिपात - पुष्पाः।
स्तोकं स्पृशन्तः पृथिवीं पथेषु
प्रतस्थिरेऽश्वेषु यथानिदेशम् ॥ ४४ ॥

तं लेखयित्वा स ततो निदेशं
भारावताराल् लघुतामिवाप्तः।
पार्थो महीयान् नितरां कृतार्थो
निशामनैषीत् प्रतरां प्रसन्नः ॥ ४५ ॥

तदाऽप्यसुप्तः स च मातृगुप्तः
परत्र चिन्ताम्बुनिधौ विलुप्तः।
मेने महीपं मुखरं च मोघं
सम्भाषणं तेन कृतं प्रलापम् ॥ ४६ ॥

प्रच्छिन्न - पाशो यदि वा निराशो
ऽसौ सौम्य - सौशील्य - सभाजितात्मा।
स्व - दीनता - सत्य - दशाऽभिधानात्
कृताऽन्तिमाऽऽयास इवाऽऽबभासे ॥ ४७ ॥

व्यतर्कयत् सोऽथ रहोऽधिराजो
न तादृशोऽश्रूयत यादृशोऽयम्।
कष्टं मुधैवाऽन्धपरम्परायां
नष्टं जनुर् दीर्घमियन्मदीयम् ॥ ४८ ॥

पिपीलिका - धर्ममनुव्रजन्तो
न वेद्मि मुग्धाः कृपणाः कियन्तः।
आकृष्यमाणा मृगतृष्णयाऽत्र
वैशङ्कवीं हन्त! दशां प्रपन्नाः ॥ ४९ ॥

तृषातुरो लोभ - वशंवदो यम्
प्रवेदिषं क्षीरधि - रत्नराशिम् ।
हा ! ऽनिष्ट - दिष्टेन स एव मेऽद्य
क्षारोदधित्वं सहसाऽभ्युपेतः ॥ ५० ॥

अमङ्गले भीषण - जङ्गलेऽहं
प्रास्तोऽस्मि पापैस्तपनाय तत्र ।
यत्राऽभितोऽत्यन्त - तिरोहिताऽऽशा
सुव्यक्त - नाशा वसुधा विभाति ॥ ५१ ॥

किं कान्दिशीकेन मया क्रियेत ?
निरापदा का पदवी व्रियेत ? ।
कथा व्यथाया उपसंह्रियेत
कथं तथाऽन्तर्द्रढिमा ध्रियेत ? ॥ ५२ ॥

लोकाय येयं रजनी प्रभाता
सा शाश्वती मे तु कुहूः प्रजाता ।
पृथ्वी परा पाद - तलात् प्रयाता
धाताऽपि नाभाति ममाऽऽह ! पाता ॥ ५३ ॥

दीपस्य दीप्त्याऽऽह्रियमाण - चेताः
सन्तापमेवैति यथा पतङ्गः ।
तथैव कीर्त्याऽस्य मयापि हन्त !
पादे कुठारेण कृतो ऽभिघातः ॥ ५४ ॥

सज्य - क्रमं केसरिणं कुरङ्गः
क्वचित् तपस्वी तिमिराऽन्धितश्चेत् ।
गुल्मं विदन् केलिकलोऽत्र वल्गेत्
कालस्य माहात्म्यमिदं वदन्ति ॥ ५५ ॥

शब्दं शिरीषस्य शुभं शमीनां
प्रीत्याप्लुताहूतिमिवाऽभिजानन् ।
छायां हरित्त्वस्य गतोऽध्वनीनः
शिरोर्तिमेवाऽऽप सुमाऽधिवासैः ॥ ५६ ॥

पुष्पाऽरुणिम्ना दमितो विदूराद्
बुभुक्षितः शल्मलिमुच्च - कायम् ।
संसेव्य मुग्धः सुचिरादवेदीत्
सारेण राहित्यमलं फलानाम् ॥ ५७ ॥

लोक - प्रवाद - प्रबल - प्रवाहे
पाताद् विपर्यासित - चेतनेन ।
कुतो मयाऽवेदि महीभुगेष
न सेवनीयोऽपि निषेवणीयः ? ॥ ५८ ॥

केनाऽपि किंस्वित् पिशुनेन पार्थो
ऽपार्थोदितैर् मे विहितोऽहितोऽयम् ? ।
विचारयन्नप्यहमत्र कञ्चिद्
न त्वीदृशं नीच - नरं निरीक्षे ॥ ५९ ॥

प्रलक्षिता हन्त ! मयाऽथवाऽस्य
निषेवणे काचिदपूर्णता स्यात् ।
नो चेत् कथं कारुणिकस्य साधोर्
मनोऽश्मनो निष्ठुरतामतानीत् ॥ ६० ॥

पुरातनानां मम दुष्कृतानां
स्यान्निष्कृतिः सम्प्रति सम्प्रजाता ।
यद्वा गृहीतस्य भवान्तरेऽस्माद्
ऋणस्य शुद्धिर्युगपत् प्रपन्ना ॥ ६१ ॥

शुश्रूषणं नास्ति यदीय - चित्ते
वाचोऽर्दितानामपि भक्ति - भाजाम् ।
शुश्रूषणं तस्य भवेत् समानम्
आम्रेच्छयाऽर्कस्य निषेचनेन ॥ ६२ ॥

परं प्रभोरस्य कृपामुपेता
उपेयिवांसो भुवि दौर्मनस्यम् ।
प्रियङ्कराः किङ्करता - रताश्च
कुर्वन्ति केलिं कमलाऽङ्कलाऽङ्के ॥ ६३ ॥

धात्राऽधनानां लिखितश्च भाले
यो ऽमङ्गलः 'श्री-क्षय'-शब्द आसीत् ।
सोऽनेन भर्त्रा धनदेन 'यक्ष-
श्री' - रूपतायां परिवर्तितोऽत्र ॥ ६४ ॥

नितान्त - निष्ठेन मयाऽचिरेण
याऽपैक्ष्यताऽस्मान्नृपतेर् बिभूतिः ।
अनिष्ट - दिष्टस्य विभुग्न - दृष्ट्या
भूता कुतः संकपदे विभूतिः ? ॥ ६५ ॥

सद्योऽद्य पद्यानि निशम्य मे ये
दत्ता नृनाथेन च साधुवादाः ।
विनोद - वादाः किमु तेऽप्यभूवन्
विडम्बिनो वाऽपि ममाऽपवादाः ? ॥ ६६ ॥

पाषाण - कार्कश्य - हृदो विदूरतो
रम्या निसर्गाद् विषमा महीभृतः ।
ये कण्टकैराकुलिताः सकूटाः
दुःखासिकायै स्युरुपास्यमानाः ॥ ६७ ॥

तुङ्गोत्तमाङ्गेन ततातपत्र-
पत्रेण तालाख्य - तृण - द्रुमेण ।
कोऽर्थः पथे यस्य वृथा स्थितस्य
च्छाया - फलाद्यं पथिकेन नाप्तम् ॥ ६८ ॥

प्रेङ्खोलितैस्तुङ्ग - तरङ्ग - हस्तैस्
तृषातुरं शश्वदुपाह्वयन्तम् ।
कुर्वन्तमेतं च कषायितास्यम्
मन्येत को वारिधिमातिथेयम् ॥ ६९ ॥

देवं चिरात् सेवयतोऽपि यस्य
न याचितं याति फलेग्रहित्वम् ।
तस्मै तु दैवी प्रतिमा शिलैव
न वर्तते चेत् किमु मन्दिरेऽन्यत् ॥ ७० ॥

धात्राऽथवा मे लिखितानि भाले
सौभाग्य - शंसीनि शुभाक्षराणि ।
टङ्केन पूर्वापर - पाप - नाम्ना
तष्टानि नष्टानि हहा ! विभान्ति ॥ ७१ ॥

योऽसौ वितर्को मम दुष्ट - दृष्टेः
स्याद् वा स मिथ्या विषये नृपस्य ।
आलोकतेऽलं तिमिराकुलाक्षः
कलापतिं कालिम - बिन्दु - कल्पम् ॥ ७२ ॥

कैङ्कर्य - कार्ये व्यवहार प्रायें
वाचः प्रयोगे च कृते नियोगे ।
न मेऽस्ति दोषो न नृपस्य रोषो
हा ! तद् विघातः क इह प्रजातः ? ॥ ७३ ॥

युग्मकम्

सोस्त्रोति धारा मुदिरो हिमाद्रौ
महोदधौ वा पयसाप्लुते प्राक् ।
धन्ये कृतान्तः करुणां करोति
श्रीः श्रीलमेवंत्युपगूहनाय ॥ ७४ ॥

तथा महिष्ठोऽपि तमेव मन्ये
सम्मान - पात्रं मनुते महीशः ।
अवाप्त - कामः प्रथमं वदान्यैः
कटाक्षितो यः क्षितिपाऽन्तरैः स्यात् ॥ ७५ ॥

महीक्षिता गड्डरिका - प्रवाहे
भ्रष्टेन कष्टेन कदर्थितस्य ।
हा ! जीवनं मेऽपि तृणेन तुल्यं
न्यपाति नैराश्य - नद - भ्रमान्तः ॥ ७६ ॥

एवं कदाचित् स्वमधीश्वरं वा-
ऽप्यसमन्यतां वा भवितव्यतायाः ।
प्रेष्यत्वमन्तः कतिशोऽथवाऽसौ
निक्षिप्त नौस्नेह - वशो न जाने ॥ ७७ ॥

व्रजन् विरक्ति स मही - महेन्द्रे
भजन् विचारैर् युगपच्च भक्तिम् ।
भूयोऽर्दितोऽसाध्य इवामयावी
जिजीविषुर् नापि मुमूर्षुरासीत् ॥ ७८ ॥

विकल्प - वैक्लव्य - बल - प्रणुन्ना
उच्चाश्च नीचा लघवश्च लम्बाः ।
उच्चावचा वीचि - विचार - धारास्
तन्मानसे क्वाथ - विधि वितेनुः ॥ ७९ ॥

तत्कल्पनानामथ रम्य - हर्म्यं
ध्वस्तं गतं भावि सुखं तथाऽस्तम् ।
तृप्तिः सदाशा - मधु - मोदकैर् या
साऽप्यस्य लुप्तैकपदे बभासे ॥ ८० ॥

अत्रान्तरेऽन्तस्तमसाकुलत्वान् -
म्लाने मुखे पूर्वज - पर्वतस्य ।
विच्छायतां मन्दमपोह्य मोद-
प्रपञ्चको लोहितिमा वितेने ॥ ८१ ॥

कोकं शोक-निराकुलं कल-रुतोल्लासं व्यवस्यंस्ततो
दिग्देशेषु निशोद्भवं विधुरयन् स्वाभाविकं साध्वसम् ।
उत्फुल्लं कलयन्नलं च कमला - केलिस्थलीमुत्पलम्
पूर्वाशामभिकाशयन् दिनकरो द्यामारुरोह क्रमात् ॥ ८२ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध - विरुदभाजा, डॉ० श्यामदेव - पाराशरेण प्रणीते
'त्रिवेणी' इत्यभिख्ये महाकाव्ये महीप-मातृगुप्त-व्याकुलता-
वर्णनं नामाष्टमः सर्गः सम्पूर्णः ॥

# नवमः सर्गः

पद्मालया सौभग - मालयाऽलं—
करोति दीनानपि यत्प्रसादनात् ।
बिभ्रत् समस्याऽप्यसमाः समस्या
हरिः स वः स्याद् व्यसनार्णवे तरिः ॥ १ ॥

तमो - विषेऽभ्यर्चन - होत्र - मन्त्रैर्
उन्मूलिते नूनमिला - तलस्य ।
विराविभिर् वन्दि - विहङ्ग - वृन्दैस्
तोष्टूयमाना रजनी प्रभाता ॥ २ ॥

अथ प्रसन्नानन - पुण्डरीक
आस्थान - संस्थः प्रणयी प्रजानाम् ।
पार्थः - कृतार्थी - भवदर्थि - सार्थो
व्यलोकयताऽद्योत्कलिकाऽऽकुलात्मा ॥ ३ ॥

कृपा - कटाक्षैः कुशलाऽभिवर्षी
स राष्ट्र - कार्यस्य महीप आदौ ।
"आहूयतां सम्प्रति मातृगुप्तः"
शनैरिति द्वारिणमादिदेश ॥ ४ ॥

कृतानतिः सोऽपि बहिर् विषाद-
वैवर्ण्य - खिन्नं वदनं वहन्तम् ।
वाचंयमं वेगितया व्रजित्वा
प्रावेशयत् तं नृपतेः पुरस्तात् ॥ ५ ॥

ततो यथाचारमसौ सदात्मा
प्रणम्य पार्थं नितरां नताक्षः ।
पाणी पुटीकृत्य वितर्क - मूढः
प्रत्यैक्षताऽऽदेशममुष्य चित्रम् ॥ ६ ॥

तस्मै तथा संसदि संस्थिताय
सोद्वेगमन्यैरभिवीक्षिताय ।
प्रीत्या प्रजापः प्रददौ स पत्नीं
दैन्यापहां जायु - पुटीमिवैकाम् ॥ ७ ॥

प्रेष्यं पुनः प्राह — "सुरम्यमङ्ग !
कश्मीर-देशं श्रुतवान् भवान् किम् ? ।
अमुत्र मित्राऽभ्युपगम्य पत्रम्
राज्याधिकारिभ्य इदं प्रदेयम् ॥ ८ ॥

शप्तः शरीरेण स मे पदव्याम्
एतत् पठेद् योऽपि रहस्य - पत्रम् ।
नेदं स्मृतेर् यातु च जातु दूरे
प्रेयन् ! प्रतिज्ञा प्रतिपालनीया" ॥ ९ ॥

तथेति वाचं प्रतिपद्य भर्तुः
सम्प्राप्त - पत्रः प्रणिपात - पूर्वम् ।
सोऽद्याप्यभूच्छङ्कितयोन्मनस्को
न कं विषादो विकलीकरोति ॥ १० ॥

चिरादपोस्फूर्यत हन्त ! तस्य
विपुष्ट - वामेतरमङ्गजातम् ।
शिरोऽपसव्यं सविशेषमद्य
शोवस्तिकानीव शुभानि शंसत् ॥ ११ ॥

यथार्थतो भाविनि भूरि - भूमि-
भारस्य धार्यस्य च राज - मौलेः ।
संत्रासतोऽदृष्ट - लसद् - विपाकं
शिरो वराकं बहुशो विवेपे ॥ १२ ॥

ततो यथाज्येष्ठमसौ वयस्यान्
यथाधिकारं सचिवांश्च सभ्यान् ।
कृत्वा करौ कुड्मलितौ प्रणाम-
पुष्पोपहारै रमयन् प्रतस्थे ॥ १३ ॥

दत्ताभ्यनुज्ञेऽथ च मातृगुप्ते
रीत्या बही राजकुलात् प्रयाते ।
भूभृत् स्थिरोऽव्यञ्जित - चित्तवृत्तिश्
चक्रे क्रिया नीरधिवद् गभीरः ॥ १४ ॥

परस्परं प्रेक्ष्य पिपृच्छिषद्भिः
पट्टाधिकारि - प्रकृति - प्रधानैः ।
पुरोहिताद्यैर् न च पारिषद्यैः
प्राज्ञायि पार्थं - प्रतिपाद्यमानम् ॥ १५ ॥

तं मातृगुप्तं च विलोक्य यान्तं
तान्तं निशोन्निद्रतया नितान्तम् ।
क्षामं चिरोद्वेग — वशान्निकामं
नो को नु लोको नृपतिं निनिन्द ॥ १६ ॥

''सूक्ष्मेक्षिका - शून्यतयाऽधिराज
एषोऽविचारः किल कामचारः ।
हा ! हा ! महात्मानमयं प्रसक्तं
भक्तं य ईदृक् - करणे न्ययुङ्क्त ॥ १७ ॥

यः कोऽप्यलम्भूष्णुरिदं विधातुम्
अत्रत्य - भृत्यः खलु दौत्य - कृत्यम् ।
आज्ञापि तत्किं गुणवत्तरोऽयम्
अहो ! धिगेतामविमृश्यकारिताम् ॥ १८ ॥

भाराय नेयाय खरेण चेदा—
जानेयमन्योऽल्प - मतिर्नियुङ्क्ते ।
दीनस्य मन्येत न तस्य मन्तुर्
जन्तुर् नियोक्ता वचनीय एव ॥ १९ ॥

दुन्वन्ति दुःस्थं दमयन्ति दीनं
क्षतं प्रहारैः क्षपयन्ति लोकाः ।
रीत्याऽनया चेदनयाऽनुयायी
लोकेश एषोऽपि तथैव वाच्यः ॥ २० ॥

ऐकाग्र्यमासाद्य तपस्विनाऽलम्
आराधितस्याऽस्य महेश्वरस्य ।
साऽनुग्रहो नैव वरो वरोऽयम्
पापोऽभिशापस्तु सनिग्रहः स्यात् ॥ २१ ॥

स्वमानमात्मम्भरितां च मुक्त्वा
क्व श्रद्धयाऽनेन कृतोपसेवा ।
क्व कामचारेण च भूभृतेयं
प्रत्ताऽभिभूतिर् न परं विभूतिः ॥ २२ ॥

सोढ्वाऽसुखं सेवन - सक्तिमन्तम्
आशा - पिशाची - विवशं किलैनम् ।
मेने महीपोऽप्यसुखार्हमेव
कृशं भृशं हन्त ! निहन्ति लोकः ॥ २३ ॥

गुणाऽगुणज्ञो न नरेश एष
भेदं च गोगर्दभयोर् न वेद ।
हा ! योऽसहायं निरुपायमेनं
न्ययुङ्क्त कार्येऽद्य पृथग्जनस्य ॥ २४ ॥

स्वं सद्गुणानां गणयन् गरिष्ठं
वेदी वराको गुण - गृह्यमीशम् ।
श्री - कोशलार्थी शरणं श्रितोऽयम्
आकस्मिकं प्राभृतमापदीदृक् ॥ २५ ॥

कायेन वाचा मनसा च सेवा
याऽकारि काल - त्रितयेऽप्यपूर्वा ।
श्रमस्य पारिश्रमिकं हि तस्य
प्रादायि पार्थ - प्रवरेण दूर्वा ॥ २६ ॥

'प्रिये'ति सम्बोधन - वीप्सयाऽलं
संशुष्क - कण्ठाय स चातकाय ।
स्तोत्रेऽम्बुदो यां करिकां ददाति
कण्ठोपचारम्, न साऽर्थदेति ॥ २७ ॥

तथ्याऽनभिज्ञा जनताऽद्य पार्थं
प्रत्याह किं किं न वचोऽनुदारम् ।
जानन् फलैर् वर्जितमित्यपार्थं
रथ्याजनो निन्दति गन्धसारम् ॥ २८ ॥

निर्वोढुमादेशमधीश्वरस्य
प्रस्थातुकामोऽथ स मातृगुप्तः ।
शून्याशयत्वाल् लघुरश्वसादी
नाऽभूत् प्रसादी यदि वा विषादी ॥ २९ ॥

माङ्गल्य - मूलानि स मार्ग - मध्ये
नाना निमित्तानि निरीक्षमाणः ।
दुद्राव दूरं गुणवान् सुगुप्तं
सौभाग्य - लक्ष्म्येव विकृष्यमाणः ॥ ३० ॥

नैराश्य - निस्त्रिंशनिविद्धमद्धा
विहस्तता - हस्तगतं मनोऽस्य ।
सुलक्षणान्यद्य विलक्षणानि
निरामयत्वं गमयाम्बभूवुः ॥ ३१ ॥

निवास - वासाद् बहिराव्रजन् स
प्रैक्षिष्ट पूर्वं प्रमदां प्रसन्नाम् ।
पानीय - पूर्णं प्रणिधाय पाणौ
पात्रं प्रतोल्याः पुरतः प्रपन्नाम् ॥ ३२ ॥

युग्मकम्

सितैः सुमैः सौरभ - सम्भृतैश्च
पिष्टैः प्रलेपैश्च परिष्कृताङ्गी ।
शुचि - स्मिताऽसौ कलशं वहन्ती
गौरी चरिष्णुर् हिम - मूर्त्तिरेका ॥ ३३ ॥

देवाऽभिषेकाय सहास्थयाऽन्तर्-
उपासना - वासमभिप्रयान्ती ।
मृदु - क्षमाऽकाण्डमितोऽभ्युपेता
साक्षाद्य - लक्ष्मीर् मुदिता बभासे ॥ ३४ ॥

पल्यङ्किकायां पुरुषैः परेद्युः
पर्युह्यमाणं प्रथमं पदव्याम् ।
शुभ्र - श्रियं शेखर - शालि - शीर्षं
व्यलोकयद् बाल - वरं विभाते ॥ ३५ ॥

छत्त्रच्छटाच्छादित - सर्वगात्रो
यो वीज्यमानो मृदु - चामरेण ।
टङ्कध्वजोच्छिन्न - विपद् - विघातो
राजेव जन्याऽनुगतो विरेजे ॥ ३६ ॥

स केकया कानन एकयोच्चैः
स्वस्तीति वाचेव पुनः प्रशस्तः ।
निद्रा - निमग्नो निशि मातृगुप्तः
कूटं हिमाद्रेः सहसाऽऽरुरोह ॥ ३७ ॥

श्वःश्रेयसं श्वस्तनमुद्दिशद्भिः
पदात्पदं साक्ष्यमुपाश्रयद्भिः ।
उड्डाप्यमानं शकुनैरनेकैर्
मनोऽदसीयं श्लथतां मुमोच ॥ ३८ ॥

विस्फोटकल्पेषु धरा - शरीरे
शैल - स्थलीनां ककुदेषु गच्छन् ।
स दूरतो वेष्टित - पट्टिकाभान्
व्यलोकयत् कुञ्चित - कुञ्ज - मार्गान् ॥ ३९ ॥

समीर - सूत्कारि - लता - द्रुमाद्यैः
समन्ततः सन्तत - साध्वसानि ।
बहुन वर्त्मानि स सङ्कटानि
समुल्ललङ्घे ऽजगर - प्रभाणि ॥ ४० ॥

वरं - विवाहे तुरगाधिरूढं
श्याल्यो विनोदाद् मुचुटी - विदंशैः ।
यथा तुदन्तीह तथा पथे तं
वल्लपोत्थ [illegible] व्यथयाम्बभूवुः ॥ ४१ ॥

शिताग्र - शाखा - शय - शूक - शूला
वल्ल्यो विलासाद् बहुला बलेन ।
चलानि वातेन तदञ्चलानि
धृत्वा वरं तं रुरुधुः प्रयाणात् ॥ ४२ ॥

खरैः खुराग्रैस्तुरगस्य तस्य
समुत्पतद् - धूलिमिषेण मार्गे ।
प्रत्युद्गतेवाऽनुपदं धरित्री
भवितृ - भर्तारमिहाऽभ्यनन्दत् ॥ ४३ ॥

वातेन वार्ता विदधेऽस्य वीतिः
वेगी च वातः श्रवणानुनादी ।
प्रोत्साहनायाऽस्य गुणाऽनुवादं
वाटेषु वैतालिकवद् व्यधत्त ॥ ४४ ॥

अजीजिवद् ह्रेषित - मन्त्र - जातैर्
वाजी विपन्नाऽऽशमहो ! मनोऽस्य ।
तस्याऽप्यसोसूच्यत वल्गितं च
मूलाद् विपन् - नाशमिवाऽदसीयम् ॥ ४५ ॥

दैन्यावसानस्य तथा स सप्तिः
सुमङ्गलानां समयस्य सीमाम् ।
खुरैः समाकृष्य नतैः प्लुतेषु
प्रतिक्षणं नेदयति स्म नूनम् ॥ ४६ ॥

पुट - प्रणुन्नैरथ पांसु - पूरैः
प्रच्छाद्य सादि - व्यसनाऽवसादान् ।
हर्षं हयो हेषित - कैतवेन
प्रादुश्चकाराऽनुपदं पदव्याम् ॥ ४७ ॥

स्व - घोरितेनाऽधरयन्निवोल्का
क्रामंश्च कालादपि पूर्वमेव ।
हेषा - मिषान्न्यक्कृत - सप्त - सप्तिः
ध्रुवं व्यतीयाय स देश - कालौ ॥ ४८ ॥

खं खण्डयित्वा प्रखरैः खुराग्रैर्
घासस्य पूलानिव दात्र - यन्त्रम् ।
स क्षेपिमाणं प्रथयन्नपूर्वम्
मुमोच दूरं न विदूरतां किम् ? ॥ ४९ ॥

उच्चैःश्रवोभ्यां स पुटीकृताभ्याम्
पीत्वा प्रवेगात् पवन - प्रवाहम् ।
नासा - नलाभ्यां पदवी - प्रयासम्
प्रायः प्रचिक्षेप पुनः परस्तात् ॥ ५० ॥

स स्वामिनः स्वेन सहैव गामिनः
कालान्तरीयोन्नतिमेव केतयन् ।
प्लवङ्गमत्वाश्रयणेन गत्यां
नूनं ततो नर्तनमाततान ॥ ५१ ॥

गुणैस्तथोच्चैःश्रवसो गरिम्णा
पास्पर्ध्यमानोऽम्बुनिधेः समाने ।
स त्वन्तरिक्षे सुतरां तरस्वी
प्रतीयते स्म प्रतरंस्तुरङ्गः ॥ ५२ ॥

लोलोल्ललल्लाङ्गुल - चामरेण
संवीजयन् श्वस्तन - राजलक्ष्मीम् ।
आरोहिणो दुर्गतिमेष गत्या
साकं सरण्या विससर्ज पश्चात् ॥ ५३ ॥

अधिष्ठितस्तं त्वरितं तुरङ्गं
धीरः शरीरेण स मातृगुप्तः ।
अनल्प - सङ्कल्पज - कौतुकेन
ततोऽपि पूर्वं मनसा दधाव ॥ ५४ ॥

प्रदीर्यमाणां पुरतो धरां रयाद्
नगांश्च पश्चाद् द्रवतोऽस्य पश्यतः ।
श्रुती वमन्त्यो मधु किञ्चिदुच्चैर्
व्यधुर्विनोदं मरुदूर्मिमालाः ॥ ५५ ॥

वनेषु देवो विजनेषु वाजिना
मनोजवेनोच्चल - पाणिपादः ।
सादी स सन्देशहरः सदात्मा
व्रजन् बभासे दिवि डीयमानः ॥ ५६ ॥

एवं स सन्ताप - समाकुलानि
विवर्जयन् विप्लव - वेदनानि ।
स्वान्ताति - सन्तोषण - सौभगानि
स्थलान्यभीयाय सुशीतलानि ॥ ५७ ॥

पद्यासु कान्तार - शिलावलीनाम्
मरुस्थली - प्रान्तर - काननानाम् ।
उच्चावचाकुञ्चित - विस्तृतानाङ् -
कापि चक्रविस्तं रमयाम्बभूव ॥ ५८ ॥

अध्यासितत्वाद् विबुधेन तेन
प्रधावतस्तत्तुरगस्य मन्ये ।
स्पृष्टा शफैः शाद्वल - शष्प - शोभा
रोमाञ्चितेवैकपदी बभासे ॥ ५९ ॥

जाते प्रभाते पदवी च भक्त्या-
ऽवश्याय - पाद्यस्य समर्पणेन ।
आजग्मुषस्तत्र हयस्य यस्य
प्रक्षालयामास पदानि नित्यम् ॥ ६० ॥

युग्मकम्

शिलीमुखाली - कलगुञ्जिताभि -
रामोदिनी मञ्जुल - मञ्जरीभिः ।
प्रदीप - लीलां च विडम्बयद्भिः
पीतैः सुमैः शोणिम - सम्परीतैः ॥ ६१ ॥

परिप्लुताऽन्तर्विपिनस्थलीयम्
आरात्रिकत्वं स्वयमभ्युपेता ।
देवस्य साक्षादिव सत्त्वमूर्ते-
रस्य वर्या विदधे सपर्याम् ॥ ६२ ॥

विष्वग् विरूढास्ततयस्तरूणां
विहङ्गमानां मधुरैर्विरावैः ।
प्रायः परिश्रान्तमिमं चिरेण
न्यवेदयन् किञ्चन विश्रमाय ॥ ६३ ॥

फलावलीभिः प्रणत - प्रशाखाः
पुरस्कृत - प्रीति - परोपहाराः ।
ते तस्थिवांसः परितोऽपि पाल्याम्
पलाशिनस्तं पुरतः प्रणेमुः ॥ ६४ ॥

क्रमेण चाशीतकरे खमध्य -
मध्यासमाने क्लिशितः स किञ्चित् ।
न्यग्रोधमूले पथिकानुकूले
पूत्कार - वाचैव हयं रुरोध ॥ ६५ ॥

शिलास्थलेऽवैक्षत सन्निषण्णः
प्रोञ्छन् स घर्मं कट - कायमाने ।
प्रपां च तां पाञ्चशरीं च मायां
शरीरिणीं काञ्चन काञ्चनाङ्गीम् ॥ ६६ ॥

कूटे स्थिताऽसौ नव - यौवनस्य
गौरी प्रपायाः पथि पालिकाऽस्मिन् ।
एकां पिपासां व्यपनीय चान्यां
सन्धुक्षयामास हहा ! ऽध्वगानाम् ॥ ६७ ॥

अनर्घ - लावण्य - विभूषितत्वात्
तां सन्ततं नेत्र - शतेक्षणीयाम् ।
मत्वा कुभाग्यं च विधेश्च मोहं
सर्वे स्वकं नेत्र - युगं निनिन्दुः ॥ ६८ ॥

सौम्या हिमानीति चिराय सेयं
किशोरिका यात्रिक - कर्णपेयम् ।
दधार नाट्येऽपि तदाऽभिनेयं
प्रायेण येयं मधु नामधेयम् ॥ ६९ ॥

हिता च माध्वीत्यथ नीरजाङ्गी
पद - त्रयाद्याक्षर - योजनेन ।
विनिर्मितं नाम जगुर्यदीयं
सिद्धं स्मरोज्जीवन - बीजमन्त्रम् ॥ ७० ॥

वशीकृतं मञ्जिम - माययाऽस्या-
श्चराचरं मन्मथ - पिच्छिकायाः ।
वटो ऽप्यतो लम्बित - वात - धूत-
जटा - करैस्तां परिरिप्सुराभात् ॥ ७१ ॥

विलोक्य तल्लोचन - चारिमाणं
विलज्जिता वा विजिता कुरङ्गाः ।
प्रिया - सहायाः सविधे प्रपायाः
काराऽवरुद्धा इव हन्त ! तस्थुः ॥ ७२ ॥

अतौल्य - तारुण्य - तरङ्गिणीव
रस्या रुची रूपक - रत्नराशेः ।
मारीयमन्याऽविदितं महास्त्रम्
मारीयमध्वन्य - जनस्य नारी ॥ ७३ ॥

सुसंहितोरूः स्मर - सागरस्य
वेलेव बिम्वाधर - लोभनीया ।
अपाययत् साऽपि हि मोहनीव
ध्रुवं दृशाऽम्बून्यभिमन्त्रितानि ॥ ७४ ॥

सङ्केतभूः सा स्मर - सौभगानां
स्रोतस्विनी सुन्दरता - सुधायाः ।
यद्यप्यभूत्, किन्तु तया वितीर्णं
[1]विषं यथार्थामभिधामुपैषीत् ॥ ७५ ॥

आसाद्य सद्योऽङ्गुलिनाऽपि नैके
संस्पर्शमस्या क्वचिदप्यबुद्धया ।
विप्रोषिताः कण्टकिता विरेजुस्
साक्षादिवाऽनङ्गशरैर्निविद्धाः ॥ ७६ ॥

---

१. विषं=जलम्; गरलम् ।

पीत्वोदधारां पथिका वराका
सद्यः शमं चाप्यनवाप्य शैत्यम् ।
अन्तर्निविष्ट - ज्वलदस्त्रधारास्
तातप्यमाना न ततोऽयियासन् ॥ ७७ ॥

अमोघ - काक्षेक्षित - पाश - बद्धा
नीताः परे जीवित - संशयं च ।
विवर्तनोद्वर्तन - दुःख - शय्याः
नक्तं स्थले मत्स्य - दशामवापुः ॥ ७८ ॥

यथार्थतोऽभून्मदिरेक्षणाऽसौ
काऽप्यद्भुता मादकता सुरायाः ।
कुतोऽन्यथा पादविका दृशा तां
पीत्वैकदोद्दाम - मदत्वमीयुः ॥ ७९ ॥

तद्दृष्टिपातं सहजं च तारा-
मैत्रीति केचिद् हृदि कल्पयित्वा ।
पापच्यमानाः पुटपाक - गर्भे-
ष्वोन्निद्र्यमायन् रजनीषु पान्थाः ॥ ८० ।

प्रतिष्ठमाना हृदयेषु पाणीन्
प्रवासिनोऽन्ये प्रणिधाय दीनाः ।
कथञ्चिदुत्थाय तता प्रयाता
विवर्तिताक्षा असकृद् विचेलुः ॥ ८१ ।

युग्मकम्

कीराभनाः साञ्जन - खञ्जनाक्षी
पद्मि - प्रतीकाश - कटाक्षपाता ।
कोक - स्तनी कोकिल - वाग्विलासा
मराल - चाला शिखि - केशपाशा ॥ ८२ ॥

कर्पूर - काया तरुणी प्रपायाः
सम्पत्स्यमानाऽद्य दृशोर्विदूरे ।
हृत्पञ्जरान्नोत्पतिताऽस्तु सेति
व्यस्याऽस्त्रलताम् हृदयेष्वयुस्ते ॥ ८३ ॥

मध्येपथं सारणिकास्तथैतान्
दण्डायतं चोच्छ्वसतो निरीक्ष्य ।
मन्दा अपीमेऽत्र किमुच्छ्वसन्ती-
त्यन्ये ऽध्वगा कौतुकमभ्युपेषुः ॥ ८४ ॥

स्वाम्याय धात्रा वरवर्णिनीनां
विनिर्मिता स्याद् बहुदृश्वनाऽसौ ।
महार्हं - लावण्य - निधिं यदीयं
वेणी - फणी सन्ततमाररक्ष ॥ ८५ ॥

मध्येन सा मुष्टि - मितेन धन्या
कामस्य कोदण्ड - लतैव कन्या ।
लक्षाऽच्युतैः काक्ष - विलास - बाणैर्
जेतुं त्रिलोकीमलमेकिकैव ॥ ८६ ॥

सांसारिकी सुन्दरता समस्ता
सर्वस्व - सम्पत् समभूत् तदीया ।
द्रव्येषु भव्येष्वत एव तस्या
यत्रापि कुत्रापि च [1]झल्लिकाऽभात् ॥ ८७ ॥

सामान्यतोऽमन्यत तां जितात्मा
स जङ्गमां काञ्चन शालभञ्जीम् ।
स्खलन्ति सांसारिक - पङ्किलेषु
नास्थां भजन्ते विषयेषु धीराः ॥ ८८ ॥

ततः परं क्रोश - युगं स यायी
भुवं तथा व्याप्य दिवं विकीर्णाम् ।
व्यलोकयद् भैरव - मूर्तिमानां
श्यामायमानामटवीं पुरस्तात् ॥ ८९ ॥

तमिस्र - गर्भास्तरवोऽत्र चीरी-
चीत्कार - तारं रुदितं वहन्तः ।
वातालि - वेगैर् बहु - वेपमानाः
प्रत्यक्षतः साध्वसमभ्यनैषुः ॥ ९० ॥

---

१. झल्लिका = झलक ।

घूकैश्च मूकैरथ वावदूकैर्
जम्बूक - भल्लूक - गणैर्दिवाऽपि ।
द्वीपि - द्विप - श्वापद - पन्नगादेः
समीपताऽसूच्यत सर्वतोऽत्र ॥ ९१ ॥

व्राताः मृगाणां च वृकानुयाताः
ग्रस्ताऽस्त - शष्पाः करुणं रुवन्तः ।
विलङ्घ्य वत्सानपि दिक्षु दूरम्
उत्पुच्छयन्तः खमिवोदपित्सन् ॥ ९२ ॥

शुण्डैश्च मुण्डैश्च रदैः पदैश्च
वृक्षांश्च वप्रान् विषमांश्च विष्वक् ।
दृढं दलन्तो नभसोऽवतीर्णा
इभा हि खण्डाभ्र - निभा विचेरुः ॥ ९३ ॥

मदोरुता - जङ्गम - मूर्तिभाजो
नागस्य दिग्भेदन - बृंहितेन ।
नगः प्रतिध्वानमिषाऽऽह्वयत् तम्
प्राकार - भेदेऽप्यसहिष्णु - शीलः ॥ ९४ ॥

विरोचनोच्चण्ड - मरीचि - दग्ध-
लोकोत्थ - धूम्या तमसां ततिर्वा ।
कुञ्जेषु सान्द्रेष्विह च द्रुमाणां
पुञ्जेषु नित्यं निभृतं निलिल्ये ॥ ९५ ॥

लेलिह्यमानानि मिथो निकुञ्ज-
च्छाया - निषण्णानि स विश्रमाय ।
मार्गे मृगाणां मिथुनानि तत्रा-
ऽपश्यन्मुदा कुड्मलितेक्षणानि ॥ ९६ ॥

अश्वत्थमूले स्थितया करिण्या
कराग्र - कोटचा कलभोऽभिमृष्टः ।
प्रविश्य पश्चात् प्रपिबन् पयांसि
पुनस्तदूधः प्रजघान मूर्ध्ना ॥ ९७ ॥

व्याधा विराधा धृत - विश्चकद्रु-
दोरा सुघोरा विविधैर्विरावैः।
विद्राव्य जीवान् प्रलयं नयन्तः
कृतान्त - साचिव्यमिवाऽत्र चक्रुः ॥ ९८ ॥

## सन्दानितकम्

समालुलोके सरणी - सकाशे
सूत्कारिणः संहृत - सूकरान् सः।
क्रुद्धोद्धतोन्नद्ध - नियुद्ध - सिद्धान्
चरिष्णु - लोष्टांशिचकिलोपलेपात् ॥ ९९ ॥

सघुर्घुरा - घोषण - घोर - घोणा-
घर्षैः पुरः पातित - पांसु - पूरान्।
गवेषिणः कोमल - कन्द - मूलान्-
उपेक्षित - श्लेषित - शल्य - शूलान् ॥ १०० ॥

भूः पूर्वजेनादि - वराह - नाम्ना
समुद्धृता नः प्रलयाम्बुराशेः।
इत्यादि - वृत्तं लिखतोऽथवाऽत्रा-
ऽऽरात् क्षेत्र-पत्रेषु परान् स्व-पोत्रैः ॥ १०१ ॥

गज - व्रजैरूर्जित - गर्जितैस् तैर्-
मृगाधिराजैरथ तर्जिताशैः।
उद्भिन्न - शष्पाङ्कुर - रोम - राजिः
संत्रासिताऽभादटवी स्वयं सा ॥ १०२ ॥

सौरभ्य - सौम्येन समीरणेन
महीरुहाणां मृदु - मर्मराणाम्।
सुसंहृतत्वं सततं सखेदं
स्वेदं निरस्यत् सुखयाम्बभूव ॥ १०३ ॥

सेसिच्यमानानि सुधा - सुखानि
विहङ्गमानां फल - कूजितानि।
मुहुर्मुमूर्छुर् मद - मोहनानि
कुलाय - कोलेषु च कोटरेषु ॥ १०४ ॥

केका क्वचित् कोकिल - काकली च
कुञ्जेषु कोणेषु च काननस्य ।
उद्घोषयामास रहः - स्थलानि
शरारु - शार्दूल - निषेवितानि ॥ १०५ ॥

प्रैक्षिष्ट पश्चादचिरेण चारी
सन्देशहारी सुभगोदयाय ।
विज्ञापितां दूरग - वुक्कनेन
पार्श्वे पदव्याः स पुलिन्द - पल्लीम् ॥ १०६ ॥

रोमन्थनाध्यासित - वीथिकाया
इहैव मातुर् दर - मुद्रिताक्ष्याः ।
तर्णस्तताङ्गः प्रचलाग्र - पुच्छ-
श्चुचूष कर्णं बहु - फेनिलास्यः ॥ १०७ ॥

तुच्छं च पुच्छं श्रवणे तथाऽन्यः
समुच्छ्रयन्नुच्छलितोऽनुवारम् ।
उपेत्य [1]मां वत्स इवोन्मदिष्णुः
पश्चात् पदाभ्यां समताडयत् खम् ॥ १०८ ॥

धातृ - स्मराभ्यां पिहिते मिलित्वा
लावण्य - कोषेऽथ स वन्य - घोषे ।
न्यरूपयद् यौवन - सागरस्य
महोर्मिमाला इव तत्र बालाः ॥ १०९ ॥

## कुलकम्

तृण्या - तुलानां युव - मानसानां
वातूल - वीचिर्ममताऽऽत्मयोनेः ।
पारं प्रयाता कवि - कल्पनानां
कौमारमङ्गेन विभूषयन्ती ॥ ११० ॥

वपुष्मती काचन भिल्ल - पल्ल्या
सौभाग्य - लक्ष्मीरधिदेवता वा ।
स्मरस्य सर्वंकषतां समन्ताद्-
उदघोषयन्तीव दृशोर्विलासैः ॥ १११ ॥

१. मां = मातरम् ।

पुनः पतन्तं कुच - कुम्भ - कूटाच्-
चेलाञ्चलं किञ्चन साधयन्ती।
मञ्जीर - शिञ्जा - मृदु - मूलमन्त्रैर्
जडांश्च जीर्णानपि जीवयन्ती ॥ ११२ ॥

जम्बाल - जालाल्लघु - पल्वलस्य
कुमुद्वती - कुद्मल - कन्दलीव ।
निश्चक्रमे यौवनमूर्त्तिरेका
कुटीर-वासात् कट-कूट-कल्पात् ॥ ११३ ॥

मौग्ध्यस्य माया मधुराऽङ्गलीला
काचित् किशोरी भ्रमि - लासशीला ।
चञ्चल्यमानानि चकार चक्रे
चक्षूंषि चेतांसि च चेतनानाम् ॥ ११४ ॥

अन्या विलासेन किरात - बाला
समुल्लसन्मन्मथ - दाममाला ।
आवर्तयन्ती तनुमत्र तन्वी
विलोडयामास मनो न केषाम् ॥ ११५ ॥

भिल्ली परा श्यामल - पेशलाङ्गी
भल्लीव काचित् कुसुमायुधस्य ।
प्रविश्य सा नेत्र - पथेन सद्यः
उत्खाय निन्ये हृदयानि यूनाम् ॥ ११६ ॥

प्रतीक्षमाणं सुभगं सुपात्रम्
मदाप्लुतं यौवन - पानपात्रम् ।
समुद्वहन्ती शुशुभे प्रफुल्ला
स्थलेऽपि नीला नलिनी चरिष्णुः ॥ ११७ ॥

सञ्जीवनीं कामपि मीनकेतो-
श्चमत्कृतिं तां विधि - चातुरीणाम् ।
निर्वर्ण्य को नोत्पुलकैर्निजाङ्गै-
रालिङ्गनेच्छां कथयन्निवासीत् ॥ ११८ ॥

कापीह नीलाब्ज - सवर्ण - गात्री
वाचा किरन्तीव मधूनि बाला ।
पात्रीकृतान् काक्ष - निरीक्षितानाम्
मिलिन्द - सङ्घानिव संचकर्ष ॥ ११९ ॥

निसर्गतः किंचन कृष्णिमाङ्गी
कस्तूरिका - केसर - चर्चितेव ।
त्रिनेत्र - दग्ध - स्मर - धूम - सक्त्या
श्यामीकृताऽऽसीद् रतिरेव साऽन्या ॥ १२० ॥

विप्रोषितानां विधुरीकृतानाम्
विधेर्विलासेन वनान्त - वाटे ।
व्यपोहनीयं व्रण - वेदनानाम्
वल्लीव बाला विकचा बभासे ॥ १२१ ॥

सिंहीव कट्या कुटिलान् कटाक्षान्
भ्रू-लासिनो व्याघ्र-नखान् दधाना ।
कट्टारिका शाणित - कोटिरेका
निःशेषयिष्यन्त्यलसद् वियुक्तान् ॥ १२२ ॥

सहसा देहिनी शक्तिः
स - हसा काम - कन्दली ।
सहसाऽशिश्रियत् कुञ्जं
सह सा स्व - सखीजनैः ॥ १२३ ॥

उपेक्ष्य तच्च प्रतिमोच्य दृष्टिं
त्वरातुरः कार्य - वशाद् वशीतः ।
प्रातिष्ठताऽसो प्रगुण - प्रवीरः
कण्टालु - कुञ्जादिव कुञ्जरेन्द्रः ॥ १२४ ॥

क्रोशान् क्रमित्वा कतिचित् कृपालुः
शुश्राव दूरात् सहसाऽबलायाः ।
प्रार्त्तं - स्वरं चीत्करणाऽनुयातं
"त्रायस्व सिंहात् लघु विक्रमे"ति ॥ १२५ ॥

दिवैव सोत्कम्प - शिखा - कराणां
संज्ञाभिराहूत - तमो - वृतेभ्यः ।
द्रुम्यो द्विजा वायस - सारिकाद्या
नीचैः प्लवन्ते स्म पुना रुवन्तः ॥ १२६ ॥

गोमायु - वातायु - मुखाश्च भूयः
क्रोशत्स्वरणा दिक्षु दराद् द्रवन्तः ।
साहाय्य - सम्प्राप्ति - समीहया ते
वेगाद् व्यचिन्वन्निव दाव - देवान् ॥ १२७ ॥

तातायमानं तुमुलं तिरश्चाम्
प्रतिध्वनद् दिक्कुहरान्तरेषु ।
उपेयुषीणां वनदेवतानाम्
प्रत्युत्तरं सान्त्वकरं बभासे ॥ १२८ ॥

अमन्दमाक्रन्दमिमं निशम्य
निर्वर्ण्य हिंसां च करिष्यमाणाम् ।
सन्तापितः सन् भृगुपातमिच्छुः
सूरोऽक्षमोऽस्ताद्रिमभिप्रतस्थे ॥ १२९ ॥

तीर्त्वा तत् तपतां - पतिस्त्वरितवत् तारापथाभ्यन्तरं
लीला-लोहित-लोष्टवल्लघुतया लेटचन् लुठन् लम्बितः ।
पाश्चात्ये पयसां पतौ प्रपतन - त्रासात् प्ररूढैः करैः
शाखि-श्रेणि-शिखाश्च शैलशिखरान् शिश्लेष शर्मप्रदः ॥ १३० ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-
विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते
'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'मातृगुप्त - यात्रावर्णनं'
नाम नवमः सर्गो निर्वृत्तः ॥

# दशमः सर्गः

चातुर्वर्ण्यं - हितेच्छयेव हि चतुर्वर्गं करैश्चेतयन्
वात्सल्याच्चतुराश्रमिष्वथ स चातुर्विद्यमुद्योतयन् ।
चिन्ताऽभिख्यमिदं चिरेण चलितं चक्रभ्रमं चूर्णयन्
सर्वात्मा स चतुर्भुजो भुवि चतुर्दिक्कं दिशेन्मङ्गलम् ॥ १ ॥

स स्वामिनो नाम निशम्य तावत्
कर्तव्य - निष्ठां प्रति जागरूकः ।
पार्ष्णि - प्रहारैस्त्वरयंस्तुरङ्गं
स्वरानुसारी तरु - षण्डमैषीत् ॥ २ ॥

आकृष्यमाणामवलोक्य बालां
ग्रस्ताम्बरां केसरिणाऽत्र दन्तैः ।
ततोऽवतीर्याऽऽशु हयात् स गर्जन्
नासा - मुखे तं कशया जघान ॥ ३ ॥

तथाऽऽहतस्तेन यदा मृगेन्द्रो
विहाय तामाक्रमितुं तमैच्छत् ।
तावद् विकोशेन कृशाऽसिनैव
हिंस्यं स हिंस्रं . यमसाच्चकार ॥ ४ ॥

प्रारम्भतः प्राणवता प्रसह्य
प्राक् शोणितं पञ्चमुखस्य पातुः ।
प्राणं कृपाणी हृदि पन्नगीव
पपौ प्रविष्टाऽद्य परस्य पातुः ॥ ५ ॥

स आततायीव हतोऽपि सिंहस्
तस्याऽभवत् क्लेश-करः कृपालोः ।
नाऽऽगामिनः प्रेत्य पुनर् नु जन्तोः
न कस्य मृत्युर् बत ! शोचनीयः ॥ ६ ॥

ततो विसंज्ञामिव तां स बालां
सङ्कोचमञ्चंश्च परामृशंश्च ।
प्राह स्म वत्से ! भयमत्र धत्से
कुतो, ऽहितोऽयं रहितोऽसुभिस्ते ॥ ७ ॥

सा पाणिना तेन गृहीत - पाणिर्
उत्थापितोन्मार्जित - कण्ट - कक्षा ।
अनामयत् प्रेममयं मुखं स्वम्
अनामय - प्रच्छन - साग्रहेण ॥ ८ ॥

सा सान्त्वितैवं सहसा सबोधा
याथार्थ्य - वृत्तं समवेक्षमाणा ।
आनृण्यमाप्येत कथं नु साधो-
रस्येति निर्णेतुमभून्न चाऽलम् ॥ ९ ॥

तस्याः कुचाभ्यां नमदुन्नमद्भ्याम्
भीतिं हृदिस्थामिव सूचयद्भ्याम् ।
जञ्जन्यमाना बभुरङ्गिकायाम्
भङ्गास्तरङ्गा इव यौवनाऽब्धेः ॥ १० ॥

सर्वात्मनाऽऽत्मानमिवार्पयन्ती
प्रकाशयन्ती कृतवेदितां सा ।
निवेदयन्तीव दशां च दीनाम्
पप्रच्छ साऽस्रा सकपोतहस्तम्— ॥ ११ ॥

'दयाऽम्बुधे ! शूर - शिरोमणे हे !
निःस्वार्थ - चर्या - व्रतकाऽऽत्मयाजिन् ! ।
प्राणाधिकाऽसौ चकिता वराकी
माता क्व याता मम सम्प्रती'ति ॥ १२ ॥

अत्रान्तरे पार्श्वगतान्निकुञ्जात्
प्रत्यक्षतो दृष्ट - यथार्थजाता ।
स्याल्लेशतः शेष - भयाऽऽशु माता
[illegible] ॥ १३ ॥

हर्षाऽस्र - सिक्ते च कराम्बुजाभ्यां
स्पृष्टे च भवत्या मुकुलीकृताभ्याम् ।
पदे क्रमेणाऽर्चयतामिवाऽस्य
माता च जाता बहुशस्ततस्ते ॥ १४ ॥

उद्धारको जीवन - सम्प्रदाता
देवः परार्थाय पणायितात्मा ।
गम्भीरता - नीरनिधिः स ताभ्याम्
वीरस्ततोऽस्तावि कृताञ्जलिभ्याम् ॥ १५ ॥

बालार्दितोन्मर्दित - शून - भाला
मूकाऽभवद् गात्र - विलग्न - शूका ।
हीना भयेनाऽप्युपकृत्यधीना
कीर्णाऽस्रुधारा तु जगाद जीर्णा ॥ १६ ॥

स्वार्थैकनिष्ठः सकलोऽपि लोकः
पश्यत्यशेषं स्व - हितैषयैव ।
हत्वा परार्थानपि चार्थ - सिद्ध्यै
यथा तथा वा यतते क्षपाहम् ॥ १७ ॥

प्रतिक्षणं क्षैण्यमितोऽभ्युपेतं
सापायमेतं 'मलिनं स्व - कायम् ।
स्थास्नुं विचार्यैव हि जन्तु - जातम्
पुष्णाति पुण्य-प्रतिबन्धि पापम् ॥ १८ ॥

स्व - काय - पोषाय मृगाधिराजो
जातो जिघांसुश्च जिघत्सुरेषः ।
माताऽप्यहं चाऽङ्क - गोपनाय
स - कण्ट - पुञ्जेऽन्तरिता निकुञ्जे ॥ १९ ॥

परं महात्मन् ! भवताऽन्यथैतद्
व्यधाय्यदृष्टाऽश्रुत - पूर्वमन्यैः ।
तुच्छाऽबला - जीवन - रक्षणार्थं
मृत्योर्मुखे पातयताऽऽत्म - देहम् ॥ २० ॥

कया गिरा वा वचनैः कियद्भिर्
मया भयाद् व्याकुलयाऽनया वा ।
महामहिम्नो भवतोऽवदानम्
भवेदुपश्लोकयितव्यमेतत् ॥ २१ ॥

अस्मद्विधः किं प्रतिकर्तुमीष्टे
दीनो गरिष्ठस्य भवादृशस्य ।
पूजार्पिताऽसौ किमु दीप - वर्तिः
स्याद् भास्कर - द्योत - विवर्धनाय ? ॥ २२ ॥

स्वस्त्यस्तु ते जीव शतं समानां
लभस्व लक्ष्यं लघु लिप्सितं स्वम् ।
भव - प्रसादाद् भव लोक - पालो
व्यालात् त्वयाऽपालि यदद्य बाला ॥ २३ ॥

ग्रस्ता पुराऽभूदिह सिंहिकायाः
सुतेन या पार्वण - चन्द्र - मूर्तिः ।
सुधाधरा चाम्बरभासिनी सा
कामप्यभिख्यामतनिष्ट तावत् ॥ २४ ॥

एवं गदित्वा विरता यदाऽसा-
वुपक्रिया - भारवतीव नम्रा ।
तावत् स वाचंयमतामितः प्राग्
विलक्षतां चाप्त इवेत्युवाच ॥ २५ ॥

इहत्य - सत्यं भणितं भवत्या
स्वार्थी सजीवः सकलो भुवीति ।
मयाऽपि चात्मम्भरिणैव भव्य-
मानव्य - धर्माचरणं व्यधायि ॥ २६ ॥

सौभग्यवानीदृश - दैवयोगं
क्वाचित्कमायुष्युपलभ्य देही ।
दिव्यं सुखं कल्पनयाऽप्यगम्यम्
[illegible]भवीति ॥ २७ ॥

देहं विमुञ्चत्यपि यः परार्थे
स प्रेत्य तावत् फलमश्नुते तत् ।
जीवन् यदासादयितुं न चालम्-
भूष्णुर् भवे सम्भृत - वैभवेऽपि ॥ २८ ॥

चिरन्तनं जीवनमस्तु कामं
न चेदृशी स्याद् घटनाऽनुवारम् ।
दधीचिना वा शिविना न देह-
दानाय भूयोऽधिगतोऽवकाशः ॥ २९ ॥

पश्वादि - योनौ प्रतिरुध्य पातम्
प्रादायि पुण्येन मनुष्य - मूर्त्तिः ।
तत्पालनार्थं प्रवणेन यत्नो
मया व्यधायीति न चातिरिक्तम् ॥ ३० ॥

शस्तानि वस्तूनि यथाकथञ्चिद्
वित्तानि वित्तानि च भूतलेऽत्र ।
तिष्ठन्ति लोकान्तर - मार्गं एकं
सध्र्यङ् मुनीन्द्राः सुकृतं वदन्ति ॥ ३१ ॥

उपेक्षमाणः क्षणिकं शरीरम्
प्रतिक्षणं मानस - वाक् - क्रियाभिः ।
स्थेष्ठं सखायं सुकृतं ततोऽहम्
पदे पदेऽत्र प्रतिपालयामि ॥ ३२ ॥

पुण्यैः पुमान् प्रोच्चपदं पृथिव्याम्
प्राप्नोति पारे परमं पदं च ।
कल्पद्रुमस्यापि हि पुण्यमेव
पौराणिका पूर्वंजमामनन्ति ॥ ३३ ॥

अकुर्वता चापि परोपकारं
देहेन नूनं पतनीयमेव ।
तन्नूनमन्यस्य हिताय काया-
ऽपायोऽपि लाभाय कृतात्मनः स्यात् ॥ ३४ ॥

स्त्रैणं मृदुत्वाद् भुवि मातृरूपं
लोकेऽबलाद्यैः प्रथितं पदैश्च ।
धर्मोऽस्य रक्षा तदरक्षणं च
मनुष्यताया वचनीयतैव ॥ ३५ ।

त्रातोऽस्मि मात्रेति हि 'मातृगुप्त'-
नाम्ना मया यत् परिरक्षितेयम् ।
तेनाप्तमानृण्यमिवाऽञ्जसाऽद्य
नाऽद्यापि केनाप्यधमर्णिकत्वम् ॥ ३६ ॥

इत्येवमुक्ता जननी वयस्का
विच्छिद्य वार्तां पुनराशिषा तम् ।
समर्धयद् "धार्मिक ! [1]मातृगोप्ता
भवान् भवेऽस्मिन् भवतात् सदे"ति ॥ ३७ ॥

कालानुरोधादथ ते प्रणम्य
यथेप्सितामेकपदीं प्रयाते ।
व्यावृत्य बाला परमश्ववारम्
व्यलोकयच्चोर - दृशाऽनुवारम् ॥ ३८ ॥

वाताश्वमानीय ततो विदूरं
स विद्रुतं पाद - पदाऽनुसारी ।
पुण्य - प्रभावेण परं प्रसन्नः
पुनः पदव्यां पुरतः प्रतस्थे ॥ ३९ ॥

वन्य - द्रुमाऽऽद्याऽऽर्तव - पुष्प - मोदैर्
मेदस्विनो मन्द - मरुत्तरङ्गाः ।
द्राघिष्ठ - मार्ग - क्लम - विक्लवं तं
स्वेदाऽपनोदैर् मदयाम्बभूवुः ॥ ४० ॥

दाधाव्यमानाऽश्ववराऽधिरूढो
गूढो लता - दूरनताऽङ्घ्रिपेषु
हृद् - वेपनं तद् विपिनं ततोऽसा—
वदृष्टपूर्वं पुरतः शशङ्के ॥ ४१ ॥

---

१. मातृगोप्ता—भूपालः ।

दन्दह्यमानेषु दवेन दूरे
क्वचित् क्वचित् कीचक - काननेषु ।
आगन्तुकेभ्यो भय - केतनानि
प्रैक्ष्यन्त धूमावलि - केतनानि ॥ ४२ ॥

प्राचण्ड्यमाप्तः शर - कास - घासै-
राकाशगानामपि घस्मरोऽग्निः ।
जन्तूनितो निष्क्रमणाय तूर्णं
ज्वाला - करैः शश्वदिवादिदेश ॥ ४३ ॥

उत्थाय भूयोऽप्युपविश्य कृत्वा
व्यायाम - चर्यामकृशः कृशानुः ।
ततीस्तरूणां निगलन्नपीतो
भस्माग्नि - रोगी नतरामतार्प्सीत् ॥ ४४ ॥

चञ्चच्चटत्कार - शिखाग्रलोलो
लौल्याद्दिगन्तानपि लेलिहानः ।
स्थाणूंश्च भृष्टान् विसृजंस्ततः सिम-
सिमायमानान् ज्वलनो जजृम्भे ॥ ४५ ॥

अङ्गारकोल्कास्तु चकासमानाः
प्रापुः समानाश्चिलिमीलिकाभिः ।
आतङ्क - संसूचक - दीपिकात्वं
साम्राज्य - सीमासु दवानलस्य ॥ ४६ ॥

स्फुलिङ्ग - फूत्कार - रवोत्कटानि
दीपोल्मुकाली - शत - शोभितानि ।
देदीप्यमानानि वन - स्थलानि
'दीपावली' - केलिमिव व्यतेनुः ॥ ४७ ॥

कृतान्त - कल्पोऽद्य स कृष्णवर्त्मा
विध्वंसयन् जाङ्गल - जीवजातम् ।
दिगुत्पतद् - धूम - तिरस्करिण्यां
ततान लीलामिव कृष्णकर्मा ॥ ४८ ॥

सत्त्वाऽशनाप्यायित एष कालो
निवर्तमानो ददृशेऽत्र धूमः ।
अग्नेरघं वाऽप्ययशो वपुष्मद्
विवर्धमानं दिवि चादिगन्तात् ॥ ४९ ॥

दर्पोद्धताः सिंह - मुखा इहत्या
हत्याकृतः सम्प्रति दण्डनीयाः ।
इत्येव मत्वा वनदेवताभिर्
जज्वाल रौद्रा रचिता चिता सा ॥ ५० ॥

विहाय नीडान् मुखरैर् वराकैर्
निष्काल्यमाना इव पक्षि - पुञ्जैः ।
आसन्न औष्ण्याद् विकला मृगाद्या
आसन्नभीका अपि कांदिशीकाः ॥ ५१ ॥

ततो दृढं साध्वस - कीलितात्मा
श्रीमातृगुप्तस्य जवी स वाजी ।
खलीन - खेदं समुपेक्ष्य सद्यः
संस्तम्भयामास शफान् सरण्याम् ॥ ५२ ॥

ससंभ्रमं सोऽथ ततोऽवतीर्य
प्राच्यां विचिन्वन् दिशि दूरदर्शी ।
ददर्श कालानल - दारुणेन
ग्रासीकृतं काननमग्निनाऽग्रे ॥ ५३ ॥

एवं - गते चाऽप्यचलान्तरात्मा
प्रगृह्य पाणौ कविकां हयस्य ।
प्रोत्साहितस्य प्रणय - प्रहारैः
स वीत - भीतिः पुरतः प्रतस्थे ॥ ५४ ॥

युग्मकम्

क्रान्त्वा स किञ्चित् कृपणां कुरङ्गीं
त्रस्नुं स्थलस्थामचिर - प्रसूताम् ।
ददर्श विग्नां च निमेष - वर्जं
धूमाद्वितं शावकमीक्षमाणाम् ॥ ५५ ॥

ग्रसिष्यमाणं लघु - गुल्म - चक्र-
ज्वालाभिरारात् प्रतनुं स्थितं तम् ।
आकर्षयन्तीमिव दीर्घ - दृष्ट्या
तां शान्तयन्तीमिव चाग्निमस्रैः ॥ ५६ ॥

प्राणान् स्वकीयांस्तृणयंस्तथार्त्तं-
त्राणाय नूनं नवनीत - चेताः ।
दुद्राव तापेन तयोर्दयालुर्
न भैरवेणापि दवेन तावत् ॥ ५७ ॥

स्वार्थं गतार्थं सुतरां विजानन्
संसार - सारं च परोपकारम् ।
अनुग्रहे साग्रह - देह - दायी
क्लैव्यं न वैक्लव्यमसौ जगाम ॥ ५८ ॥

द्रष्टा तयोस्तां विवशां दशां स
वाहं द्रढिम्नोभयतो नियम्य ।
प्रविश्य गुल्मेष्वकुतोभयः सन्
पूत्कारकः पोतकमाललम्बे ॥ ५९ ॥

एवं पुनः प्रीति - परिप्लुतेन
परामृशन् पाणि - पुटेन साधुः ।
प्रक्षालित - प्रोञ्छित - चारुनेत्रं
क्षेत्रं कृपायाः समतर्पयत् तम् ॥ ६० ॥

त्रासेन धूमेन च [1]मा - वियोग-
शोकेन शावस्य हि वाष्प - विप्लवाः ।
अद्रावयन् विश्वमिहार्द्रयन्तो
लोष्टेष्टका - द्रु - दृषदो दृढा अपि ॥ ६१ ॥

स स्नेह - संस्पर्शमुपेत्य पोतो-
ऽपेतास्य - रौक्ष्यः समवाप्त - संज्ञः ।
शान्तात्मनोऽन्तःकरण - म्रदिम्ना
द्राग् देह - दाह - द्रढिमोज्झितोऽभूत् ॥ ६२ ॥

---

१. मा=माता ।

तस्मिन् प्रयाते प्रणिधाय पोतं
वीतापदे शीत - पदे कुरङ्गी ।
तं लेलिहाना विरराम नाऽसौ
जिह्वा - जलैस्तापमपाकरिष्णुः ॥ ६३ ॥

जीवंश्चिताभेषु शमी शमीनां
गुल्मोल्मुकेषु प्रविशन् विशङ्कम् ।
हुतात्मनां शालभ - वृत्तिभाजां
स एकदा मौलि - मणित्वमापत् ॥ ६४ ॥

चराचराणामिह देह - दाह-
दुःखेन दूनं हृदयं स नूनम् ।
मैत्रो महात्माऽश्रु - कणोक्षणेन
संप्रस्थितः संशमयांबभूव ॥ ६५ ॥

स्नैग्ध्येन मौग्ध्येन च दिग्धया दृशा
ग्रीवां परावर्त्य तमीक्षमाणा ।
तदन्तराले कृतवेदितां स्वां
निवेदयामास मुहुर् मृगी सा ॥ ६६ ॥

ततस्तुरङ्गं त्वरयाऽधिरुह्य
ज्वाला - चिता - पाचित - जीवजातम् ।
तत्काननं वा पितृकाननं वा
सत्त्वानुकम्पी स समुल्ललङ्घे ॥ ६७ ॥

अधिष्ठितो वाह - वहित्रमेको
घनं वनं श्यामलिमाऽम्बुराशिम् ।
उल्लङ्घयंश्चापि दिनैः कियद्भिर्
दूरीभवत् तत् सततं स मेने ॥ ३८ ॥

क्रान्त्वा यथाक्षिप्रमसौ कृपालुः
क्रोशान्तरे पुष्करिणीं ददर्श ।
उच्चावचैस्तामरसैः प्रफुल्लैस्
[illegible] द्यौरिव या चकाशे ॥ ६९ ॥

पूर्णाऽम्बुभिस् सा प्रतमां प्रसन्नैर्
निर्वात - हेतोर् निशि निस्तरङ्गा ।
स्वः - सुन्दरीणां स्मर - केलि - काले
प्रसाधनार्थं मुकुरत्वमाप ॥ ७० ॥

इदं सतां स्वान्तमिवाऽतिकान्तं
स्वच्छं गभीरं च सुशीतिमाढ्यम् ।
महत्सरो दूरत एव पापं
तापं च तृष्णां च तिरश्चकार ॥ ७१ ॥

स्नानाभिलाषेण समागतानां
कूल - स्थितानां वरवर्णिनीनाम् ।
मुखैरसौ मण्डलिता मनोज्ञैस्
स्थलेऽपि सम्फुल्ल - सरोरुहाऽऽसीत् ॥ ७२ ॥

स एकतस्तत्र विमुक्त - सङ्गस्
सुरूप - धारोघमिवोच्छलन्तम् ।
परत्र यूनो विधुरांश्च पान्थान्
पिपासिताक्षानचलान् ददर्श ॥ ७३ ॥

करम्बितां यौवन - सद्विलासैर्
मनोज्ञतां वा मदिरां तटस्थाः ।
आचम्य नेत्रैः स्मृति - नाश - हेतो-
स्त्रपा - निरस्ता जडिमानमापुः ॥ ७४ ॥

उच्छृङ्खलं बाल्यमतीत्य सद्यः
प्रौढिं प्रयाता तरुणिम्न एका ।
सरोवरान्तः - प्रतिबिम्बिताङ्गी
सरोजिनीवाम्भसि जङ्गमाऽऽसीत् ॥ ७५ ॥

धैर्यं हरन्ती वशिनोऽपि मूर्ता
लीलेव सा पाञ्चशरी किशोरी ।
अमन्यत क्षोणितलोत्तमाऽत्र
तिलोत्तमाऽऽप्ता त्रिदिवाद्दिवाऽऽप्ता ॥ ७६ ॥

## युग्मकम्

वधूर्विधेः कौतुक - कल्पनानाम्
पर्याप्तिरेकेह च सञ्चरन्ती।
प्रीति - प्रदानेन शतोत्सवाना
विप्रोषित - प्रेक्षण - पारणाऽभूत् ॥ ७७ ॥

केयूर - काञ्ची - कटक - क्वणेन
व्यक्तीकृत - स्वागत - गीतिकायाः।
निक्षिप्य पार्श्वे हृदयानि तस्याः
कृच्छ्रेण पान्थाः कृपणास्ततोऽयुः॥ ७८ ॥

सिस्नासुरेका वसनानि वासूर्
यथा यथाऽङ्गात् क्रमशो व्यमुञ्चत्
दिदृक्षयोत्कानि तथैव यूनाम्
मनांस्यहम्पूर्विकया ततोऽगुः ॥ ७९ ॥

नवा वधूर् वातिक - वीचि - वेपनैर्
विस्रंस्यमानोर्मिल - सूक्ष्म - शाटी।
भङ्गीव लीलामय - यौवनाऽब्धेस्
तरङ्गयामास न कस्य मानसम् ॥ ८० ॥

वामा कटाक्षार्धं - विलोकिनीह
स्मारी - जगत्या जय - वैजयन्ती।
पीयूष - पाटीर - पराग - पिष्टचा
धात्रा कृता वाऽऽस्त दिवोऽवतीर्णा ॥ ८१ ॥

केलि - स्थलीयं कवि - कल्पनाना
कान्तिः समस्तोत्तम - नायिकानाम्।
दिव्योपमानै रचिताऽङ्गसंस्था
स्याद् वक्र - वाचा सरलाऽनुभूतिः॥ ८२ ॥

एका च काच - प्रतिमेव काचित्
तन्वन्तरीयान्तरिताङ्ग - यष्टिः।
सज्जा सुभाग्यैरिह मज्जनार्थं
लज्जा सदेहा समदीक्ष्यते स्म ॥ ८३ ॥

गुप्ताऽप्यलुप्ता वसनेषु वासूस्-
तिरस्करिण्यां सुनटीव सैषाम् ।
उत्कूर्दमानोत्कलिका - सहस्रं
कण्डूलमन्तःकरणं चकार ॥ ८४ ॥

स्नात्वाऽभ्युपेताऽम्भसि जानुदघ्ने
सक्तांशुकेनाऽप्युपगूहिताऽसौ ।
'शनैस्तटं यात्वि'ति यौवनस्थैः
स्व - स्वेष्ट - देवः समयाच्यतोत्कैः ॥ ८५ ॥

लीला - सखी लोचनयोः पुरस्ताद्
वयस्य - गोष्ठीषु विनोद - वार्ता ।
स्वः - सुन्दरी स्वप्न - समागमेषु
क्षणाय दृष्टाऽपि सदैव साऽभूत् ॥ ८६ ॥

धान्यादलम्बाविति चूचुकोच्चौ
कुम्भौ स-मुद्राविव वित्त - पूर्णौ ।
कुचौ तदाऽसूचयतां तदीयौ
सुरक्षिताऽस्पृष्ट - कुमारभावम् ॥ ८७ ॥

सा माधुरी मूर्तिमती मधूनां
स्मृतिः स-दाहाऽविचला सदा हा ! ।
सितोपलिप्तेव गुटी गरस्य
कङ्काल - शेषान् युवकानकार्षीत् ॥ ८८ ॥

साऽस्याः सरस्याः शरदभ्र - शुभ्र-
तरङ्ग - भङ्गाऽम्बु - परिप्लुतायाः ।
कूले स्थिताऽलङ्करणैर् लसन्ती
सौदामनीवान्धयदध्वनीनान् ॥ ८९ ॥

विनोद - बाधाऽन्धतमोऽपहर्तु -
मेका चरिष्णुः स्मर - दीपिकाऽऽसीत् ।
यत् कर्षिताः कान्ति - करैरिवाऽस्याः
पान्थाः समायन् [illegible]मानाः ॥ ९० ॥

दूर्वा - दल - श्यामलिमाऽङ्गभूषणां
कलिन्दकन्येव वपुष्मती परां ।
विष्वग् - वहन्मज्जिम - यौवन - च्छटा
न्यमज्जयत् स्वात्मनि मुग्ध - मानसान् ॥ ९१ ॥

कौमार - वात्योच्छलिता महोर्मिर्
लावण्य - सिन्धोरिह कापि मुग्धा ।
विप्लाव्य विश्वं तट - निर्गताऽपि
न चाऽध्वगानां निरगान्मनोभ्यः ॥ ९२ ॥

रम्भादि - सृष्टि विधिना विधाय
सीमा कलाया उपदर्शिताऽभूत् ।
सा त्वद्वितीया द्युतिरेव मूर्त्ता
केनापि बाला व्यरचीतरेण ॥ ९३ ॥

राकेव पूर्णेन्दु - मुखी सदेहा
सुखाऽपरा चारिम - चन्द्रिकाऽभूत् ।
तामन्यथाऽऽलोक्य किमस्त - भाराः
पान्थाश्चकोर - व्रतमन्वकार्षुः ॥ ९४ ॥

निर्माय[1] - भव्याऽप्रतिमाऽतिरूपां
धाराधिरूढाऽद्भुत - यौवनां याम् ।
निर्माय[1] धाताऽमर - सुन्दरीणां
प्राक्कालिकीं स्वां रचनां निनिन्द ॥ ९५ ॥

आन्दोलिता यौवन - मारुतेन
शाखेव तन्वी मदन - द्रुमस्य ।
किं मज्जनोन्मज्जन - कैतवेन
निर्वापयामास मुहुः स्मराग्निम् ? ॥ ९६ ॥

नीलोत्पलाक्षी सरसीरुहास्या
मृणालनालाऽमल - कोमलाङ्गी ।
याताऽवचेतुं कुसुमानि काचिन्-
नालक्षि लीना नलिनी - वनेऽत्र ॥ ९७ ॥

१. निर्माय = माया-रहित ; बनाकर ।

दूरात् सरोजाऽवचयाय हस्तौ-
त्क्षेपे मुहुर् - दृष्ट - भुजान्तरान् सा ।
अक्रीत - दासानिव तत्र चक्रे
कामेषुभिः कौतुक - कीलिताङ्गान् ॥ ९८ ॥

तद्वक्त्रमम्भोजमितीव मत्वा
मिलिन्द - माला मुहुरापतन्तीम् ।
चिताब्ज - सन्दंश - करेण शश्वत्
सा वारयन्ती शुशुभे नटीव ॥ ९९ ॥

सहैव नालैररविन्द - वृन्दं
नीलानि भूयो नलिनानि चैव ।
न पुष्पलावी, रतिरेव नूनं
सा सायकान् संजगृहे स्मराय ॥ १०० ॥

विलोक्य विष्वक् त्वरयाऽत्र तन्वी
निःशेषयित्वा वपुषश्च वेषम् ।
स्वैरं यथाऽच्छे सलिले तथैव
विवेश वामा हृदये समेषाम् ॥ १०१ ॥

प्राप्ता पुरः प्राक्तन - पुण्य - पुञ्जैर्
लोकोत्तरा मूर्त्तिरिवैन्दवीयम् ।
रराज रम्भा - प्रतिमा पृथिव्यां
धात्रा कृता कौतुकिनाऽद्वितीया ॥ १०२ ॥

स्त्रैणेन सूनैरिव साधितेन
समावृत्ताऽसौ सरसी समन्तात् ।
सुदुर्लभाऽगण्य - मनोज - पण्य-
शाला विशाला विसृता बभासे ॥ १०३ ॥

सौन्दर्य - सिन्धुं मदनो विलोड्य
स्नेहस्य साम्राज्य - विधानमिच्छुः ।
हृद् - दीपनार्थं यदि वाऽब्जगानाम्
आनीतवान् [illegible] ॥ १०४ ॥

स्वच्छे तरुण्योऽत्र च तीर - तोये
तोतुष्यमाणास् तरलास् तरन्त्यः ।
दिगम्बरा मत्स्य इवाऽब्जगानाम्
उन्मज्ज्य मग्ना इव मानसेषु ॥ १०५ ॥

विशोध्यमाना इव वैजयन्त्यः
स्मरस्य, धीरानपि वै जयन्त्यः ।
अवाङ्मुखास्तास् तरण - प्रवृत्ताः
स्युः शिक्षमाणाः पुरुषायितं किम् ? ॥ १०६ ॥

ता दृङ्निपातैः परितः सृजन्त्यो
नवं वनं नील - सरोरुहाणाम् ।
पूर्णामपीमां सरसीं पयोभि-
रापूरयन् मञ्जुलता - झरीभिः ॥ १०७ ॥

स्मरेण सेनामिव संगृहीताम्
भूकम्प - शक्ति यदि वाऽत्र दृश्याम् ।
लावण्य - मेलामिव वीक्ष्य कस्य
ध्वस्तं यतेश्चापि न धैर्य - दुर्गम् ? ॥ १०८ ॥

अवर्णनीया रचना विधातुर्
अहो ! विचित्रा प्रकृतिश्च पौंस्नी ।
यन्निर्निमेषैर् निभृतैरशेषैर्
लावण्यमास्वाद्यत मुग्ध - पान्थैः ॥ १०९ ॥

स्मरस्य तत् साहस - शक्तिरूपं
रूपं वधूनां च विलास - लीलाः ।
उज्जृम्भमाणानि च यौवनानि
शम्पा[1] - शतोद्योत इवैकदाऽभूत् ॥ ११० ॥

गाढैर् द्रढिम्ना वसनैर् निगूढे-
त्यात्मोपमा स्फाटिक - मूर्ति - मुद्रा ।
मग्नाऽप्यमग्नाऽपि च दुर्भगैका
नैराश्य - निघ्नान् अपरान् व्यधत्त ॥ १११ ॥

---

१ शम्पा = विद्युत् ।

गात्रेण तस्या वसनास्तृतेन
मग्नेन तोये सममेव यूनाम् ।
मग्नं मनो मज्जिम - रूपकस्य
जात। पटाक्षेप इवान्तिमोऽसौ ॥ ११२ ॥

जंघाऽस्त्रशाला - तुलितेऽसमेषोः
सरस्तटे सङ्गत - यौवतेऽस्मिन् ।
तद् - वाण - भीत्येव स मातृगुप्तो
बभार रोमाञ्चमयं तनुत्रम् ॥ ११३ ॥

दयोदधिं सच्चरितं चरिष्णुं
तं जग्मिवांसं समवेक्ष्य वापी ।
धूतोर्मि - हस्ता सजलाऽम्बुजाक्षी
हंस - स्वनोक्तैर् गमनान्न्यरीत्सीत् ॥ ११४ ॥

ततस्ततोऽप्येत्य स नातिदूरे
पुरीं पुरः प्राप परं प्रसिद्धाम् ।
ध्वजांशुकोत्कम्प - मिषान्मुहुर् या
तमभ्यनन्दन् मुदिताऽऽतिथेयी ॥ ११५ ॥

प्राचीर - चीरेण घनेन गुप्त-
सौन्दर्य - सारा मधुरोपभोगा ।
सा पूः - पुरन्ध्री प्रभविष्णु - सेव्या
सद्वर्ण - शीला भुवनाद्भुताऽभूत् ॥ ११६ ॥

अश्वत्थ एकः प्रहरीव तिष्ठन्
द्वारस्य तस्याः प्रमुखस्य पार्श्वे ।
चलैर् दलैर् मर्मर - हस्त - तालैः
प्रवेशिनः स्वागतमस्य चक्रे ॥ ११७ ॥

निम्लोचति ग्रहपतौ सुभगं - भविष्णुर्
नक्तं विशिश्रमिषुरेत्य स पान्थ-शालाम् ।
पर्याण-बन्ध-रहितं च विवर्तितं च
खादैस्तुतोष तुरगं त्वरितं चखादे ॥ ११८ ॥

विधूय वासांसि मलीमसानि
मरुत्प्रणुन्नैः पथि पांसु - पूरैः ।
श्रमार्त्ति - शोथोच्छ्रित - पिण्डकोऽसौ
सन्ध्यामुपासिष्ट कृताऽवगाहः ॥ ११९ ॥

ततः स तान्तो नियते निवेशे
गुप्तं महीभृद् - विहित - व्यवस्थे ।
द्राग् भुक्त - पीतः शयने निलिल्ये
ततोऽपि पूर्वं नयने च निद्रा ॥ १२० ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्याख्ये महाकाव्ये, 'मातृगुप्तव्रज्या-
वर्णनम्' नाम दशमः सर्गः पर्यवसितः ॥



गताङ्कादग्रे—

# त्रिवेणी

डॉ० श्यामदेवः पाराशरः
२२३ - हरिनगरम्, होश्यारपुरम् (पं०)

## ( एकादशः सर्गः )

दीनेभ्यो वैभवं वाऽपि, वितरन् प्रातिभान् गुणान्
दिगम्बरश्च जातोऽसौ, निर्गुणः किं करिष्यति ॥

इति प्रभोः प्रभावे मा, संशयालु मनो भव ।
आस्थां त्वास्थाय लोकार्थं, स्वार्थं चैवं निवेदय— ॥

देहिने देहि नेहाऽन्यदहितं यत् सदेहितम् ।
यच्छ मे वासनाः शम्भो ! यच्छ मा यच्छमेतरत् ॥ १-३ ॥

ब्राह्मे मुहूर्त्ते इह दैवसिकं जपाद्यं
कृत्वा यथाविधि, निषेवित - कल्यवर्तः ।
अध्यास्य वाजि - वरमेकल एव तूर्णं
श्रायं विहाय स तथैव पथि प्रतस्थे ॥ ४ ॥

### युग्मकम्

विहङ्गमानां विरुत - च्छलेन
प्रातस्त्य - मूर्छन्मधु - मङ्गलानि ।
स्वैरैः समीरैः सुरभीकृतानि
स्फीतानि शीतानि च जङ्गलानि ॥

गुल्माकृतो कल्पित - भल्लुकानि
काष्ठेऽपि जाताऽजगर - भ्रमाणि ।
अद्यापि गूढान्यभवंस्तमोभिर्
गाढैर् यथा पातकिनां मनांसि ॥ ५-६ ॥

दीर्घाऽध्वशेष - क्रमणाय भूय
उत्साह - साहस्रमनोकहास् ते ।
सन्धुक्षयामासुरिवाऽदसीयम्
वेल्लल्लता - जालक - तालवृन्तैः ॥ ७ ॥

कपोतिका - पाण्डुक - चाटकैर-
विराव - वाचा व्रजतेऽथ तस्मै ।
वातोल्ललत्काण्ड - करास् तथाऽऽशिषां
राशीनदुः केऽपि महामहीरुहाः ॥ ८ ॥

रत्या क्रमादालपने रतानां
रुतानि गुल्माश्रित - तित्तिरीणाम् ।
तं प्रेरयन् नूनमितोऽनुवारं
तुरङ्गिणं तूर्णतरं प्रयातुम् ॥ ९ ॥

चतुष्पदी - चिह्नित - चूर्णितेलाश्
चतुर्दिशं चीरित - चर्विताऽगाः ।
नागा इतः खर्वित - पर्वतास्ते
पर्यभ्रमन् गर्वित - गर्जिताश्च ॥ १० ॥

बहिर्धरण्यामथवाऽप्यरण्या-
ऽन्तर्वर्ति - देशे यदि वा सरण्याम् ।
पदानि येषां करिणां समन्ताद्
भू - स्वाम्य - मुद्राङ्क - तुलामवापुः ॥ ११ ॥

स जङ्गमं कज्जल - गण्डशैलं
तमाल - कालं कलभोपमानम् ।
ददर्श कोलं[1] शित - दीर्घ - दंष्ट्रं
ग्रासीकृतेन्दुं भुवि राहुमेव ॥ १२ ॥

क्षामैः क्षुधाच्छादित - कुञ्चिताङ्गैः
कोकैः[2] क्वचित् कुब्ज - कुट - क्षुपादौ ।
सद्योऽभियुक्ताः कृकवाकवोऽत्र[3]
त्रस्ताः समस्ता वियति व्यसर्पन् ॥ १३ ॥

युग्मकम्

छायामय - द्रु - प्रचुरातपत्रैर्
वात - स्फुरन्मञ्जर - चारु - चामरैः ।
उच्चावचैः सौरभ - सम्प्रसारै-
रुद्दिष्ट - हर्षैरथ पुष्पवर्षैः ॥

---

१. कोलं=शूकरम् ।
२. कोकैः=वृकैः ।
३. कृकवाकवः=कुक्कुटाः ।

भृङ्गाङ्गनानां मधुमिश्र - गानैः
कन्दैरमन्दैश्च फलैश्च मूलैः ।
इहापि कान्ताः परितो वनान्ताः
सिषेविरे तं करुणावतारम् ॥ १४-१५ ॥

सोऽनेक - रूपैः पशु - पक्षि - पुञ्जैश्
चेष्टा - विशेषैः परितो वृतानि ।
वनानि नैसर्गिक - सौभगानि
पश्यन् जगाहे कतिचिद् दिनानि ॥ १६ ॥

निसर्ग - नम्राः फलिनो द्रुमाश्च
प्रसार्य शाखाऽग्रकरानिवाऽस्य ।
दिग्देश - पल्ली - पुर - संशये सृतिं
संसूचयन्ति स्म ततो यथातथम् ॥ १७ ॥

## कुलकम्

तत्रैकदेशेऽथ स सत्त्वमूर्तिर्
उपेयिवान् साधुजनोटजानि ।
हव्यस्य वासेन च धूम - भूम्ना
प्रागेव दूरादुपलक्षितानि ॥ १८ ॥

रम्भोत्तराह्लादित - बालवत्सै-
रुत्पुच्छयद्भिः कपिला - कदम्बैः ।
दाधाव्यमानैर् मृदु - शाद्वलेषु
स्वैरं चरद्भिश्च समावृतानि ॥ १९ ॥

वीर्य - व्रत - व्यक्त - विशेष - धाम्ना
तारैकताभिः परिगीत - साम्नाम् ।
ओङ्कार - जापैश्च महामुनीनाम्
मैत्रीमयान्यश्रुत - पातकानि ॥ २० ॥

विशङ्क - चारैरथ कृष्णसारैर्
विष्वक् खुरन्यास - पवित्रितानि ।
विशेषतो बिल्व - वटादि - वृक्षैश्
शीतोपनीतानि तपोवनानि ॥ २१ ॥

एकाग्र - वृत्त्या दर - मुद्रिताक्षान्
ध्येयेन चाभेदमुपात्त - चित्तान् ।
आलोकयत् तत्र स योग - निष्ठान्
चिराय पद्मासन - संनिषण्णान् ॥ २२ ॥

स्वाहा - मुखोपांशु - रहस्य - मन्त्रैस्
तपस्विभिस्तत्र सुतर्पितस्य ।
धूमो हुताशस्य वियद् - विसर्पी
स्वर्गस्य मार्गं रचयन् बभासे ॥ २३ ॥

तमांसि तीव्राणि च तेजसाऽयम्
प्रातश्च सायं दवयन् कृशानुः ।
ददाह तेषां हविषा सहैव
प्रीतोऽत्र पापानि पुरातनानि ॥ २४ ॥

प्रशान्त - पञ्चेन्द्रिय - वासनाश्च
पञ्चाग्नि - संसाधन - कर्मणैके ।
दुर्वार - घातान् किमिहाऽदिधक्षन्
पञ्चाऽपि बाणान् मकरध्वजस्य ? ॥ २५ ॥

न्यग्रोधवद् वृद्ध-जटाश्च केचित्
कपाल - रन्ध्र - प्रतिरुद्ध - वाताः ।
अज्ञात - कालात् सुदृढं समाधिं
सिषेविरे स्थावरतामिवाप्ताः ॥ २६ ॥

निरुद्ध - निःशेष - हृषीक - चेष्टाः
शृण्वन्त एके हृदयान्तरिक्षे ।
निरन्तराऽनाहत - नादमेव
तेनैव सायुज्यमिवाऽभ्युपेयुः ॥ २७ ॥

सदा सहस्रार - सुधां स्रवन्तीं
पेपीयमाना यतयोऽपरेऽत्र ।
दिव्याऽनुभावा अथ सिद्धिमन्तो
विरेजिरे निर्जरसः सदेहाः ॥ २८ ॥

मूर्ता शमा श्वास - निरोध - शान्त-
स्वान्ता अहन्ता - रहिता महान्तः ।
क्लेशैः कृशं केऽपि कदर्थयन्तः
कायं पुनन्ति स्म दृशा दिशोऽपि ॥ २९ ॥

वैराग्य - राज्य - स्थितयोऽस्त - तृष्णास्
त्यागात् त्रिलोकीं तृणयन्त एके ।
दिग्वाससो दृष्टि - पथं प्रयाता
अदूरयन् दर्शक - दुष्कृतानि ॥ ३० ॥

मुमुक्षवा केचन वीत - रागाः
संयम्य वल्गाः सकलेन्द्रियाणाम् ।
सात्म्यं प्रयाताः परमेश्वरेण
तस्थुर् यतीन्द्रा वपुषैव भूमौ ॥ ३१ ॥

अभ्यस्त - शीला इति चोर्ध्वरेतसः
एकान्ततो निर्मल - शान्त - चेतसः ।
निर्वापणायेव हि वासनाऽग्नेर्
नैके मुहुः स्नान - परा बभूवुः ॥ ३२ ॥

तुषाग्निचूर्णोत्कर - बालुकासु
तातप्यमाना रवि - रश्मि - कूर्चैः ।
परे प्रसूत्यत्यय[1] - कारणानि
कर्माणि सर्वाण्यमिमार्जिषन् किम् ? ॥ ३३ ॥

बालैर् मुनीनामिह लाल्यमानाः
सम्पाल्यमानास् तृण - धान्य - दानैः ।
कुरङ्ग - शावा विविशुः श्रमार्ता
विशङ्कमङ्केषु तपस्विनीनाम् ॥ ३४ ॥

तपः - प्रभावादिह तापसानाम्
प्रामोचि सत्त्वैस् सहजो विरोधः ।
परस्पर - प्रीति - परम्परायाः
प्रोवाह माङ्गल्यमयी नदीव ॥ ३५ ॥

---

१. प्रसूत्यत्यय — जन्ममरण ।

प्रणम्य तान् लब्ध - शुभोदयाशीः
क्रान्त्वा क्रमात् तानि वन - स्थलानि ।
प्रचण्ड - मार्तण्ड - विवर्ण - पर्णैर्
वृक्षैर् वृतां धन्व - धरां स आपत् ॥ ३६ ॥

तीव्रातपोत्ताप - परिप्लुतानि
तरस्वि - शीतेतर - मारुतानि ।
अम्भो - वियोगात् सिकता - स्थलानि
बभुः प्रतप्तानि च निःश्वसन्ति ॥ ३७ ॥

उपस्थितस्याक्रमितुं तपर्तोः
पथोऽवरोधाय पदे पदेऽपि ।
वृथा विकीर्णान्यत्रनौ वनान्तैर्
बभासिरे तत्र च कण्टकानि ॥ ३८ ॥

प्रतीक्षमाणा विरहे व्रतत्यः
प्राणेश्वरं नीरदमेत्र नूनम् ।
अपेक्षमाणा अथ नीर - सत्त्वं
तत्राऽभ्युपेषुर् बहु नीरसत्वम् ॥ ३९ ॥

पङ्केषु शुष्केषु जलाशयानां
नासन् विदाराः परिदृश्यमानाः ।
तापेन तेषां हृत - तोय - सम्पदाम्
भिन्नान्यभूवन् हृदयानि तानि ॥ ४० ॥

हृतं ह्रदानां हृदयेभ्य आसीद्
यज्जीवनं तद् हरिणा[1] करार्ग्रैः ।
जम्बाल - जाले स्फुटिते समन्तात्
तच्चिह्नभूता विदरा बभूवुः ॥ ४१ ॥

विश्लेष - तप्तस्य हृदोऽब्वगानां
योगादिवाप्तैर् अतिचण्डिमानम् ।
ध्माता इवोच्छ्वास - भरैश्च वाता
अङ्गार - चूर्णान्यभितोऽभ्यवर्षन् ॥ ४२ ॥

---

१. हरिणा=सूर्येण; सिंहेन ।

खे धावनात्तप्त इवोष्णरश्मिर्
उत्पादयन् स्वेद - जलं ललाटे ।
दौर्भाग्य - वर्णान् लिखितान् विधात्रा
महीयसस्तस्य मुहुर् ममार्ज ॥ ४३ ॥

निदाघ - नद्या लहरी - निभाभिर्
व्याप्तेषु देशेषु मरीचिकाभिः ।
विलोक्य विग्नान् कृपणान् कुरङ्गान्
दन्दह्यमानं हृदयं भुवोऽभूत् ॥ ४४ ॥

विरिञ्चिना तस्य महामहिम्नः
परीक्षणायेव सहिष्णुतायाः ।
तद्दोष - लेशानपि वाऽपनेतुम्
मरीचिकास्ता रचिताश्चिताः स्युः ॥ ४५ ॥

स्फुलिङ्ग - सोष्मा सिकता - झरीयम्
विमोहयन्ती पथिकान् प्रसह्य ।
[1]कलाचिकाऽऽच्छादित - नेत्र - युग्मान्
विमार्गगान् हा ! ऽनुपदं चकार ॥ ४६ ॥

स्वेच्छोच्छलन्तीभिरितस्तपर्तोर्
जिह्वाभिरुद्दाम - मरीचिकाभिः ।
त्रस्ता विहस्ताश्च तृषा कुरङ्गाः
प्राधाविषुः क्षिप्रतयाऽग्रतोऽग्रे ॥ ४७ ॥

सङ्कोचिताक्षैः समवेक्ष्यमाणाः
समुल्लसन्त्यो मृगतृष्णिकास्ताः ।
शुष्कैः कुशैर् मण्डलिताः समन्ताद्
वैतान - वैश्वानर - साम्यमीयुः ॥ ४८ ॥

धैर्यं मुहुर् हुङ्कृतिभिर् धयन्त्यस्
त्रासं च तृष्णां परिवर्धयन्त्यः ।
वात्या वपुः पांसुभिरन्धयन्त्यस्
तापेन गात्राणि च रन्धयन्त्यः ॥ ४९ ॥

---

[1] कलाचिका — हिं० कलाई।

मरुन्मृदार्त्ता मुकुलीकृताक्षाः
क्षामाः क्षरत्स्वेद - जला विरूक्षाः ।
पान्था मुहुर् मृष्ट - मुखा वराका
अलेलिहन्तोष्ठ - पुटानि हन्त ! ॥ ५० ॥

वातोर्मयो जीर्ण - महीरुहाणाम्
पारं गता रन्ध्रित - कोटरेभ्यः ।
तापेन तेषां तिलशस्तनुत्यजाम्
उच्छ्वास - फूत्कार - निभा बभासिरे ॥ ५१ ॥

वृक्षा विशुष्का विरला विनर्दिभिर्
वातैर् विधूता न विवेपिरे परम् ।
सूची - सहस्रैरिव भास्करोस्रैर्
वेविध्यमाना व्यथया वराकाः ॥ ५२ ॥

जाता निशाता इव वालुकाभिर्
वाताः कुकूलानल - केलिकाराः ।
तत्राह्वयन् हुङ्कृत - कैतवेन
पान्थानकाण्डेऽधम - होलिकायै ॥ ५३ ॥

वनस्पतीनामिह जीवनासवं
निपीय नूनं निभृतं निदाघः ।
ननर्त मत्तो मुदितश्च मूर्तिमान्
चचक्षिरे यं भुवि चक्रवातम् ॥ ५४ ॥

गोधैरकोरङ्कम - सर्पणेन
मार्गेषु रेखा जनिताश्च पान्थान् ।
व्यकम्पयन् सत्यपि तीव्र - तापे
लेखाः कराला इव मान्त्रिकाणाम् ॥ ५५ ॥

सोल्लास - लासाः कृकलास - वर्गा
म्लानेषु गुल्मेष्वपि चाऽनुवारम् ।
उन्नामितास्या इह तस्थिवांसः
हास्याय किं सूर्यमुपाह्वयन्त ? ॥ ५६ ॥

करीर - कर्कन्धुक - किङ्किराल -
मुख्या द्रुमा: केऽपि तपस्विनोऽत्र ।
स्व - गुप्तये कण्टक - शूल - शस्त्रास्
तस्थुः खरांशु - प्रतियोगि - योधाः ॥ ५७ ॥

नाऽम्भोऽपि लभ्यं भुवि यत्र कोऽर्थंस्
तत्र स्थितेरित्यवधार्य नूनम् ।
क्वापीक्ष्यमाणान् कुश-काश-काण्डान्
मुक्त्वा हरित्त्वं प्रययावलक्ष्यम् ॥ ५८ ॥

चण्डांशुना शोषित - शाद्वलानां
कङ्काल - कल्पानि तृणादिकानि ।
उत्पात्य दूरं दिवि चक्रवातैर्
नामावशेषाणि कृतानि तानि ॥ ५९ ॥

पतत्रिणोऽप्राप्य पयः पृथिव्याम्
अपावृतांश्चञ्चु - पुटान् वहन्तः ।
सरो विदित्वा दिवमेव दीना
आशा - विहीना असकृत् प्रडीनाः ॥ ६० ॥

स्तब्धर्जु - पक्षाः सुचिराय चिल्लाः
सङ्कल्प - शक्त्येव च डीयमानाः ।
छाया - प्रदानातप - वारणैर् ध्रुवं
तत्र द्रुमादीन् जुगुपुर् विनाशात् ॥ ६१ ॥

प्रफुल्ल - पुष्प - प्रकरैः पलाशैः
क्रोडीकृतैः पुष्कल - पाटलिम्ना ।
व्यक्तं स्थली क्वाऽप्यतनोत् तपतो
रागातिरेकं निचितं गताब्दात् ॥ ६२ ॥

"कामं लतादीन् परितापयाऽर्क !
न मेऽपकर्तुं त्वमलन्तमोऽसि" ।
इतीव चाऽर्कः कुसुमच्छलेन
हसन्निवं तंस खलीचकार ॥ ६३ ॥

ग्रीष्मोष्मणा भीष्मतमेन तप्तो
ऽश्वत्थो मरुद् - धूत - दलैः पथिस्थः ।
स्वं वीजयन् नूनमिहाऽनुकम्पी
शीतीचकाराश्रित - पान्थ - सार्थान् ॥ ६४ ॥

गोपालिकाभिश्च स बालिकाभिर्
विशेष - वेषः कुतुकाकुलाभिः ।
सदण्ड - हस्ताभिरवेक्ष्यमाणः
प्रीत्योद्धृतं प्रेङ्खयति स्म पाणिम् ॥ ६५ ॥

वैविक्त्यमेकोऽपि च हेषयैव
सम्पूरयन्नप्रतिमो दृढात्मा ।
उपेक्षमाणो विपदः क्षमावान्
समुल्ललङ्घे विकटां स्थलीं ताम् ॥ ६६ ॥

मकुण्ठ - वज्रान्नमुखैः प्रशस्यैः
शस्यैर् लसच्छ्यामलिमाभिरामान् ।
ग्रामान् जनैः स्मेर - मुखैः सरण्यां
सौराज्य - हेतोः सुखितान् स मेने ॥ ६७ ॥

न क्षाम - कुक्षिर् न च कोऽपि भिक्षुः
सुभिक्ष - हेतोः समलक्षि तेन ।
मेलोत्सवाश्चैव सवाः समन्तात्
सौमङ्गलीमुज्जुघुषुः समृद्धिम् ॥ ६८ ॥

मोमुद्यमानो मिलिताऽध्वगानाम्
प्रीति - प्लुतैः पेशल - वाग्विलासैः ।
समालुलोके सरितं सृतौ स
संसूचितां सीकरिभिः समीरैः ॥ ६९ ॥

सासीद् धुनी[1] धन्व[2] - धरा - स्थलस्य
सन्ताप - सन्तान - समाप्ति - सीमा ।
व्यथा - कथा - काव्य - निबन्धनान्ते
यथा कृता पूर्ण - विराम - रेखा ॥ ७० ॥

---

१. धुनी = नदी ।  २. धन्व-धरा = मरुभूमिः ।

वल्गद् - बृहद् - वीचि - विघात - घोषैः
साऽऽमन्त्रयन्तीव विदूरतोऽपि ।
"आयाहि च स्नाहि पिबामृतं चे"—
त्येवं तमभ्यागतमाजुहाव ।। ७१ ।।

पादाब्जयोः पूज्यतमस्य तस्य
फेन - स्मिताऽसौ मुदिताऽऽतिथेयी ।
कूलोर्ध्वमागामि - तरङ्ग - भङ्ग -
हस्तैः परामर्शमिवाऽऽचकाङ्क्ष ।। ७२ ।।

नौ - नेतृभिः पीवर - धीवरैश्च
गायद्भिरालोडित - मध्यधारा ।
साऽप्यार्द्र - शीतोर्मि - रव - प्रगीतैः
स्वेदं च खेदं च जहार तस्य ।। ७३ ।।

नीरे प्रतीरे गगने च तुष्टाः
क्रौञ्चादयः पक्षि - गणाः क्वणन्तः ।
सस्यादि - सम्पत्ति - समर्धकायास्
तस्या यशांस्येव जगुस्तटिन्याः ।। ७४ ।।

स सत्त्व - मूर्तिस् समुपेत्य तत्र
न्यरूपयन्निर्मलतां नयन्ति ।
वपूंषि वासांसि तथोपकूलम्
मनांसि सन्ध्यातृ - जनैः कियद्भिः ।। ७५ ।।

मन्द - प्रवाहेऽम्भसि चोरुदघ्ने
परस्पर - प्रोक्षण - पण्डितानि ।
युग्मानि यूनामिह शीतिमानं
निन्युः परेषामपि लोचनानि ।। ७६ ।।

स्नाने रतानां वरवर्णिनीनां
सिक्तांशुकाऽऽसङ्ग - विलोभनीयम् ।
मुहुस्तरङ्गा जघनं स्पृशन्तस्
तरङ्गयन्ति स्म मनो न केषाम् ? ।। ७७ ।।

विस्रस्त - गोप्याऽङ्गपटाऽत्र काचिद्
नितम्बिनीन्दीवर - सुन्दराक्षी ।
निरञ्जनत्वं पयसाऽभ्युपेता
श्वेताऽभवत् प्रेक्षक - पूजनीया ॥ ७८ ॥

लज्जावती स्वस्तिक - हस्त - गूढ -
रूढ - स्तनी भूषित - यौवनैका ।
कूले कुमारैर् ह्रियमाणमत्र
बलादिव स्वं हृदयं रुरोध ॥ ७९ ॥

लीलाऽवसेकेन जलाञ्जलीनां
तन्नेत्र - युग्मं मदिराऽरुणं सत् ।
रागस्य बीजान्यवपन्न केषां
कटाक्षितानां हृदय - स्थलीषु ? ॥ ८० ॥

स्नानावसाने शिथिलास्तरुण्याः
केशा गलत्तोयकणाः प्रवाहे ।
"अलङ्क्रिया हा ! ऽद्य विनाशिता नः"
इतीव तेऽश्रूण्यकिरन्नभीक्ष्णम् ॥ ८१ ॥

मज्जद् - वधूनामवलोक्य केश-
पुष्पाण्यपोढानि[1] तरङ्ग - तोयैः ।
नीतानि मा भूम तथैव चेति
गात्रेष्वसज्जन् वसनानि तासाम् ॥ ८२ ॥

वातेरितत्वात् प्रबलः प्रवाहो
व्रजन् विलासादधरोत्तरत्वम् ।
स्पृशंश्च यासां हृदयानि चक्रे
प्रेङ्खोलिताऽन्तःकरणान् कुमारान् ॥ ८३ ॥

स श्रोत्र - विश्रान्त - विलोचनाभिः
साची - कृतेन्दुप्रतिमाननाभिः ।
ताभिः पुनस्तत्र कटाक्षितोऽपि सन्
केनाऽपि भावेन वशो न पस्पृशे ॥ ८४ ॥

---

१. अपोढानि=अपहृतानि ।

मायामयान् सोऽत्र वधू - विलासान्
माराज्ञयैवाऽङ्कुरितांश्च पश्यन् ।
मेने दृढात्मा सुतरां तटस्थो
वैरिञ्चमेतं रचना - प्रपञ्चम् ॥ ८५ ॥

अत्रान्तरेऽसौ सहसाऽबलायाः
शुश्राव कूलं निकषा विलापम्— ।
"हा ! स्रोतसाऽयं ह्रियते सुतो मे
लोका ! इमं रक्षत रक्षते"ति ॥ ८६ ॥

निशम्य तद् वज्र - निपात - कल्पं
सोढुं परातिं सुतरामनीशः ।
भूताऽनुकम्पी द्रुतमेत्य तावद्
वेगिन्यपप्तत् सलिले सवासाः ॥ ८७ ॥

दया - नदीनस्य च दीन - बन्धोः
संस्पर्शमेत्याऽस्य पुनः सरित् सा ।
अवेष्टयद् वीचि - भुजान्तरे तम्
भार्येव नाथं सुचिरादुपेतम् ॥ ८८ ॥

स प्राहवत् तत्र तरंस्तरस्वी
जग्राह बालं शनकैर् ब्रुडन्तम् ।
श्वसन् प्रसह्य न्यगिलज्जलं यः
स्वयं जलेनापि निगीर्यमाणः ॥ ८९ ॥

स्फुरद्भुजो वाऽम्भसि डीयमानः
पिबन् वमंश्चापि पयांसि भूयः ।
फूत्कारिणाऽसौ पुन - "राप आप"
इत्येव वक्त्रेण चकार शब्दम् ॥ ९० ॥

स पाणि - पादेन तरंस्तटिन्या
निष्कालयामास कुमारमोघात् ।
ममज्ज मातुर् य उपागतायाः
पुनः प्रमोदाश्रुमये प्रवाहे ॥ ९१ ॥

प्राय। पुनः प्राणयितं प्रजातम्
माताऽथ जातं परिरभ्य गाढम् ।
चुचुम्ब भूयश्चिबुकं स्पृशन्ती
दिदृक्षुभिर् मण्डलितोल्लसद्भिः ॥ ६२ ॥

कृतज्ञतां ज्ञापयितुं बभूव
नालन्तमा गद्गद - वाङ् मुदा सा ।
ऐक्षिष्ट तु [1]त्राटकिनीव तावत्
त्रातारमेतं सकपोतहस्ता ॥ ६३ ॥

पराक्रमं साहसिकस्य तस्य
निरूप्य तं कौतुकिनः समस्ताः ।
शश्लाघिरेऽभ्येत्य मिथोऽथ साक्षाद्
उच्चावचैः सप्रणयैर् वचोभिः— ॥ ६४ ॥

"न सन्तरन्ति स्वयमेव सन्तः
परं परांश्चापि हि तारयन्ति" ।
आभाणकोऽयं निरवर्णि वीर-
वर्येण साक्षादभिनीयमानः ॥ ६५ ॥

एनं जलादुद्धरता कुमारम्
अक्लीब - चित्तेन महात्मनाऽयम् ।
संसार - सिन्धोस्तरणाय पूर्वा-
ऽभ्यासः कृतोऽनेन विभाति पुण्यः ॥ ६६ ॥

बालस्य वाढं व्यसनं जिहीर्षुः
स्यादेष देवस् त्रिदिवादुपेतः ।
सावर्तं ओघे पततो यदस्य
भीतिर् न वा जीवित-गृध्नुताऽभूत् ॥ ६७ ॥

वपुष्यनास्था विधिना विपन्नान्
प्राण - व्ययेनापि रिरक्षिषन्त। ।
प्रयान्ति गुण्यैरिह पूर्व - पुण्यैः
फलोन्मुखैर् लोचन - गोचरत्वम् ॥ ६८ ॥

---

१. त्राटकिनी = हिं० टकटकी लगा कर ।

ईदृक् - क्षमाशील - मनुष्य - रत्नैः
शुचीकृता सागर - मेखलेयम् ।
क्षमेति लोके च वसुन्धरेति
बिभर्ति संज्ञा - द्वितयं यथार्थम् ॥ ९९ ॥

प्रास्तं न गात्रं तृण - हेलयौघे
प्रक्षालितो नूनमघौघ एव ।
गोपायितोऽनेन न बाल एष
संवर्धितं विक्रम - मानवत्त्वम् ॥ १०० ॥

केनाऽप्यपृष्ट - व्यपदेश - देशः
स्यादेष को नाम विशेष - वेशः ।
न सत्कृतोऽस्माभिरहो ! कृतघ्नैर्
अभ्यागतोऽप्याकुलितैरिवेति" ॥ १०१ ॥

मधु - च्युतोऽपि स्तुति - सम्भृतत्वा-
च्छृण्वन् गिरस्ता विगत - व्यपेक्षः ।
वेशान्तरं द्राक् परिधाय यातो
यथागतं लोक - नमस्कृतोऽसौ ॥ १०२ ॥

कस्तूरिका - सार - धरः कुरङ्ग
इतस्ततो वा क्वचिदभ्युपैतु ।
लोकोत्तराऽमन्द - मदोत्थ - मोदैः
करोत्यसौ मेदुरितान् दिगन्तान् ॥ १०३ ॥

कूलङ्कषा - काल - गलान्निवृत्तम्
माता समादाय सुतं प्रयाता ।
आशंसमानेति मुहुर् "विधाता
शुभाय तस्यास्त्विह योऽस्य पाता" ॥ १०४ ॥

लोको यथास्वं सकलोऽप्यगाच्च
ककुप्सु कीर्त्या सह किंवदन्ती ।
तीरं तटिन्या अथ तूर्णमम्भः
स्तम्भोऽभवत् साहस - कर्मणोऽस्य ॥ १०५ ॥

दैन्यात् तामरसानि मुद्रित - मुखान्यग्रे ततश्चाग्रतो
मध्वालेहन - लोलुपैरलि - कुलैर् वाचालतामानयन् ।
विघ्नौघान् कर-कूर्चकैरपहरन् भास्वान् दिनाऽध्वोदितान्
आशाः पाटलिमोपलेप - मुदिताः कुर्वन्नसौ तत्वरे ॥ १०६ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-
विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण संदृब्धे
'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'कान्तार - क्रमणम्'
नाम एकादशः सर्गः समाप्तः ॥



# द्वादशः सर्गः

मुक्त्वा नाथ ! कृपालुतां कृपणतां यातोऽसि चेत् कामद !
नो दीनाय च दित्ससेऽभिलषितान्यद्याऽप्यपात्राय मे ।
तन्मा देहि, गृहाण सर्वमपि तत् सम्पन्निधानोपमम्
भूयो जन्म-जरार्ति-कारणमघं मत्तश्चिरात् सञ्चितम् ॥ १ ॥

सर्वेश्वरादेश - कृत - व्यवस्थे
सर्वत्र सम्पूर्ण - सुखे निवेशे ।
विश्रम्य विश्रम्य चलन् स मार्गे
नो वास्तवत्वं विदुरोऽप्यवेदीत् ॥ २ ॥

लोकैरितो वाऽप्यमुतोऽभ्युपेतैः
स कल्पितातिथ्य इति प्रसीदन् ।
विवाह - वेलासु वरो यथाऽन्यैर्
बभूव वर्त्मन्यपि वन्दनीयः ॥ ३ ॥

कौशल्य - शंसीनि पुनः पदव्याम्
पश्यन् निमित्तानि गभीर - चेताः ।
स्व - धर्मं इत्येव स मातृगुप्त-
श्चचाल वैकल्पिक - भाव - लुप्तः ॥ ४ ॥

क्वचित् स - तानेन तृण - प्रदेशे
पार्श्वे सताऽनेन स बालिकानाम् ।
गानेन वेणु - स्वर - सङ्गतेन
विनोदितो मन्थरिताऽश्व आसीत् ॥ ५ ॥

वीची - परामर्श - सुशीत - वात -
सूत्कार - फूत्कार - परम्पराभिः ।
उड्डाययन्ती त्रिविधाऽभितापम्
आलोकि तेनाऽथ पुरः स्रवन्ती ॥ ६ ॥

## युग्मकम्

दयामयीं दोष - विषं परेषाम्
पीत्वा प्रयातामिह कृष्णिमानम् ।
पितुः खराणां सवितुः कराणां
न स्पर्श - दाहात्तु मलीमसाभाम् ॥ ७ ॥

उच्च - प्रदेशाद् भुजगीमिवाऽधो
विसर्पिणीं दर्शन - तर्पिणीं च ।
त्वङ्गत्तरङ्गां तरणेस्तनूजां
लङ्घिष्यमाणां स ततस्ततार ॥ ८ ॥

सा स्नायिनां वाऽमृत - पायिनां द्राग्
उन्मृष्ट - बाह्यान्तर - कश्मलानाम् ।
यमस्य यामीत्युरु - नाद - वाचा
व्यपोहति स्थास्नु भयं मरिम्णः ॥ ९ ॥

विभिन्न - वेषानथ वाग् - विशेषान्
नाना - निवेशान् प्रचुरान् प्रदेशान् ।
पश्चात् परित्यज्य स च क्रमेण
सरिद् - वरां जह्नुसुतामुपैषीत् ॥ १० ॥

नारायणीया करुणेव लीना
स्रोतस्विनी सा वसुधाऽवतीर्णा ।
दृप्तं कलिं दूरत एव दिक्षु
व्यद्रावयद् वीचि - विराव - वाचा ॥ ११ ॥

अमोघ - मन्त्रोपमितस् तदीयः
शब्दः श्रुतिभ्यां निभृतं निविष्टः ।
संस्कार - रूपेण हृदि स्थितानि
जहार पापानि पुरातनानि ॥ १२ ॥

दिदृक्षयाऽस्याश्चिर - काङ्क्षितायाः
स तत्वरे पुण्यतरस् तुरङ्गी ।
पयच्छब्दमाकर्ण्य विलम्बितायाः
मातुर् न वत्सः कथमुत्सुकः स्यात् ॥ १३ ॥

औत्कण्ठ्य - सम्प्रेरणयेव तूर्णम्
मनस्तु सङ्कल्प - तुरङ्ग - रूढम् ।
ततोऽपि पूर्वं समुपेत्य तस्याश्
चकार लीला लहरीषु लीनम् ॥ १४ ॥

फलप्रदानोन्मुख - पुण्य - पुञ्जः
क्रमात् पुरस्तादुपतस्थुषीं ताम् ।
लोलोच्यमानो नतमां ततर्ष
पयःपिपासुः शिशुको यथाऽम्बाम् ॥ १५ ॥

कर्पूर - वर्त्येव नितान्तमाराद्
उपेतया सत्वरमेतयाऽस्य ।
प्लुष्टे ज्वलन्मारव - मारुतेन
सशीत - नीरे नयने अभूताम् ॥ १६ ॥

ततस्तुरङ्गादवतीर्य पीत -
सुशीत - तोयस्य तटेऽस्य सद्यः ।
श्रद्धैव रोमाञ्च - मिषा शरीरे
सहस्रधाऽद्याङ्कुरिता विरेजे ॥ १७ ॥

विरम्य किञ्चिद् विहिताऽवगाहो
बाह्यान्तरामृष्ट - मलस् तदाऽसौ ।
अजायताऽनागत - राजलक्ष्म्याः
पात्रं पवित्रं भरणाय नूनम् ॥ १८ ॥

युग्मकम्

वीतोपमानं महिमानमस्या
अनुस्मरन्नेवमतर्कयत् सः— ।
"शैवं जटाजूटमवश्यमेषा
संस्पृश्य दिव्या सरिदभ्युपेता ॥

तत्र स्थितं तं तिलशो हिमांशुं
घृष्ट्वा महीमण्डलमेति यस्मात् ।
शीतं सुधा - सोदरमेतदीयं
स्वादीय एवं सलिलं प्रपन्नम्" ॥ १९-२० ॥

तरङ्गिणीं वैदशिकीं ततस्तां
तीर्त्वा ततः[1] सम्प्रति जग्मिवान् सः।
पाणी पुटीकृत्य निमील्य नेत्रे
तुष्टाव निष्ठा - विनतोत्तमाङ्गः— ॥ २१ ॥

अये ! मातर्गङ्गे ! वरद - करभङ्गे ! सकरुणे !
सरोषं मेऽतोषं परमपि च दोषं गणय मा।
त्वदीयोऽहं दासः कलुष - कुल - वासः स्थिरतया
कृपां कुर्या दीने जगति गति - हीने च विगुणे ॥ २२ ॥

अहं दूरोद्देशात् क्षितिपति - निदेशादुपगतः
रहो-वार्ताहारोऽमित-सरणि-चारोऽम्ब ! पथिकः।
निगाद्यं नो खाद्यं न किमपि सुमाद्यं च सविधे
कथं कार्या सेवा कथय विपिने वा तव मया ॥ २३ ॥

अहं तुच्छः प्राणीयमपि मम वाणी न सबला
परन्त्वद्धा श्रद्धा हृदि मम निबद्धाऽमृतमयि !।
असावेको दायो जननि ! गतमायोऽत्र सुलभस्
त्वया ज्ञेयोऽनल्पो यदपि तृण - कल्पोऽपर-दृशा ॥ २४ ॥

अये जह्नोः कन्ये ! वृजिन - भर - जन्ये भवभये
दिवारात्रं लुप्तं विषय - सुख - सुप्तं च वरदे !।
नयन्ती चैतन्यं तृण - तुलमधन्यं सपदि मां
त्रिकालं कल्याणं वितर गरिमाणं च हृदये ॥ २५ ॥

नराणां सोपानं त्रिदिव - पथयानं च विदितं
तव स्रोतः स्वापं त्रिविधमपि तापं परिहरेत्।
दुरन्तां तां कृष्णां शमयतु च तृष्णां मम यतो
नितान्तं मुग्धस्याऽस्त्वयि ! जनि ! नमस्याऽद्य सफला ॥ २६ ॥

सुधासारा धारा त्रिभुवन - विहारा मृदु - गतिस्
त्वकं मुक्ता - माला प्रतिपद - विशालाऽमल - जला।
तवैकोऽत्र प्रान्तो हरिचरण - वान्तो दिवि परः
निबध्नाति स्वर्ग्यान् य इह च नृ-वर्ग्यानहह ! मिथः ॥ २७ ॥

१. ततः—तस्मात् स्थानात्।

तव स्पर्शात् पापा अपि शमित - शापाः समभवन्
भवन्त्यन्ये मर्त्या अपि न किममर्त्या द्रवमयि ! ।
चिरात् क्लेशाक्रान्तोऽविरत-पथ-तान्तोऽस्मि शुभदे !
मनो दोषे मा धा दवय मम बाधा अनुपदम् ॥ २८ ॥

कुकर्मोद्धारार्थं भुवि सुकृति - सार्थं सुखयितुं
सुर - श्रेणी - नम्याऽप्यखिल - जन - गम्या त्वमभवः ।
अतो मे वैगुण्यं मनसिजमपुण्यं हरतु ते
तटैरूर्मि - क्रीडा द्रुत - दलित - पीडाऽऽश्रयजुषाम् ॥ २९ ॥

विलासास्तारङ्गास् तव वदन - भङ्गा इव तथा
समन्ताशीर्वादा 'गद - गद' - निनादाः श्रुतवताम् ।
समीरैरानीता नभसि च परीता जल - कणा
पुनन्तीहाऽशेषान् अगणित - विशेषान् उपगतान् ॥ ३० ॥

वपुष्मानोङ्कारो लहरिषु च तारोदित - रवे
श्रुतीनामुद्घोषो हृत - हृदय - दोषोऽयमपि ते ।
कृताऽभद्रोद्धाराऽमर - तटिनि ! धारा द्रुत - दया
भ्रमश्चाऽसौ पूरेऽपहरतु विदूरे भ्रम - मतिम् ॥ ३१ ॥

अपास्येमं स्तोकं विभवमपि लोकं न तु चिराद्
उपायातस्याऽन्तेऽमल - मुकुर - कान्ते ! तनुमुचः ।
पवित्रेऽथो तीरेऽमृत - सुहृदि नीरे स्थितवतस्
त्वदीयोऽयं फेनो मम निचितमेनो व्यपनयेत्" ॥ ३२ ॥

निष्ठा - निमित्तोदित - नेत्र - नीरैर्
उपासिताऽसौ उपकल्पिताऽर्घ्यैः ।
तोष्टूयमानोऽपि चिराय चैवं
सान्निध्यमस्या न किलाऽमुमुक्षत् ॥ ३३ ॥

परं प्रणुन्नः प्रसभं स पृष्ठे
पार्थाज्ञया पादविकः प्रतस्थे ।
न सत्यसन्धः सुभगम्भविष्णुः
कर्तव्य - निष्ठा - पदवीं जहाति ॥ ३४ ॥

द्वित्रान् निवेशान् स ततो विलङ्घ्य
कूलङ्कषाया उपकूलमापत् ।
श्रुत्वैव यस्या 'यमुनेत्यभिख्याम्
भवन्ति पुण्याभिमुखा पुमांसः ॥ ३५ ॥

केलि - स्थलीं कंसकृषः कृपालोर्
विनिद्रयन्ती वसुधां व्रजस्य ।
प्रक्षालितैर् या कलुषैः परेषां
शङ्के स्वयं श्यामलतामुपेता ॥ ३६ ॥

कृष्णस्य नीलोत्पल - कान्ति - पाद-
संस्पर्शनात् तन्मयतामुपेत्य ।
[1]धारापि यस्या अविभिन्न - वर्णा
राधेव कृष्णत्वमुपाजगाम ॥ ३७ ॥

कलिन्द - कन्या करुणाकुलैषा
सौभिक्ष्य - सन्मङ्गल - सम्प्रसारैर् ।
देशस्य दारिद्र्यमपास्य दूरं
क्लेशान् समादाय सहैव याति ॥ ३८ ॥

प्रिये प्रयाते द्विषतां दमाय
वियोगिनीनां व्रज - वल्लवीनाम् ।
वाष्पाम्बुभिः कज्जलितैः प्रतप्तैः
प्लुष्टेव कृष्णत्वमुपैत् परं या ॥ ३९ ॥

ततस्तरण्या तरणेस्तनूजां
नमस्कृतां प्रागपि दूर - देशात् ।
तीर्त्वा स तावत् त्वरितं तुरङ्गी
तपोवनानां ततिमाविवेश ॥ ४० ॥

व्याप्ताऽत्र धात्री वट - पिप्पलाद्यैर्
यज्ञाङ्गभूतैश्च कुशैः पलाशैः ।
गव्याज्य - हव्यस्य च धूम - भूम्ना
वितान - वेदी विपुला व्यलोकि ॥ ४१ ॥

---

१. धारा-राधा-पदयोः अभिन्न-वर्णता = तुल्याक्षरता, पक्षे रङ्गस्याभिन्नता ।

गीतानि सामानि पदे पदेऽत्र
दिग्दैवतान्यप्यनुरञ्जयन्ति ।
कर्णौ पुटीकृत्य पुरः कुरङ्गैः
पेपीयमानानि पिपासितास्यैः ॥ ४२ ॥

समन्ततः सद्मसु यायजूकैर्
यज्ञांश - भोगाय निमन्त्र्यमाणाः ।
देवा न निर्णेतुमलं बभूवुः—
"किं धाम यायाम च किं च ने"ति ॥ ४३ ॥

कृषीवलैः पुत्रक - निर्विशेषम्
पुष्टाः ककुद्मन्त इहाऽभितोऽपि ।
गुल्मान् विषाणैरुदपाटयन् प्राक्
खुरैः खनन्तो बल - गर्विता गाम् ॥ ४४ ॥

केदार - कोणेष्विह पूलितानि
विन्यस्य सस्यानि खल - स्थलीषु ।
सौभाग्य - वर्णानिव लाङ्गलाग्रैर्
इला - ललाटे लिलिखुः कृषाणाः ॥ ४५ ॥

करेणु - कल्पाः प्रवितत्य पृष्ठ-
टङ्गे चलन्त्यो मृदु गोचरेषु ।
गावो घटोध्न्यो घनसार - गौरा
नितम्बिनी - विभ्रममन्वकार्षुः ॥ ४६ ॥

यथाक्रमं प्राप स तं प्रदेशं
यः पुण्यतायाः कुरुतेऽपदेशम् ।
यत्राहवे कौरव - पाण्डवीये
देशस्य दौर्भाग्यमभूद् विजेतृ ॥ ४७ ॥

शौर्यं महा सौर्यमिवाऽस्तमैषीत्
वैधव्यमापत् कृपणं बधूत्वम् ।
योधाऽस्त्र - धारास्ववहत् समन्तात्
सैमन्तिकाऽलक्तक - शोणिमाऽपि ॥ ४८ ॥

स्त्री - बाल - वृद्धाऽत्र - सरित्स्वमज्जद्
देशस्य दैवं गरिमा च गर्वः ।
चितासु पश्चाद् रचितास्वभूवन्
भस्मावशेषाणि च यौवनानि ॥ ४९ ॥

क्षमाऽधुनाऽप्यत्र 'गत - क्षमा'ऽऽख्या
हा ! शोणितैः शूर - शिरोमणीनाम् ।
अभ्युक्षिता नोज्झति शोणिमानम्
प्रक्षाल्यमानाऽपि पुनः पयोदैः ॥ ५० ॥

पाराशरेणैव महापुराणे
'गीते'ति नाम्ना कृत - सन्निवेशाः ।
पुरा मुकुन्दस्य मखारविन्दात्
सस्यन्दिरेऽत्रैव मधूपदेशाः ॥ ५१ ॥

क्षेत्रेऽत्र स ब्रह्म - सरोवरादौ
श्रद्धातिरेकाद् विहिताऽवगाहः ।
प्रणाम - पुष्प - प्रकर - प्रदानैः
स्थाण्वीश्वरं साधुतया सिषेवे ॥ ५२ ॥

क्रान्त्वा कियद्दूरमथो कृतात्मा
सरस्वतीमीक्षितवान् स्रवन्तीम् ।
याऽसौ प्रकाशा क्वचिदप्रकाशा
ततान लीलां चिलिमीलिकायाः ॥ ५३ ॥

पिण्डैः पयोभिश्च परैः प्रदानैः
पेप्रीयमाणाः प्रणयि - प्रदत्तैः ।
पृथूदकेऽत्र प्रतिपालयन्तः
प्रेताः परं पुण्य - पदं प्रयान्ति ॥ ५४ ॥

चिताग्नि - तापैः परिबृंहितेव
प्रेतस्य पीडा - प्रचुरा पिपासा ।
श्रद्धा - विशुद्धैः शिशिरैश्च तोयैः
यत्नैः प्रदीप्ते प्रशमं प्रयाति ॥ ५५ ॥

सरस्वतीव द्रवतामुपेता
तरस्वती प्रावृषि केवलं या ।
न लुप्यते किन्तु पदे पदे सा
प्रेतान् दिवि प्रापयितुं प्रयाति ॥ ५६ ॥

साहित्य - सिन्धौ कृत - मज्जनानाम्
विद्वज्जनानां रसनाऽग्र - रङ्गे ।
सोल्लास - लासैर् मुखरीचकार
दिशो दशाऽन्या च सरस्वतीह ॥ ५७ ॥

सुरापगा - सूर्यसुता - सरस्वती -
तोयं त्रयी पुण्य - पयस्विनीनाम् ।
क्षोणी - तले भात्युदिता 'त्रिवेणी'
बद्धा वधूटी - वपुषीव वेणी ॥ ५८ ॥

कलेर् विलासात् कलुषं कलङ्कैर्
इलातलं निर्मलतां नयन्त्यः ।
आलोक्य कुल्याः स इमाः सुधन्यो
वीतापदं स्वं कृतिनं च मेने ॥ ५९ ॥

द्वित्रेष्वयासीत् स ततो दिनेषु
पुरोत्तमं [1]"मालवराजकोटम्" ।
वीर्यावदानानि निजेन नाम्ना
व्यक्तं वदद् विक्रम - पूर्वजानाम् ॥ ६० ॥

समाविशन्नेव स तस्य सीमां
तूर्णं तुरङ्गादवरुह्य तावत् ।
दण्डायमानः प्रणिपत्य पूताम्
प्रवीर - पादैः पृथिवीं चुचुम्ब ॥ ६१ ॥

स आदितोऽद्यावधि भूमिभर्तुः
प्रच्छन्न - रूपेण निदेश - निघ्नैः ।
सञ्चार्यमाणोऽध्वनि पान्थ - वेषैः
रारक्ष्यते स्म प्रणिधि - प्रधानैः ॥ ६२ ॥

१. मालवराजकोट (वर्तमान मालेरकोटला) ।

ततः स वामेतर - मार्ग - यायी
पृथुप्रथं प्राप पुरं [1]"सुनेत्रम्'।
व्याप्तस्य दिक्कीर्तित - शौर्यशीलैर्
देशस्य यन्मौलि - मणिर् बभूव ॥ ६३ ॥

समन्ततो वर्त्मनि चादिगन्ताद्
ददर्श गच्छन् क्लिशितेक्षणोऽसौ ।
कैदारिके वात - विधूत - धान्ये
समुच्छलन्तं हरिताऽम्बुराशिम् ॥ ६४ ॥

चकाशिरे क्षेत्र - परम्परासु
सस्यानि सर्वत्र विकासभाञ्जि ।
समीरणोद्धूत - शिखानि साकं
नृत्यन्ति मन्ये मुदितैः कृषाणैः ॥ ६५ ॥

बलिं हरन्तः स्वयमेव काकाः
कीराश्च चञ्चूद्धृत - धान्य - शीर्षाः ।
अकालमागामुकमत्र नाकाद्
नूनं - न्यषेधंश्चल - पक्ष - हस्तैः ॥ ६६ ॥

विश्रामहेतोर् वट - पिप्पलादेः
स्थले निविष्टैः पथिकैश्च सोऽन्यैः ।
उद्गीयमानानि यशांसि भर्तुः
पिबन् श्रुतिभ्यां नतरां ततर्प ॥ ६७ ॥

क्षेत्रेषु साक्षादिव सस्य - लक्ष्मीं
संलक्ष्यमाणां सकलेऽपि वर्षे ।
इक्षु - क्षुपाश्चामरतामुपेतैः
संवीजयामासुरिवाग्रपर्णैः ॥ ६८ ॥

न प्रादुरासीन्मनसि प्रमादः
कस्यापि नालोकि मुखेऽवसादः ।
अश्रावि सद्मस्वपि सिंहनादः
क्वचिद् विवादेष्वपि नाऽप्रसादः ॥ ६९ ॥

१. सुनेत्र — "लुधियाना" — पार्श्वे 'सुनेत' इत्याख्यो ग्रामः ।

तूणीर - गर्भेष्विह [1]मार्गणास्तु
यतस्ततो वा सुलभा बभूवुः ।
समृद्धि - सम्पन्नतया समन्ता-
न्न मार्गणा दृक्पथमभ्युपैषुः ॥ ७० ॥

अभ्यस्यतेतस्तरवारि - घातः
परत्र लक्ष्यं प्रति बाण - पातः ।
इतः समालोक्यत भल्ल - युद्धं
ततस्तथाऽऽयोज्यत मल्ल - युद्धम् ॥ ७१ ॥

आविध्य बाणैश्चपलं शरव्यम्
अस्मारयत् कोऽपि किलैकलव्यम् ।
दण्डी समाश्रित्य गतं च नव्यं
घातं विरुद्धे विदधेऽत्र भव्यम् ॥ ७२ ॥

तुरङ्गिणां क्वापि मृषा रणानां
धनुष्मतां चाश्रित - वारणानाम् ।
दृश्यानि शौर्यं परिबृंहयन्ति
स्पृश्यान्यपूर्वाणि मनोभिरासन् ॥ ७३ ॥

वायो वियद् - वारि - वसुन्धरादौ
वृद्धेषु वामास्वपि बालकेषु ।
व्यलोक्यताऽस्मिन् विषये विचित्रे
वाढं विभुर् विक्रम एव विष्वक् ॥ ७४ ॥

कृपाणिका - कार्मुक - काण्ड - कुन्तैर्
मृद् - दारु - धात्वादि - विनिर्मिताङ्गैः ।
रहो रणे काल्पनिके रता वै
बाला मिथः क्रीडनकैरखेलन् । ७५ ॥

तुरङ्ग - पादातिक - पीलु[2] - मुख्याम्
आश्रित्य रम्यां चतुरङ्ग - खेलाम् ।
वीरा धनुर्वेद - विदो वयःस्थाः
व्यत्यायायन्नत्र विनोद - वेलाम् ॥ ७६ ॥

---

१. मार्गणा = शराः ; भिक्षुकाः । २. पीलुः = हस्ती ।

वीर्याऽवदानैरथ वृद्ध - वर्गा
विविक्ततायां वट - वेदिकासु ।
यूनः समेतान् पुलक - प्रफुल्ल-
स्फुरद् - भुजाश्चक्रुरुदीर्ण - शौर्यान् ॥ ७७ ॥

"वर्तिष्यते वीर - वरूथनाथो
विमर्दनो विद्विषतां सुतो मे" ।
इत्यादि - [1]लोलीभिरिह स्व - बालान्
अलालयन् स्वापमुपेयुषोऽम्बाः ॥ ७८ ॥

आक्रामका अत्र समागता ये
नूनं गताश्चाऽपि बलावलिप्ताः ।
प्रत्यर्थिनस्ते न गताः स्व - गेहं
यमस्य गेहं तु विहाय देहम् ॥ ७९ ॥

प्रायः प्रदेशे रण - रङ्ग - चित्ते
नामानि पल्ली - नगरादिकानाम् ।
'कोटं' 'पुरं' वाऽपि 'गडं' तथाऽन्यं
दुर्गार्थकं बिभ्रति शब्दमस्मिन् ॥ ८० ॥

पदे पदे तानि पुरादिकानि
द्विषज्जय - स्तम्भक - विभ्रमाणि ।
निवासिनामन्तक - हासिनां चा-
शंसन्ति काल - त्रितयेऽत्र शौर्यम् ॥ ८१ ॥

ते चित्र - चर्या युधि वीर - वर्या
योधा [2]मरिम्णाऽप्यकृतोपरोधाः ।
यशोऽवदाताश्च जयाय जाताः
केनोपमेया रिपुणाऽपि गेयाः ॥ ८२ ॥

स्वप्नेऽपि तेषामपराजितानां
न साहचर्यं विजहौ जयश्रीः ।
गुणेन केनापि दृढं नियोज्य
सतीव बद्धा प्रणयाऽञ्चलेन ॥ ८३ ॥

---

१. लोली=हिं० लोरी । २. मरिम्णा=मृत्युना ।

अश्रावि तेषां युधि सिंहनादो
यैर् वैरिभिस्तत्र पराहतास्ते ।
दिवानिशं देश - दिशासु मोहाद्
गुञ्जन्तमश्रौषुरहो ! तमेव ॥ ८४ ॥

शिखासु शूला। सुर - मन्दिराणां
ता देवतास्तत्र च हेति - हस्ताः ।
इन्द्रादयस्ते प्रथिताश्च वीरा
अध्यापका। शौर्य - पथस्य तेषाम् ॥ ८५ ॥

येषां च नामान्यपि सिंह - मल्ल-
जयादि - शब्द - स्फुट - विक्रमाणि ।
श्रुति - श्रितान्युद्धत - शात्रवाणाम्
उत्साह - भङ्गार्थमलन्तमानि ॥ ८६ ॥

बभासिरेऽस्याश्च वसुन्धरायास्
ते वासिनो वीर्य - विशेष - भूषाः ।
पञ्चातिरिक्तैरविचिन्त्य - सत्त्वैस्
तत्त्वैर् विशिष्टैर् विहिता विधात्रा ॥ ८७ ॥

शक्तेश्च शौर्यस्य शिलोच्चयानाम्
व्याप्तानि तेषां गुरु - गर्जितानि ।
घटासु घोरासु घनाघनानां
निर्घात - वातेषु च हुङ्कृतानि ॥ ८८ ॥

या कापि वैदेशिक - [1]वाहिनीमं
प्रचक्रमे प्लावयितुं प्रदेशम् ।
तां ते न्यरुन्धन् गिरि - सेतु - भूतैर्
उरः - स्थलैर् नैक - किण - व्रणाङ्कैः ॥ ८९ ॥

विशाल - वक्षःस्थल - भित्तिकासु
जाजायमाना। समरे व्रणाङ्काः ।
उत्कीर्यमाणा बभुरायुधाऽग्रै।
प्रशस्ति - लेखा इव यत्र तेषाम् ॥ ९० ॥

---

१. वाहिनी—सेना ; नदी ।

एतानि चिह्नानि बृहद् - व्रणानाम्
वार्ता ब्रुवाणानि महारणानाम् ।
लग्नानि विक्रान्त - भुजान्तरेषु
तन्मान - मुद्रा - रुचिराणि रेजुः ॥ ९१ ॥

वदन्ति पृष्ठानि तथाऽक्षतत्वाद्
रणेषु तेषामपराङ्मुखत्वम् ।
पराहते वापि हतेऽहिते ते
यतः पराचीन - मुखा अभूवन् ॥ ९२ ॥

दृप्ता द्विषो ये युधि साम्मुखीनाः
ज्ञात्वा त एनान् अभवन् सुदीनाः ।
तेषां करेभ्यः सहसाऽऽयुधानि
च्युतानि मानैः सह साहसानि ॥ ९३ ॥

तत्सायकैः कर्तित - कन्धराणाम्
प्रागेव गाढं यम - पाशितेषु ।
कण्ठेष्वरीणां कृपणा जय - श्रीर्
आरोपयेद् हन्त ! कथं नु हारान् ॥ ९४ ॥

एकेषु कोशेषु मरन्द - धाराः
परेषु भीत्यादिक - शब्द - धाराः ।
कोशेषु तेषां तु महाभटानाम्
बभासिरे भीषण - खड्ग - धाराः ॥ ९५ ॥

नाकर्षयंस्तान् कटका वधूनां
दृढं निबद्धाः कुच - कञ्चुकाश्च ।
तेऽस्मारयन् विक्रमिणोऽनुवारं
सेना - निवेशानथ वारबाणान् ॥ ९६ ॥

भ्रुवः सलीलोल्लसिता न वै तान्
शिताः कटाक्षा वशयाम्बभूवुः ।
तत्रापि ते कार्मुक - सायकानाम्
व्यलोकयन् वीर - वरा विलासान् ॥ ९७ ॥

कोशेषु　रुद्धा　प्रसयश्चिराच्च
ततो　विनिर्गत्य　करेषु　चैषाम् ।
प्रायः　स्फुरन्ति　स्म फणीन्द्र - कल्पाः
पातुं　पर - प्राण - समीरमेव ॥ ९८ ॥

आस्कन्दितुं　विक्रम - विग्रहास्ते
संलक्ष्य　यावद् - रण - भूमिमीयुः ।
तावत्　समादाय　यमोऽपि　पाशम्
प्रत्यर्थि - सैन्याभिमुखं　प्रतस्थे ॥ ९९ ॥

कोशेभ्य　ऐषुः　सहसा　यथैषाम्
बहिः　कृपायां　कृपणाः　कृपाणाः ।
प्राणास्तथैवाऽनुचिकीर्षयेव
विहाय　देहान्　द्विषतां　प्रचेलुः ॥ १०० ॥

शस्त्रैरमीषां　रिपवो　ययुर्　महा-
निद्रां,　तदीयैर्　उदितैश्च　नामभिः ।
विलासिताः　स्वापमयुर्　निशासु
निर्बन्ध - शीलाः　शिशवो　रुदन्तः ॥ १०१ ।

तेषां　रणे　विक्रम - विग्रहाणां
लोहानि　गात्राणि　निभाल्य　नूनम् ।
अहो !　हठाच्चुम्बक - यष्टिकेव
स्वयं　जयश्रीर्　निकषाऽभ्युपैषीत् ॥ १०२ ॥

इत्थं　सचापैरतुल - प्रतापैः
कालं　हसद्भिर्　महसोल्लसद्भिः ।
ऐक्षिष्ट　वीरैः　स　रणेषु　धीरैर्
स्यातं　प्रदेशं　[illegible]　निवेशम् ॥ १०३ ॥

वेगेन वातस्य विधूयमानै-
र्काण्डैर् मिथस्ताडयतोऽधिमार्गम् ।
महीरुहांश्चाऽप्यवलोक्य मेने
स शिक्षमाणान् रण-कौशलानि ।। १०४ ।।

विलङ्घमानः स इमं प्रदेशं
शौर्याऽस्मितोद्वेलमिवाऽम्बुराशिम् ।
गत-क्लमो मान्द्यमपास्य दूरं
गुणी कृतोत्साह इव प्रपन्नः ।। १०५ ।।

प्रायः पर्यटनं समाप्य निकषाऽस्ताद्रि मृद्रूपेयुषा
क्रामत्-केसरि-भास्करेण दलिते दिग्दन्ति-कुम्भस्थले ।
मुक्ता-तारक-सन्ततिस्तनुतरा कीर्णाऽन्तरिक्षाऽन्तरे
क्षोर्णी शोणित-शोणिमा च शनकैस् तस्तार किञ्चिच्चिरम् ।।१०६।।

इति श्री-वसन्तराम-पाराशर-तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव-शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्याख्ये महाकाव्ये, 'प्रवीर-प्रदेश-प्रवेश'
इत्यभिधेयो द्वादशः सर्गो विरतः ।।



# त्रयोदशः सर्गः

विपञ्ची - स्वर - सम्भूत - सुधाभिर् नः सरस्वती ।
लेलिप्यतां हृदाकाशं तमः - क्षुण्णिम - कश्मलम् ॥ १ ॥

चिन्ताचान्तो मुधा मुग्ध ! मम मानस ! मा स्म भूः ।
स्मयमानः प्रतिश्वासं हंसोऽसौ रमणाकुलः ॥
विमुखां निस्स्पृहां वाऽपि वहन् वेगात् सरस्वतीम् ।
त्वयि स्थास्नु-विहारायाऽऽनेष्यतीति न संशयः ॥ २-३ ॥

एतर्हि चाऽप्यध्व - गतस्य तस्य
भविष्णु - पुण्याऽङ्कुरणाऽनुबद्धम् ।
साद्गुण्य - मूर्त्तेर् हृदि किञ्चनापि
जातं न सङ्कल्प - विकल्प - जातम् ॥ ४ ॥

पृष्ठे पुरः पार्श्व - पदेषु पौनः-
पुन्येन नैकैः शकुनैरभीष्टैः ।
[1]प्रत्ताऽवलम्बः स परं दृढात्मा
न क्लेशितोऽजायत लेशतोऽपि ॥ ५ ॥

स पारदृश्वा सकलागमानाम्
एभिश्च भद्रङ्करणैर् निमित्तैः ।
निःसंशयं भूमिभृतो निदेशं
सुखाकरं चेतसि निर्णिनाय ॥ ६ ॥

सङ्कल्पिताऽनागत - मङ्गलश्रीश्
छाया - स्थितश्चैवमचिन्तयत् सः— ।
"कश्मीर - देशेऽल्पतरोऽपि लाभः
स्याच् चेद् भ्रशीयान्[2] भविता मदर्थे ॥ ७ ॥

प्रतिद्वयान्येव वसुन्धरायाम्
मिश्रीकृतानीव च दैव - लक्ष्म्या ।
इतोऽमुतो वाऽपि सुदुर्लभानि
बिभर्ति देशः स यतः सुखानि" ॥ ८ ॥

---

१. प्रत्तः = प्रदत्तः । २. भ्रशीयान् = अधिकतरः ।

अथाऽचिरेणैव स 'ऐलधानं'[1]
नेदिष्ठ - कुल्यं नगरं ललङ्घे।
प्रधान - धान्यैर् विपुलैरिलायाम्
पृथु - प्रथो यत्परिवेश - देशः ॥ ९ ॥

सशीकरैः शीतलितैः समीरैः
संवीजयन्तीं पथिकान् श्रमार्तान्।
ददर्श दूरात् स ततः 'शतद्रुं'
सौभाग्य - लेखामिव कर्षकाणाम् ॥ १० ॥

देशस्य दैन्योद्दलितस्य दूरम्
विद्रावयन्ती शतधाऽशुभानि।
या द्रावयन्ती दृढ - हल्य - [2]माल-
शतान्यभिख्यां दधते यथार्थाम् ॥ ११ ॥

तारैस् तथोत्ताल - तरङ्ग - नादैर्
उत्तेजयन्ती तरुणेषु शौर्यम्।
साऽद्याप्यहो! कातरता - मलानि
प्रक्षालयन्तीव वहत्यजस्रम् ॥ १२ ॥

उत्तीर्य तां निश्चल - निश्चयोऽसौ
[3]'द्वीपाऽभिधं मण्डलमाससाद।
अधिष्ठितं शौर्य - धनैः प्रवीरैः
प्रतिष्ठितं शास्त्रचणैश्च धीरैः ॥ १३ ॥

ततः सतीर्थ्यैरिव साहसस्य
लोकैस्ततस्त्यैः सुर - निर्विशेषम्।
श्रद्धा - कृताऽतिथ्य इति प्रसीदन्
कुल्यामलङ्क्लिष्ट परां 'विपाशाम्' ॥ १४ ॥

अटाट्यमानैस् तटिनी - तटेषु
वसिष्ठ - गाधेयमुखैर् इहैव।
श्वःश्रेयसं श्वस्तनमोहमानैः
साक्षात्कृतं ब्रह्म महर्षि - मान्यैः ॥ १५ ॥

---

१. लुध्याना। २. माल = क्षेत्रम्। ३. द्वाबा।

पराशरः पूजित - पादपद्मो
द्वैपायनोऽन्ये मुनयश्च मान्याः ।
प्रपित्सवोऽनन्त - सुखार्णवे वा
मुमुक्षुभूयाय तपोऽत्र चेरुः ॥ १६ ॥

[1]धात्र्येव धात्र्या तटिनी - भुजाभ्याम्
पिधाय देशं परिपाल्यमानम् ।
आक्रम्य मुग्धा अहितास् तमेतं
के शालभीं वृत्तिमुपाश्रयेयुः ॥ १७ ॥

मुक्त्वा महात्माऽथ स मुख्य - मार्गम्
वामेतरे वर्त्मनि वर्तमानः ।
स्थले समे किञ्चन मूक - मुद्राम्
'इरावतीं' कूलवतीम्[2] अतारीत् ॥ १८ ॥

क्रौञ्चा बका वाऽयन[3] - पार्श्वयोश्च
निरन्तरं शाखि - शिखोपविष्टाः ।
अभ्यागतानामभिनन्दनार्थं
लग्नाः सिताः केतु - पटा इवासन् ॥ १९ ॥

स तत्र मार्गे विषमेऽधिरोहन्
सौजन्य - सौशील्य - सुधा - समुद्रः ।
श्रमं विसस्मार सभाजितः सन्
उपत्यका - वासिभिरातिथेयैः ॥ २० ॥

कश्चित् फलाद्यं मधुरं च खाद्यं
क्षीरं सखण्डं यदि वापि नीरम् ।
गव्यं समादाय जनश्च नव्यं
क्लमं विनेतुं तमुपाजुहाव ॥ २१ ॥

स काङ्क्षितं देशमुपाययियासन्
न्यरूपयद् ग्रामटिका - पथेषु
मे - मे स्वराऽऽपूरित - काननानि ।
चरन्ति यत्किञ्चिदजैडकानि ॥ २२ ॥

---

१. धात्र्या—उपमात्रा, [illegible] । २. कूलवती—नदीम् । ३. अयनं=मार्गः ।

यान्तोऽनुवारं पुरतश्च पश्चाद्
मिथः कडत्कार - विषाण - घाताः ।
नोनुद्यमानाश्च जयैषिणोऽत्र
भेडा विनोदाय नृणां बभूवुः ॥ २३ ॥

वनौकसां गोपक - कन्यकानां
गोष्ठाय टिट्कार - गिरेरितानि ।
विदुद्रुवुर् गोचर एव विष्वक्
पुनः प्रदोषेऽपि च धैनुकानि ॥ २४ ॥

विभूषयन्त्योऽत्र वयो नवीनं
ग्रामीण - गौर्यः [1]स्वज - सद्विलासाः ।
आरोहतां वर्त्मसु सङ्कटेषु
क्लमाऽपनोदौषधयो बभूवुः ॥ २५ ॥

मन्द्राऽनुनादाः पदवी - प्रपाताः
स्व - सीकरैर् मेदुरिताऽद्रिवाताः ।
प्रायेण पाद्यादि - पयः - प्रदानैर्
अपूपुजन् प्राघुणिकं तमेनम् ॥ २६ ॥

हृत्वा क्वचित् पोटलिका अकाण्डे
रोरुज्यमानाः[2] पथिकाननीशान् ।
चुकूर्दिरे मार्ग - महीरुहाणां
शाखासु बूत्कार - मुखाः प्लवङ्गाः ॥ २७ ॥

शृङ्गैः शितैः श्यामल - शैल - शीर्षैः
शीर्णाङ्कान् जाङ्गल - सैरिभाणाम् ।
निर्यास - बिन्दून् किरतो द्रुमान् स
रोरुद्यमानानयनै शशङ्के ॥ २८ ॥

क्वचिच्छृगाली सह शावकैः स्वैः
क्वचिन्मृगाली परितश्चलाक्षी ।
आघ्रात - शार्दूल - विशेषगन्धा
वेगेन वातं विमुमोच पश्चात् ॥ २९ ॥

---

१. स्वजः=सहजः । २. रोरुज्यमानाः=व्यथयन्तः ।

द्रोणीष्वदूरे कटकेषु चाऽग्रे
परत्र वर्त्मस्वपि भाल्लुकानाम् ।
यद् वा भयानामिव जङ्गमानाम्
अम्बूकृतं श्रोत्र - पुटे विवेश ॥ ३० ॥

यथा यथा पान्थजनोऽग्रतोऽग्रे
उच्चैस्तरां पद्धतिमध्यरुक्षत् ।
शश्वास दीनो न तथा, परं स
भस्त्रेव वातं निगिलन् बभासे ॥ ३१ ॥

शैत्येन कुञ्चन्निव मातरिश्वा
स तारतम्येन तनुत्वमापत् ।
गात्रेषु वेशस् त्विह यात्रिकाणां
स्थूलः स्थवीयान् अभवत् स्थविष्ठः ॥ ३२ ॥

जाड्येन गात्रेऽङ्कुरिता च रोम-
राजिः स्थिता वीर - वरूथिनीव ।
स्वेदस्य भग्नस्य ततोऽचिरात् प्राग्
रुरोध तन्नागम - रन्ध्र - मार्गान् ॥ ३३ ॥

हिमोत्करोष्णीष - धराश्च 'वीर-
पञ्चाल - कूटा दृढ - यूप - रूपाः ।
स्व - मस्तकैः पातुकमन्तरिक्षम्
प्रायः पुरस्ताद् बिभराम्बभूवुः ॥ ३४ ॥

तं 'बाणशाले'[2] मृदु सञ्चरन्तं
द्रोणी विदूराऽतिथिमभ्युपेता ।
मोदैर् मनाङ् मेदुरितैः परागैर्
उद्धूलयन्ती भृशमभ्यनन्दत् ॥ ३५ ॥

अनुक्रमं प्रांशु - पदाऽधिरूढं
वातोर्मयोऽवेत्य भविष्णु - भूपम् ।
लाजोपमैर् हैम-कणैस् समेतम्
अवाकिरन् वल्गितमाचरन्त्यः ॥ ३६ ॥

१. पीर-पञ्चाल । २. बानिहाल ।

विलङ्घ्य वाटं विषमं ततोऽसौ
तृण - द्रुम - श्यामलिमाऽभिलीनम् ।
तुषार - मौलिं धरणी - धरेशं
हिमालयं मञ्जुलमालुलोके ॥ ३७ ॥

लोकोत्तरं सुन्दरता - प्रवाहं
रिरक्षिषन्नेष बहिः प्रयाणात् ।
उपत्यकाया। प्रहरीव शैलो
जागर्त्यहो ! मण्डलितोच्च - देहः ॥ ३८ ॥

प्रविष्टमात्रः सुभगम्भविष्णुः
स गाहिताऽशेष - विशेष - देशः ।
सङ्कल्प - सीमाऽतिगते नवे स्वं
लोकान्तरे जातमिवाऽभिमेने ।' ३९ ॥

सौभाग्य - गर्वोद्धत - कन्धरोऽयं
धरः प्रकाशीकृत - हैम - दन्तः ।
समस्थलान् नीचतरान् प्रदेशान्
हसन्निवाऽऽभाति युगादि - कालात् ॥ ४० ॥

अभ्रंलिहानां सरल - द्रुमाणां
निर्यास - मैत्र्या सुरभि - स्वरूपैः ।
प्रत्युद्गतः शीतलितैः समीरैर्
अकारि सोऽपास्त - परोक्षबाधः ॥ ४१ ॥

देवात्मनो भाविक - भूमिभर्तुः
सुदुर्लभाऽऽलोकन - लाभ - लोभात् ।
संस्पर्धमाना इतरेतरं ते
नूनं नगा उच्चतरत्वमापुः ॥ ४२ ॥

धराद् द्रवन्त्यः समुपेत्य काश्चिद्
धारा झराणामुदिताऽनुनादाः ।
स्वस्तीति वाचो बहुशोऽनुवादैर्
[illegible] ॥ ४३ ॥

"पुण्योदयादेव हि नोऽयमेनम्
आनीतवान् देहिनमत्र देवम्"।
इतीव कुल्या विशतो हयस्य
दाधाव्यमानाश् चरणांश्चुचुम्बुः ॥ ४४ ॥

ततोऽगमत् 'काम्बुव' - नामकं स
द्रङ्गं पुरा सैनिक - सन्निवेशम् ।
कश्मीर - देश - प्रतिहार - कल्पं
स्थितं प्रदेशे 'क्रमवर्त'[1] - संज्ञे ॥ ४५ ॥

सूक्ष्मेक्षिकाऽवेक्षण - जागरूका
इतस्ततो रक्षि - चरा विचेरुः ।
खलू[2]रिकास्वत्र च सैनिकानां
सशस्त्र - चर्या [3]खुरली बभूव ॥ ४६ ॥

गमागमैस् साधन - लर्दितानां
कण्ठेषु दोलायित - घण्टिकानाम् ।
इतोऽमुतो वा खर - खेसराणां
कोलाहलो दिक्षु मुमूर्छं शश्वत् ॥ ४७ ॥

दत्ताऽवधानैरधिकारि - वर्गैर्
इतोऽधिमार्गं कर - सङ्ग्रहाय ।
पेटीषु वा शाण - पुटेषु पूर्णम्
अमीयतोद्घाट्य च वस्तु - जातम् ॥ ४८ ॥

द्वाराऽविदूरे दर - सूचनार्थं
विशाल - ढक्का निहिता बभूवुः ।
नीचैः स्पशा ढुण्ढित - साधनांश्च
पान्थान् विविक्षून् बहु पर्यपृच्छन् ॥ ४९ ॥

याथार्थ्य - विद्भिः स इहापि चारैः
सामन्य - वेशैः रचितार्चनः सन् ।
काश्मीरिकान् कार्यं - वशाददूरे
स्थितान् महामात्र - जनानवेदीत् ॥ ५० ॥

१. कमेलल कोठ । २. सेना-व्यायाम-स्थल । ३. सेना-व्यायाम, Parade.

क्रोश - द्वयाभ्यन्तर एव दृष्टि-
स्निग्धैः स दृश्यैरनुरज्यमानः ।
गन्तव्य - देशं निकषा विजानन्
प्रपात - तीरेऽवततार वाहात् ॥ ५१ ॥

ततो विपर्याणित - वीति - वर्यो
विनीय खेदं च कियच्चिराय ।
पीत्वा पयश्शोधित - पाणिपादः
पर्यत्यजत् पौर्विक - वेषमेषः ॥ ५२ ॥

निष्काल्य गोणी - गत - झोलिकाच्च
कार्पास - वासांस्यवसिष्ट तावत् ।
शुभ्राऽभ्र - कल्पान्यपि यानि मार्ग-
सम्मर्द - हेतोर् वलिमन्त्यभूवन् ॥ ५३ ॥

[1]क्षीरोदकाच्छादन - संवृताङ्गः
रेणु - स्तराऽन्तर्हित - हीर - हारी ।
भूभृत् प्रतन्वम्बुद - जाल - गूढः
काञ्चित् तदाऽसो सुषमामुवाह । ५४ ॥

दातुं नरेशस्य निदेशमद्या-
ऽसो जग्मिवान् मन्त्रि-जनस्य पार्श्वे ।
उच्चावचाचार - विचार - चारी
सङ्कोचमञ्चन्निव किञ्चिदासीत् ॥ ५५ ॥

निर्वाणमाप्तं च पुनः प्रकाशं
निमील्य भूयश्च भजद् विकाशम् ।
मनोऽधुना हन्त ! महात्मनोऽस्य
खद्योत - लीलां बिभराम्बभूव । ५६ ॥

तत्त्वार्थविद्भिः कमलाङ्कगामी
स गूढ - चार - प्रतिहार - वर्गैः ।
द्वारेऽयने वा कटकोपकण्ठे
नाऽरोधि नाऽशोधि वितर्क - बुद्धया ॥ ५७ ॥

१. खादी, खद्दर।

स श्रेणि - बद्धैरथ साऽवधानैर्
उच्चैर्-जय-स्वस्ति-मुखैः समस्तैः ।
प्रत्युद्गतः सैनिक - राजभृत्यैर्
अचिन्तितं स्वागतमाससाद ॥ ५८ ॥

'वार्ताहरो विक्रम - भूमिभर्त्तुः
प्राप्तो'' निशम्येत्यचिरेण तत्र ।
द्वाःस्था अहम्पूर्विकयाऽभ्युपेतं
न्यवेदयन् मन्त्रि-गणेभ्य एनम् ॥ ५९ ॥

'आगम्यतामत्र सभां प्रविश्य
कृतार्थनीयाः सुभृशं दृशो नः ।
इत्यर्थ्यमानः सकपोत - हस्तैः
समैः स सामन्त - समीपमापत् ॥ ६० ॥

ह्रीतश्च प्रीतश्च तदाऽभिसर्पन्
कार्क्षैश्च कक्षानभिवीक्षमाणः ।
आत्मानमाविष्टमिवाऽन्य - लोके
मत्वा महात्माऽन्तरचिन्तयत् सः— ॥ ६१ ॥

"क्षिति-क्षिता रक्षि - पदे नियुक्तः
तेनैव दौत्याय पुनः प्रयुक्तः ।
सामान्य इत्यस्मि तथा न मान्यः
किं - कारणं सत्करणं तदेतत् ? ॥ ६२ ॥

किमुन्मदिष्णुः सकलो ऽत्र लोकः ?
स्याद् वाऽप्यकाण्डे मति-विभ्रमो मे ? ।
विषोषधीनामिह वाऽपि गन्धैर्
आन्ध्यं गता चेतनता समेषाम् ? ॥ ६३ ॥

परम्पराऽऽचार - कृताऽनुरोधैर्
यद्वाऽतिथिं देवमिव स्मरद्भिः ।
सौजन्य - धन्यैः सुतरां किमेभिस्
स्यादातिथेयं कुत्र [illegible] ? ॥ ६४ ॥

अलं मुधा मे मननैर् मुहुर् वा
स्यात् स्वामिनो वै गरिमैष कश्चित् ।
नैकेऽन्यथा कीट - पतङ्ग - कल्पा
अस्मादृशा भू - वलये लुठन्ति ॥ ६५ ॥

सम्बन्ध - हेतोर् गण - नायकस्य
मूषोऽपि पूजास्पदतां प्रयाति ।
देवस्य कैङ्कर्यमिहाऽनुतिष्ठंस्-
तथाऽहतंत्वं किमहं प्रपन्नः ? ॥ ६६ ॥

अचन्दनो निम्ब-मुखोऽपि भूरुहः
सम्पर्कमाप्तो मलयेन भूभृता ।
पटीरतां याति तथैव लम्भितो
महीधरत्वं परमाणुरप्यहम् ?" ॥ ६७ ॥

ततः प्रसन्नैः सचिवैः प्रणत्य
सम्मानितः सन् स यथाऽधिकारम् ।
प्रदर्शितं पाणि - पुटैः पुरस्तैर्
महार्हमुच्चासनमध्यतिष्ठत् ॥ ६८ ॥

सोऽभ्यासमानश्च तदासनं सन्
भूयस्तरां विक्लवतामिवाऽऽप्तः
तिरोदधानोऽपि बहिर्विकारान्
पश्यन्नमात्यान् स्वगतं जगाद— ॥ ६९ ॥

"अहो ! उपक्रान्तमिदं कृतान्त !
किं भूत-चक्रे विनिपातितो ऽस्मि ? ।
किं लोकयामीह जना कयाऽमी
शक्त्येरिताः किं चक्रवास एते ? ॥ ७० ॥

साधारणोऽधीश्वर - किङ्करोऽहं
ज्यैष्ठ्यादिमे मेऽपि तथाऽर्चनीयाः ।
उल्लाल्य तत्किं विनताः समे मां
स्वं चापि हास्यास्पदतां नयन्ति" ॥ ७१ ॥

विचार - जाले पतितं तदैवम्
मुग्धं मनो मर्कटवत् तदीयम् ।
ऊर्ध्वं तथाऽधो विचलद् वराकं
न वेदितुं तथ्यमलं बभूव ॥ ७२ ॥

कृतार्चनैः सोऽथ च मन्त्रि - मुख्यैस्
सम्प्रार्थितो भूमिभृतो निदेशम् ।
तच्छासनं किञ्चन कुञ्चितात्मा
तेभ्योऽर्पयामास कर - द्वयेन ॥ ७३ ॥

नत्वा ततोऽधीश्वर - शासनं तद्
उन्मुच्य सम्भूय च वाचयित्वा ।
ते वैतसीं वृत्तिमुपेयिवांसः
पाणीन् पुटीकृत्य शनैस्तमूचुः— ॥ ७४ ॥

"किं 'मातृगुप्ते'त्यभिधां भजन्ति
प्रत्यूष - काले स्मरणोचितानि ।
सिक्तानि सम्यक् सुधयाऽक्षराणि
श्रीमद्भिरेवाऽत्र पवित्रितानि ?" ॥ ७५ ॥

एवं स सामन्त - कुलाऽनुयुक्तो
मन्द-स्मितैर् दिक्षु शुभानि वर्षन्— ।
'आम्, एवमेवैतदुदीरितं यद्'
उक्त्वेति भेजे स च मूकिमानम् ॥ ७६ ॥

अद्यापि चोच्चावच - भावनाभिर्
आन्दोल्यमानं मन एतदीयम् ।
पत्रं नदावर्त - गतं यथा सद्
नायाद् अवारं न जगाम पारम् ॥ ७७ ॥

उल्लास - वेगोत्कलिकाऽऽकुलेन
प्रचोदितैर् मन्त्रि - गणेन भृत्यैः ।
ततोऽभिषेकाय निमेष - मात्रे
सज्जीकृतं वाञ्छित - वस्तु - जातम् ॥ ७८ ॥

तस्मात् परं मेलक - सन्निकाशं
क्षणेन तत्स्थानमुपागमिष्णोः ।
लोकस्य कौतूहल - चक्षणेन
कोलाहलेनाऽऽकुलितं बभूव ॥ ७९ ॥

उन्मुक्तमात्रे प्रकृति - प्रधानैर्
मही - महेन्द्रस्य हि शास्ति - पत्रे ।
द्वाराणि दैवस्य तदैव तावद्
अपावृतानीव बभुः समेषाम् ॥ ८० ॥

तत्पदं परितः प्राप्त - प्रजा - प्राज्य - पुरोहितम् ।
लसन्नाना - ध्वज - व्रातं सञ्जातं ऋजुरोहितम् ॥ ८१ ॥

दिक्कूलानि ख मूलानि वाद्यानां मञ्जल-स्वरैः ।
ध्मातानि स्पन्दनैरासन् चक्रवांसीव नर्तनम् ॥ ८२ ॥

सुचिराद् विप्रयुक्ताया राज्य-लक्ष्म्या नभस्तलात् ।
प्रमोदाऽश्रु-प्रभाः पेतुः कणशोऽम्बुद-बिन्दवः ॥ ८३ ॥

मरुतो मेदुरा मोदैर् मृदु - मोदन - वीजनाः ।
दासेरतामयुस्तत्र मुदिराश्चातपत्रताम् ॥ ८४ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'मातृगुप्त-यात्रा-ऽवसान-वर्णनम्' नाम त्रयोदशः सर्गः पर्यवसितः ॥



# चतुर्दशः सर्गः

भवाम्भोधौ निमज्जन्तो ! भजध्वं रे ! पुनर् भवम् ।
भवमिच्छथ भव्ये चेद् न चेहध्वे पुनर्भवम् ॥ १ ॥

भवान्तरेऽपि सौख्यार्थिन् ! भव चेतो ! भवातिगः ।
ध्रियतां च भव - प्रीतिर् भव - भीतिः कुतस्ततः ॥ २ ॥

व्यलोकि विष्टिर् न तिथिर् न वारो
मौहूर्तिकैर् नाऽपि शुभं तदा भम् ।
देवश्चरिष्णुर् भुवि मातृगुप्तो
यतः स्वयं मङ्गल - मूर्त्तिरासीत् ॥ ३ ॥

पाप - प्रहाणां सहजोऽभितापो
हिमाम्बुभिः शीतलतामनायि ।
विघ्ना ध्रुवं केचन दैव - निघ्ना
भूनाः समीरैः सहसाऽवधूताः ॥ ४ ॥

समेत्य सामन्त - जनास् ततस्तम्
पुरोहिताश्च प्रकृति - प्रधानाः ।
सौवर्ण - भद्रासन - सन्निषण्णम्
प्रह्लादितं प्राङ्मुखमभ्यषिञ्चन् ॥ ५ ॥

श्रुति - प्रविष्टैः श्रुति - मन्त्र - नादैर्
विलोपिताऽन्तर्विशयाऽवसादैः ।
निद्रा - निमग्ना नियतिर् नितान्तम्
प्राबोधि नूनं सहसा तदीया ॥ ६ ॥

सद्योऽभिषेकोऽस्य विधीयमानो
भक्त्या धरेशं प्रति सूक्ष्म - बीजम् ।
प्राग् द्वैध - नैराश्य - निगूढमन्तर्
भूयस्तदेवाऽङ्कुरयाञ्चकार ॥ ७ ॥

कृतज्ञतोल्लास - भवाऽश्रुधारा-
निरन्तर - स्नात - भुजान्तरस्य ।
कुम्भाम्भसा माङ्गलिकोऽभिषेको
बभौ यथार्थं पुनरुक्ति - कल्पः ॥ ८ ॥

यदाऽन्य - लोकैः कलश - द्वयेन
तपस्विनोऽस्याऽक्रियताऽभिषेकः ।
तेनाऽपि नूनं नयन - द्वयेन
देवस्य तावद् हृदि भावितस्य ॥ ९ ॥

पूतैः पयोभिर् मनसः समूर्तैः
मलानि मृष्टानि च कश्मलानि ।
दुर्दैव - दैन्यादिक - दूषणं तु
प्रागेव दर्भाऽम्बु - कणैः परास्तम ॥ १० ॥

रक्षाऽक्षतैर् दिक्षु च याजकेन
क्षिप्तैस् ततोऽनागत - वेदिनेव ।
यशोभरस्य प्रसरिष्यतोऽस्य
संज्ञैव नूनं विहिता तदानीम् ॥ ११ ॥

पानीयमत्राऽऽचमनीय - दत्तं
पूर्वं त्रिधाऽसौ निभृतं निपीय ।
तद्देश - तापं त्रिविधं महिष्ठो
भूताऽनुकम्पी स्वयमग्रहीत् किम् ? ॥ १२ ॥

पवित्रिते मङ्गल - मूल - मन्त्रैर्
बद्धे ऽथ रक्षा - करकङ्कणेऽस्य ।
काश्मीर - तन्त्रं सह राज - लक्ष्म्या
पुरोधसाऽदायि करेऽद्य नूनम् ॥ १३ ॥

एकाङ्क - तुल्यं तिलकं विशाले
भालेऽस्य तद् [1]धीर - पटीर - मिश्रम् ।
साक्षाद् विवृण्वच्छ्रियमद्वितीयाम्
विराम - चिह्नं विपदां बभासे ॥ १४ ॥

---

१. कुङ्कुम-चन्दन-मिश्रम् ।

सेवा - व्रतोऽसौ चक्रवांस्ततोऽङ्ग-
न्यासं क्रमेणाऽभिमुखे समेषाम् ।
लाभाय लोकस्य समस्त - गात्र-
दान - प्रतिज्ञां नियतं व्यधत्त ॥ १५ ॥

प्रसाधितस्याऽस्य गुणैः पुरस्तात्
ततः पिनद्धे मुकुटे च मौलौ ।
न तच्छरीरम् परमद्य तेन
परिष्कृतं राज - पदं रराज ॥ १६ ॥

अद्यापि दाक्षिण्यमधीश्वरस्य
सास्मर्यमाणस्य कृतज्ञ - वृत्तेः ।
तस्योच्छलद् - भक्तिबल - प्रणुन्नाः
पेतुर् बहिर् बाष्प-कणा अभीक्ष्णम् ॥ १७ ॥

स कल्पयित्वा हृदि राज - राजं
निवेदयन्नाह विनीत - चेताः ।
"हे नाथ ! कश्चिद् भुवनेऽद्वितीयो
गिरामगम्यो गरिमा त्वदीयः ॥ १८ ॥

उदार - चेता, यदतर्कितं त्वं
निगूहिताऽन्तःकरण - प्रवृत्तिः ।
अकिञ्चनं किङ्करमात्मनीनम्
प्रीत्याधमर्ण्यं सुतमामनैषीः ॥ १९ ॥

भवानसौ धीर ! धराधिराज !
धाराधरः कोऽपि गभीर - रूपः ।
अ - व्यञ्जयंस्तन्वपि गर्जितं यः
परामृतं वर्षति विश्वतोऽपि ॥ २० ॥

भवांश्चरिष्णुर् भुवि पारिजातो
जातोऽद्भुतः प्राणि - हितस्य हेतोः ।
अचिन्तितं चापि ददाति तत्तत्
स्वामिन् ! समेभ्यो यदयाचितोऽपि ॥ २१ ॥

देवो दिविष्ठः समुपासकेन
तोष्टूयमानस् तनुते प्रसादम् ।
देवो वपुष्मानसि निस्तुलस्त्वम्
अयाच्यमानोऽपि वरं प्रयच्छन् ॥ २२ ॥

पुण्यैस्तथा तीव्रतरैस् तपोभिस्
तनु - त्यजो देव - पदं प्रयान्ति ।
त्वयेश्वरेण त्वगुणैः परीतो
नीतोऽस्मि देवत्वमिहैव तावत् ॥ २३ ॥

त्रैकाल्य एव त्रिजगत्सु नाऽन्यः
स्पर्धास्पदं ते भजते वदान्य ।
वागीश्वराणामपि गोचरोऽसि
यज्जल्पनानां न च कल्पनानाम् ॥ २४ ॥

आनृण्यमेष्यामि कथं प्रभो ! ते
दत्त्वाऽप्यहो ! भङ्गुरमात्म - देहम् ।
यद् राज - राजीषु निवेशितोऽहं
त्वयाऽऽपितश् शश्वदभङ्गुरत्वम्" ॥ २५ ॥

इत्येवमन्तःकरणेऽधिराज—
स्मृत्याऽस्य बाष्पाऽम्बु पतद् विलोक्य ।
लोको मुहुस् तेन च मृज्यमानम्
मेने मरुच्छीतिम - सञ्जातम् ॥ २६ ॥

मनुष्य - रत्नस्य निसर्गतोऽस्य
सौवर्ण्य - साद्गुण्य - विभूषितस्य ।
प्रथाऽनुरोधाद् [1]भरणस्य दम्भो
धौतस्य प्राग् धावन - कल्प आसीत् ॥ २७ ॥

वृत्ते ततो नैयमिके च कृत्ये
प्रसाधनैर् भास्वर - सर्वगात्रम् ।
सिंहासनस्थं नृपतिं स्तुवानाः
व्यजिज्ञपंस्तं प्रकृति - प्रधानाः ॥ २८ ॥

---

[1] भूषणादि-धारणस्य ।

"सम्प्रार्थितेन स्वयमेव पूर्वं
त्राणाय काश्मीर - वसुन्धरायाः ।
श्रीविक्रमादित्य - धराधिपेन
सम्यक् समः स्वेन समर्थितोऽसि ॥ २९ ॥

तत् स्वामि - हीनां सुभगां क्षमावन् !
प्रतीक्षमाणां च कुतूहलेन ।
रक्ष क्षमां देव ! कृतार्थयाऽस्मान्
तापं हरन् क्षेम - जलाऽभिवर्षैः ॥ ३० ॥

फलोन्मुखैः प्राक्तन - पुण्य - पुञ्जैः
पदं पुमांसः प्रवरं प्रयान्ति ।
नीत्याऽनया त्वं नियतं नियत्याः
काङ्क्षितानां विषयं गतोऽसि ॥ ३१ ॥

तन्मण्डलं स्वर्ग - [1]सतीर्थ्यमेतत्
समस्त - सम्पत्ति - सुखैः समृद्धम् ।
परैः प्रदत्तं प्रवितर्क्यं पुम्भिर्
मा देव ! मंस्था अनुकम्पितं स्वम् ॥ ३२ ॥

स्व - कर्मणैवाऽधिगतस्य जन्मनो
यथा जगत्यां जनको जनिस्तथा ।
राज्यादि - लाभेऽपि नृणां तथाऽपरे
स्युः काकतालीय-नयेन कारणम् ॥ ३३ ॥

फलेग्रहित्वं सुकृतैरुपेतैः
काश्मीरकाणां नृप ! तत्त्वतस् त्वम् ।
नैश्चिन्त्य - नैश्चित्य - विधान - हेतोर्
ईशेन रक्षी प्रहितो हितोऽसि ॥ ३४ ॥

एवं त्वमेवार्ऽपित - जीवनानाम्
प्रजापते ! नोऽसि विधिर् वपुष्मान् ।
आ - बालवृद्धान् सह - कृत्वनोऽस्मान्
दासान् स्वदेहाऽङ्गनिभांश्च विद्धि ॥ ३५ ॥

१. सतीर्थ्यम्—तुल्यम् ।

अस्मद् - भटानां प्रधनोत्कटानां
ध्मातस्य हुङ्कार - समीरणेन ।
प्रायोऽस्य देशस्य मिथोऽपि सीमा
प्रस्पर्धमाना वितती - भवन्ति ॥ ३६ ॥

चण्ड - प्रतापेन तवाऽधिराजो
देदीप्यमाने सति मण्डले ऽस्मिन् ।
तृण्योपमाना रिपवो वराका
आस्कन्दितुं नाथ ! क उत्सहेरन् ॥ ३७ ॥

आवेशितोन्माद - मदा द्विषो नो
देशे प्रवेशादपि पूर्वमस्मिन् ।
सैन्यैरदैन्यैः शसिता विशन्ति
कालस्य लोके कृपणाः कराले ॥ ३८ ॥

[1]शय - द्वयस्याऽभय - मुद्रया ते
सम्पालिते सम्प्रति मण्डलेऽस्मिन् ।
ता ईतयो विप्लव - भीतयो वा
नैष्यन्ति पश्चाद् गलहस्त्यमानाः ॥ ३९ ॥

एवं स्थितेऽहं प्रतिहारवद् वः
संरक्षको '[2]दण्डधरोऽपि चास्मि' ।
इत्यादि वाचोत्तर - सम्प्रदानैर्
न ह्रेपणीया भवता प्रभो ! स्मः ॥ ४० ॥

राजन्[3] ! यशश्चन्द्रिकया प्रजानां
चेतश्चकोरान् परितर्पयंश्च ।
व्याप्तानि विष्वक् तिरयंस्तमांसि
शाधि प्रदेशं शरणाश्रितानाम्" ॥ ४१ ॥

इत्थं स तथ्यानि निशम्य तेषाम्
अनुस्मरन् स्वामि - कृतोपकारम् ।
श्री - मातृगुप्तश् चिर - मौक्य - लुप्तो
ऽज्ञाताऽस्मितः सन् स्मितमाततान ॥ ४२ ॥

---

१ शयः—हस्तः । २. राजा, दण्डधारी । ३. नृप ! ; चन्द्र ! ।

ततोऽर्जिताऽत्यूर्जित - राज्यसम्पद्
नन्दन् परांश्चाऽप्यभिनन्दयन् सः ।
नताननो दीन - सवेदनेभ्यो
दीनार - दानैः सुदिनं निनाय ॥ ४३ ॥

मनोरथादप्यधिकैरवाप्तैस्
तैस्तैः पदार्थैरिह मार्गणानाम् ।
पूर्णानि पात्राणि च मानसानि
मुदाऽश्रु - नीरैश्च विलोचनानि ॥ ४४ ॥

तावच्च तत्पाणि - पुटाद् अभीष्ट-
द्रव्यस्य धाराऽस्रवदेव शश्वत् ।
न दुर्विधस्यार्थि - जनस्य यावद्
मुखे प्रसादोऽङ्कुरितो बभूव ॥ ४५ ॥

तद्दान - सङ्कल्प - जलानि तत्र
प्रीतार्थि - मुक्ताऽश्रु - भरैः सहैव ।
भूमौ विलीनानि तदाऽधुनाऽपि
धारायमाणानि परिस्रवन्ति ॥ ४६ ॥

तुषार - रूपेण यशो नृपस्य
तत् तस्य शैलेषु समन्ततोऽत्र ।
कल्पान्तकालेऽपि न च क्षयिष्णु
सुरक्षितं स्थावरतामिवाप्तम् ॥ ४७ ॥

वदान्य - मान्यस्य बहूनि यानि
दानाऽवदानान्यभवंस् तदानीम् ।
जेगीयमानानि झरैः सनादैस्
तानि श्रुतिं यान्ति पदे पदेऽद्य ॥ ४८ ॥

अकिञ्चनानां समुपेयुषां स
सूच्यग्रधीः कारुणिकोऽद्य वैद्यः[1] ।
गूढानि गाढं हृदयेषु पूर्वं
दौर्गत्य - शल्यानि जहार सद्यः ॥ ४९ ॥

---

१. विद्वान्, चिकित्सकः ।

अभूदभावो न किलाऽत्र दाना-
याऽऽच्छादनानां न तथाऽदनानाम् ।
निवृत्त - कामेषु समेष्वभावः
परन्त्ववालोक्यत दुर्भगानाम् ॥ ५० ॥

जाते स - शाते[1] च ततोऽर्थि - जाते
याते च निर्मक्षिकतां स्थलेऽस्मिन् ।
मिथो जनानां 'जयतु प्रजापः'
इत्येव वर्धापन - वाक्यमासीत् ॥ ५१ ॥

सातोद्य - वाद्योन्मद - नृत्य - गीतैर्
लोकैः परस्तात् प्रचुरं प्रसन्नैः ।
अन्नैश्च पेयैर् विविधैरमेयैस्
सज्जा व्यवस्थाप्यत तत्र सद्यः ॥ ५२ ॥

पटवासा न्यखन्यन्त सौधाभासास् ततोऽन्तिके ।
प्रोर्णकास्तरणैस् तूर्णम् आस्तीर्णा धरणी तथा ॥ ५३ ॥

रेजिरे श्रेणि - बद्धेषु पिनद्धेषु पटैः सितैः ।
फलकेष्वाहितैः फुल्ल - सहितैर् भाजनैर् हितैः ॥ ५४ ॥

भोज्यैश् चोष्यैश्च लेह्यैश्च दर्श्यैः पेयैश्च राजिताः ।
राजयो भाजनानां ता जनानामहरन्मनः ॥ ५५ ॥

## कुलकम्

लड्डू - स्तूपैश्च पूपैश्च नाना-रूपैः सुवासितैः ।
हिङ्ग्वादि - दत्तधूपैश्च सूपैरज्ञात - नामभिः ॥

भव्यैर् व्याप्ता फल - द्रव्यैः सघृतैः रस-सम्भृतैः ।
मरिचादि - मिलच्चूर्णैः पूर्णैर् जीरक - संस्कृतैः ॥

रञ्चितैः स्नेह-संसर्गाद् निम्बूकाऽऽम्रादि-[2]सन्धितैः ।
[3]मिष्टपाकैस् तथा जिह्वोल्लास - दाकैः पृथग्विधैः ॥

---

१. प्रसन्ने । २. हिं० अचार । ३. हिं० मुरब्बे ।

सदेहैरिव सौरस्यैर् [1]अवलेहैरभावि च।
विन्यस्तैर् भोजनाधारे पटागारे समन्ततः ॥ ५८-५९ ॥

मुद्ग - मन्थक - माषैश्च मकुष्ठैश्च मसूरकैः।
पदं पञ्च - मकाराणां स्वादिम्ना प्रापि संस्तुतैः ॥ ६० ॥

भूसुराऽवनिपेऽन्यस्मिन् पाने चाऽत्र सुराजिते।
असुराणामिवाऽन्येषां सुराऽऽकाङ्क्षाऽपि नोदभूत् ॥ ६१ ॥

पुलाकैर् मधु - सम्पाकैः को न सर्पिः - सुतर्पितैः।
राजिकाक्तैर् [2]उपस्कार-सक्तैर् भक्तैर् व्यलोभ्यत ॥ ६२ ॥

कर्पटाऽनावृताः पट्टे पर्पटा विविधा वटाः।
पत्र - वेढमिकास्[3] तत्र रेजिरे [4]वेसनास्तराः ॥ ६३ ॥

शोभना रुच्य - रूपत्वाद् द्राक्षा – सम्पर्क – लोभनाः।
आ – मुखात् पूर्ण - [5]संयावाः शरावाश्च बभासिरे ॥ ६४ ॥

[6]कटोरापूरितैर् यूषैः पीयूषैरवधारितैः।
अमुच्यताऽभितो बाष्पो व्यञ्जनैश् चित्त-रञ्जनैः ॥ ६५ ॥

सुखायाऽक्ष्णोरभूद् दूराद् मुखायाऽऽस्वाद - दायकः।
घनीभूत - पयःक्षोदस् सामोदस् तर्पको नसोः ॥ ६६ ॥

सद्यो धैनुक - जन्येन स्तन्येन परिकल्पितम्।
पायसाद्यं बभौ खाद्यं केविका - सार - वासितम् ॥ ६७ ॥

दर्शनाज्जनिताह्लादैर् वातादैर् निस्त्वचीकृतैः।
खचिता निचितास् तत्र रचिता मुद्ग-पिण्डिकाः ॥ ६८ ॥

अशिष्टं साधितं भिष्टं संसृष्टं लवणेन वा।
इष्टैर् घृष्टैश्च सम्पिष्टैर् भृष्टैर् मृष्टैश्च वस्तुभिः ॥ ६९ ॥

माद्यानीहैवमाद्यानि लोभयन्ति विलोचने।
समस्तान्यपि वस्तूनि क्षोभयन्ति स्म मानसम् ॥ ७० ॥

---

१. हिं० चटनियां। २. हिं० मसाला। ३. हिं० पतीड़।
४. हिं० वेसन। ५. हिं० हलवा। ६. हिं० कटोरा।

शाका नाकादिवानीतास् ताराः पाराश्च केचन ।
आस्वाद्यैव निगाद्यानां खाद्यानां तुलनामयु॥ ॥ ७१ ॥

नैकभेद - रस - प्राणैः प्रपाणैः रुचि - वर्धनैः ।
आकृष्यन्त समे काच - कलशस्थैश्च काञ्जिकैः ॥ ७२ ॥

सृक्किणी लेलिहानाश्च लोका लालाप्लुताननाः ।
बुभुक्षिता अपेक्षन्त कोष्ठ - सन्धुक्षिताग्नयः ॥ ७३ ॥

विकीर्णो भाजनोद्गीर्णो वाष्पो वातोर्मि - वेपितः ।
फण्डूल - मानसान् कुर्वन् भक्षकान् ध्रुवमाह्वयत् ॥ ७४ ॥

युग्मकम्

[1]गर्गरी - [2]गडुकी - [3]पात्र - [4]पातिली - [5]स्थगनोत्थितः ।
सङ्घर्ष - जनितो नादश् [6]चमसैर् वा [7]कडच्छकैः ॥

जनानां कर्षणं चक्रे सज्जानां सह - जग्धये ।
वर्धयन् हृदये भूयस् तर्षणं च प्रहर्षणम् ॥ ७५-७६ ॥

उपविष्टे जने रीत्या परिविष्टे च भोजने ।
विधाय वन्दनं वेगाद् आस्कन्दनमिवाऽभवत् ॥ ७७ ॥

निगलन्त इव प्रेष्ठं श्रेष्ठं यत् तच्च खादकाः ।
केचित्त विघ्नित - ग्रासान् श्वासांश्चाऽप्यभिमेनिरे ॥ ७८ ॥

युग्मकम्

अदनैर् मिलितैर् दिष्टया स्वादुता - सदनैरिह ।
अपिष्टैः रदनैरिष्टैर् ओदनैश्च प्रमोदनैः ॥

दूरं पोपूयमानास्या नैके मौक्यमशिश्रियन् ।
भक्षणाय मुखं, नेदं भाषणायेति वेदिनः ॥ ७९-८० ॥

तर्पणं रसनायाश्च सुवासस्य समर्पणम् ।
कस्य किं प्रीतये रस्यं शस्यं नान्नमकल्पत ॥ ८१ ॥

---

१. हिं० गागर । २. हिं० गड़वी । ३. हिं० परात । ४. हिं० पतीला ।
५. हिं० ढक्कन । ६. हिं० चमचा । ७. हिं० कड़छी ।

मुद्रितास्येषु गण्डूषी - कृतं तोयं मुहुर्मुहुः ।
अनेके मन्द्र - नादेन ततस्तूर्णमघूर्णयन् ॥ ८२ ॥

अङ्गुली - कूर्चकैः प्रायः पर्यमार्जन् यतस्ततः ।
अशनैः कश्मलान् केचिद् अ - शनैर् दशनास्तदा ॥ ८३ ॥

लीढोष्ठा रसनाग्रैश्च वसनान्तैरशोधयन् ।
सिक्तान्यास्यानि केऽप्यत्र गण्डूषान्तेऽग्रपाणिभिः ॥ ८४ ॥

विनोदाऽऽलाप-सम्पन्नाऽवसन्नाऽभूत् कथञ्चन ।
सविशेषा चिरादेषा ततः खादत - मोदता ॥ ८५ ॥

ततोऽभिसार्यं वदनानि पुंसां
मह - प्रतुष्ट्याऽरुणिमानमीयुः ।
परं नभो लोहितिमाऽभिलिप्तं
सर्वाङ्ग - सम्प्रीतिमिव व्यतानीत् ॥ ८६ ॥

सायन्तनोऽभून्न स शोणिमा खे
तारापतेर् द्राक् परमागमिष्णोः ।
सभाजनार्थं विबुधैः सुशोणम्
आस्तीर्णमत्रास्तरणं बभासे॥ ८७ ॥

"आशा मे भवता प्रभावमहसा साऽऽदित्य ! सम्पूरिता"
मत्वेत्येव कृतज्ञतां प्रथयितुं काङ्क्षन् निशानायकः ।
मुक्ता-रत्न-सहस्र-तारक-भृतं स्थालं नभोनामकं
दित्संश्च प्रणयोपहारमिव तत् पश्चादधावद् रवेः ॥ ८८ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-
विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते
'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'मातृगुप्ताभिषेक-
वर्णनम्' नाम चतुर्दशः सर्गः पर्यवसितः ॥

□

# पञ्चदशः सर्गः

नीचैः पतिताः पदयोर् यस्य कृपालोर् विभीषण-प्रमुखाः ।
उच्चैः पदमुपयाताः स जयति रामो जगत्प्राणः ॥ १ ॥

ब्राह्मे मुहूर्त्ते रहयन् प्रमादम्
प्रतीक्षमाणश्च न तूर्य - नादम् ।
स्नातः स प्रातः - स्मरणीय - नामा
सन्ध्यामुपासिष्ट शुभैरवन्ध्याम् ॥ २ ॥

देवर्षि - पित्रादिक - तर्पणान्ते
कृत्वाऽन्य - कृत्यानि च नैत्यिकानि ।
चिकीर्षुको ह्यस्तन - कार्यशेषम्
आस्थानमैषीद् भृतकाऽनुयातः ॥ ३ ॥

कृताऽर्हणस् तत्र स मन्त्रि - वृद्धैर्
उत्थाय चाऽन्यैरभिवन्दितः सन् ।
पुर - प्रवेशाय ततोऽनुवारं
सम्प्रार्थ्यताऽद्या[1]ऽऽत्ययिकाय सर्वैः ॥ ४ ॥

आहूय दूतं त्वरया परञ्च
धर्म्यः कृतज्ञत्व - वशंवदोऽसौ ।
रत्नोपहारान् प्रतिपाद्य पार्श्वे
व्यसर्जयद् विक्रम - भूमिभर्त्तुः ॥ ५ ॥

महार्हं - मुक्तामणि - रूपमेतद्
उपायनं प्रत्तमवेक्ष्य भर्त्ता ।
मा मंस्त माऽलं द्रविणोन्मदिष्णुम्
इत्याकलय्याऽथ स संललज्जे ॥ ६ ॥

---

१. परमावश्यकाय ।

प्रदेश - सम्पत्त्यनुरूपमेव
यद्यप्यहो ! प्राभृतमेतदासीत् ।
स स्वामिनस्तां समतां तु मत्वा
स्वं सर्वथा पातकिनं विवेद ॥ ७ ॥

आहूय दासानपरान् स तस्मात्
सामान्य - मूल्यानपि सङ्गतार्थान् ।
श्रद्धाऽर्हणीयानुपहार - भूतान्
सम्प्रेषयामास बहून् पदार्थान् ॥ ८ ॥

कौशेय - वासांसि सकम्बलानि
क्षौमाणि चीर्णानि च तारवाणि ।
विष्वक् - कलोत्कीर्ण - लता - द्रुमाणि
पौष्पाणि पात्राणि च दारवाणि ॥ ९ ॥

आदित्य - रूपाय च सप्त सप्तीन्
कस्तूरिका - केसर - वासनानि ।
[1]वानानि चाऽक्षोट - मुखानि [2]वाना-
न्यन्यानि भूयांसि तथा फलानि ॥ १० ॥

दातुर् दया - दक्षिणतादि - दिव्य-
गुणान् स्मरंस्तस्य च विक्रमस्य ।
पद्यान्युदश्रुः स्वयमेव पत्रे
विलिख्य नैजं प्रजिघाय भृत्यम् ॥ ११ ॥

कृतज्ञता - व्यञ्जन - पेशलेषु
स्नैग्ध्येन सिक्तेषु तथाऽश्रु - लेशैः ।
पद्येषु नूनं हृदपि स्वकीयं
स प्राहिणोत् प्राभृतवन् महात्मा ॥ १२ ॥

"स्वामिन्नहं यं तिमिराऽन्धितस् सन्
महार्मणि लोष्टमिति व्यजानाम् ।
तेनैव तावत् तिमिरं निरस्य
सोऽहं [3]कदर्थोऽपि कृतोऽस्मि सार्थः ॥ १३ ॥

---

१. शुष्काणि । २. वन्यानि ३. निरर्थकः ।

भूभृद् - वरः कण्टक - शूल - कीर्णो
योऽवेदि पाषाण - मृदां चयः प्राक् ।
[1]गर्भं - स्फुरत्काञ्चन - कन्दरो ऽद्य
मुग्धेन सम्प्रापि स रत्न - सानुः ॥ १४ ॥

नाऽवेदिषं विप्लुत - चेतनोऽहम्
अलौकिकं स्पर्श - मणेर् महत्त्वम् ।
तद् येन साधारण - गौरवं
सत् कालायसं काञ्चनतामुपैति ॥ १५ ॥

आदित्यमुद्दीपितमाह दीपम्
बालो विधुं क्रीडनकं तथा यः ।
दोषाद् दृशोः कापथमभ्युपेतो
हे नाथ ! बालः किल सोऽहमेव ॥ १६ ॥

त्वयेश्वरेणेश्वर एव देशे-
ऽनुक्रोश - शीलेन निवेशितोऽहम् ।
आत्मेति मत्वा विहितोऽस्म्यधन्यः
सौभाग्यभाजां धुरि कीर्त्तनीयः ॥ १७ ॥

ईशो हृदि स्थास्नुतया भवान् मे
शिवङ्करो यद्यपि वर्वृतीति ।
तथाऽपि दुर्दैव - वशात् समक्षं
सन्दर्शनैः सम्प्रति वञ्चितोऽस्मि ॥ १८ ॥

वसुन्धराऽऽखण्डल ! मण्डलेऽस्मिन्
का जागरूके त्वयि दण्डधारे ।
निसर्ग - सम्पाति - कृपा - कटाक्षे
स्यात् सम्प्रवेष्टुं विपदुन्मुखाऽपि ॥ १९ ॥

तस्मात् प्रजानाथ ! कृताऽवधानाः
हस्ताऽवलम्बैश्च समेधमानाः ।
त्वद्गौरवोत्सङ्गमुपेयिवांसो
वयं न बाला इव चिन्तनीयाः ॥ २० ॥

१. काञ्चन कन्दरः = स्वर्ण खनिः ।

अकिञ्चनः कश्चन किङ्करस्ते
यः पूर्वमासीत् प्रहरीति वित्तः ।
गतोऽपि तेऽनुग्रह - भाजनत्वं
स्वामिन् ! स एवाऽद्य तथैव चाऽस्मि ॥ २१ ॥

ईशाय नो किञ्चिदपि प्रदातुम्
ईशा यथार्थं कृपणा वयं स्मः ।
नूनं तदेतद् नृप ! भक्त्यनूनं
जानीहि पत्रं च फलं च सूनम् ॥ २२ ॥

खातः क्व दीनः क्व तथा [1]नदीनः
क्व ग्राव-लेशः क्व धराधरेशः ।
तथाऽप्यधीनः स्मृतिमात्मनीनः
नेयो विनेयोऽस्मि कथान्तरेषु" ॥ २३ ॥

इत्यथावर्तिते पत्रे पतदश्रु - मिषा तदा ।
प्रहितं तस्य दृष्ट्याऽपि भावनोपायनं पृथक् ॥ २४ ॥

ततो भरद्भिर् जयकार - नादैः
खं खण्डयद्भिर् धरणीं च पादैः ।
सैन्यैः प्रसन्नैः परिवेष्टितः सन्
स राजधानीं प्रति सम्प्रतस्थे ॥ २५ ॥

शूत्कारिणः शीलित - शैल - शृङ्गाः
संस्तभ्यमानाः सरलैः सरण्याम् ।
करम्बिताः केसर - सौरभैश्च
विष्वग् ववुः सीकरिणः समीराः ॥ २६ ॥

प्रोच्चैः - प्रदेशाद् धरणी - धराणाम्
पुरः पतन्तः प्रचुराः प्रपाताः ।
पयोधरेभ्यः पयसः स्रवन्त्यो
धारा अभासन्त वसुन्धरायाः ॥ २७ ॥

1. नदीनः—समुद्रः ।

क्वचिच्छतघ्नीव महाहिमानी
द्रोणीस्तथा ग्रामटिका दिगन्ते ।
विधूनयामास निपात - घातैर्
विभीषयन्ती च महानिनादैः ॥ २८ ॥

अभ्रा अदभ्रा उपगम्य शुभ्रा
[1]मलापहाभाश्च विरोपणार्थम् ।
प्रविश्य शैल - क्षत - खातकादौ
समानि चक्रुर् विषम - स्थलानि ॥ २९ ॥

उपेत्य सूक्ष्माऽम्बुमुचाऽधिमार्गं
वन - स्थली काऽप्यवगुण्ठ्यमाना ।
भर्त्तारमीक्ष्येव बभौ स्व - गात्रं
लज्जा - पटेनेव निगूहयन्ती ॥ ३० ॥

विस्तार्य शाखाऽग्र - भुजाश्च देव-
दारु - द्रुमास् तत्पथ - पार्श्व - रूढाः ।
स्तब्धा अतिष्ठन् परिरिप्सयाऽस्य
देवस्य सुस्वागत - कारिणः किम् ? ॥ ३१ ॥

ददर्श सोऽद्रीन् पुरतो विभिन्न-
वर्णाऽश्म - रेखाऽङ्क - लसन्नितम्बान् ।
ध्रुवं धरायाः कृपया ऽधरायास्
तापाऽपहाराय निबद्ध - कक्ष्यान् ॥ ३२ ॥

तार - स्वरेणाऽप्रतिमां समृद्धि
जेगीयमाना इव मण्डलस्य ।
नानद्यमाना झर - निर्झरिण्यः
प्रामोदयन् पार्थमिमं पदव्याम् ॥ ३३ ॥

कूलङ्कषा - मूलक - निर्झराणां
कोलाहलः कोऽपि कलः ककुप्सु ।
तन्मण्डलाऽवग्रह - वारणार्थम्
अमोघ आसीदभिचार - मन्त्रः ॥ ३४ ॥

---

[1] हि०—मरहम ।

स्तुताः सिताऽभ्रैः क्वचिदद्रि - मध्ये
निपीडिताः क्वापि तुषार - भारैः ।
चीत्कारिणो दुद्रुवुरम्बु - धारा
विदाय - वाचं यदि वा ब्रुवाणाः ॥ ३५ ॥

एको झरोऽद्रेरुदरं विदार्य
निष्क्रम्य चेषत् कुटिलं विसर्पन् ।
वल्मीक - निर्गमुक्त - शुभ्र - देव-
सर्पस्य लीलां सुतरामुवाह ॥ ३६ ॥

अधित्यकास्वत्र तुषार - भित्तिम्
वेगेन वात्या पुरतो नुदन्ती ।
अनीनशद् हा ! जड - चेतनानि
मूर्त्तेव रौद्री प्रलयङ्करी भ्रूः ॥ ३७ ॥

हिमावृता भूर्ज - मुखा द्रुमाश्च
नैश्चल्यमाप्ताः कटक - स्थलीषु ।
प्रवात - घातात् [१]त्रसुरा इवाऽद्रेर्
हृदोपगूढा अभवन् विदूरे ॥ ३८ ॥

हैयङ्गवीनोपमिता हिमानी
शैलस्य नैव व्यगलत् तदानीम् ।
जाड्येन लोकं विकलं विलोक्य
परं तदीयं दयया द्रुतं हृत् ॥ ३९ ॥

लेखा जलानां विधि - लोक - तुल्य-
तुङ्गाऽद्रि - शृङ्गेभ्य उपाव्रजन्त्यः ।
देशस्य भाले विधिना कृताऽङ्काः
सौभाग्य - लेखा नियतं बभूवुः ॥ ४० ॥

हिमोत्करस् तूल - कणायमानः
पपात मौलौ गुरु - भूभृतोऽस्य ।
मौलौ सहर्षं नव - भूभृतश्च
लोकैर् विकीर्णं शुचि - पुष्पवर्षम् ॥ ४१ ॥

---

१. त्रसुराः = भीताः ।

मदाऽभितापाऽऽकुलिता इवोच्च-
काचाभ - नीहार - शिलास्थलीषु ।
अदुद्रुवन् [1]पुष्कलकाश्च भीता
वेगं मिमाना इव मारुतस्य ॥ ४२ ॥

वनौषधि - घ्राण - मदोद्धतः सन्
स्खलद्गतिर् नैकविधं प्रसर्पन् ।
लाम्पट्यमाविष्कुरुते स्म वातः
परामृशन् कूट - कुचान् धरायाः ॥ ४३ ॥

द्रुत - स्रवद् - हैमजलाः प्रकाण्ड-
रन्ध्रेषु कूजद् - विहगा द्रुमाश्च ।
रोरुद्यमाना इव तत्र नैशीम्
आवेदयन् शीतिम - वेदनां स्वाम् ॥ ४४ ॥

एवं बृहद् - वाहन - सन्निषण्णो
दृश्यानि पश्यन् विविधानि मार्गे ।
ग्राम्यान् स्मितैः प्रत्यभिनन्दयन् स
पुरस्य सीमां निकषाऽभ्युपैषीत् ॥ ४५ ॥

एकत्रिता राज - सभाजनाय
सम्मर्दमेकत्र जना अवापुः ।
परत्र चाऽऽरामतटाऽयनादौ
उद्वेलितो मञ्जिम - सागरोऽभूत् ॥ ४६ ॥

अनन्य - सामान्यमिहैन्दवं तं
बाला दधुः कञ्चन रूप - राशिम् ।
यासामहम्पूर्विकया दिदृक्षा
विलासिनो लालसतामनैषीत् ॥ ४७ ॥

नूनं स नेदिष्ठ - नग - स्थलीभ्य
आदाय नीहार - शिला विरिञ्चिः ।
वैदग्ध्यवान् निर्मितवान् सजीवा
वामा इमा याः सितिमाऽभिरामाः ॥ ४८ ॥

---

१. कस्तूरिका-मृगाः ।

कपोल - पालीषु वराङ्गनानाम्
ओष्ठेषु चेतस्सु च पाणि - पादे ।
फलेषु सर्वत्र दलेषु चाऽस्मिन्
रागस्य साम्राज्यमिवाविरासीत् ॥ ४९ ॥

स्पर्शेऽपि वैवर्ण्यमुपेयिवांसि
पुष्पाणि बालाऽर्क - तपःसहानि ।
नितम्बिनीनां वपुषां यथार्थं
न सौकुमार्येण तुलामुपेयुः ॥ ५० ॥

सर्वं सलीलं समभूत् - सुरम्यं
तासां न रूपेष्विह तारतम्यम् ।
पश्यन्निमां वा सुभगोऽपि वा तां
[1]नव्योत्सवोल्लासमिवाऽभ्यगच्छत् ॥ ५१ ॥

आ - पादशीर्षाल् लवणिम्नि लीनास्
ता वीचयो विभ्रम - वारिराशेः ।
हर्ष - प्रकर्षाऽश्रु - निमग्न - नेत्रान्
व्यधुः प्रदेशान्तर - पान्थ - सार्थान् ॥ ५२ ॥

मनोज्ञता - न्यक्कृत - देवदारा
माराऽस्त्र - धारा इव तास् तरुण्यः ।
कटाक्षितान् प्राक् सुकृतैः कुमारान्
[2]नेत्र-त्रिभागेण ततोऽभ्यपश्यन् ॥ ५३ ॥

सञ्चारिणी मोहन - वल्लरीह
सौन्दर्य - सीमेव कुमारिकैका ।
दध्रे कुचौ मङ्गल - कुम्भ - कल्पौ
हृदि प्रवेशाय मनोभवस्य ॥ ५४ ॥

सौन्दर्य - सारेण विनिर्मितायां
यस्यां वशीकार - विलक्षणायाम् ।
अवश्यमुर्वश्यपि विश्वकर्त्रा
सृष्टा तदुच्छिष्ट - खलेन साऽभूत् ॥ ५५ ॥

१. नव्यः=नूतनः ।  २. कटाक्षेण ।

लावण्य - सर्गस्य विधातुरस्या
निधान - भूमाविव कल्पितायाम् ।
रम्भादि - निर्माण - विधि - प्रयासो
यथार्थतोऽभादनुवाद एव ॥ ५६ ॥

सद्यस्क - कौमार - परिष्कृतैका
[1]प्रौढिम्नि चाऽन्या सुरसत्वमाप्ता ।
लीला - स्मितैः काऽपि समुल्लसन्ती
मनो मुनेश्चाऽपि तृणीचकार ॥ ५७ ॥

काचिन् नवोढा सुलभाऽतिलज्जा
सभ्रूविलासं समवेक्ष्य तिर्यक् ।
आप्याययच् छ्रोत्र - पुटान् कयाऽपि
वाचाऽधर - स्पर्श - सुधार्द्रयेव ॥ ५८ ॥

तद् - गल्लयोः पद्म - पुटाऽनुरूपौ
कूपौ शरावाविव शीधु - गर्भौ ।
धन्यस्य कस्याऽपि हि चुम्बनार्थं
धात्रा कृते न्याय्य - पदस्य चिह्ने ॥ ५९ ॥

कर्णामृतं नाम बभूव यस्याः
कन्दर्प - सम्बोधनमेव किञ्चित् ।
दीप्तार्चिरासीच्च तदङ्ग - कान्तिस्
त्राता ततः शील - तृणस्य कोऽत्र ॥ ६० ॥

वाढं नवोढाऽभिनवं स्मरस्य
विजृम्भितं व्यज्य विलास - हासैः ।
अमोघमाकर्षण - मन्त्रमेवा-
ऽलङ्कार - झङ्कार - मिषात् पपाठ ॥ ६१ ॥

नारीत्वमाप्ता शशिनः प्रभेव
लोकैक - लावण्य - निवास - भूमिः ।
शरीरिणी वा सुकुमारताऽसौ
दिव्यौषधिर् विश्व - विमोहनेऽभूत् ॥ ६२ ॥

[1] प्रौढिम्नि — पूर्णे यौवने ।

पद्म - प्रसूनाद्युपमान - भाजा
प्रत्येकमङ्गेन च काऽपि तन्वी ।
दृशोः पुरस्तात् प्रलयं नयन्ती
स्मराऽस्त्रशालेव बभावनन्ता ॥ ६३ ॥

रूपेण केनाऽपि विलक्षणेन
धात्रा कृताऽभूत् तरुणीह काचित् ।
तां दिक् - चतुष्के प्रशिशंसिषन् स
नूनं प्रपन्नश्चतुराननत्वम् ॥ ६४ ॥

पीतेन हाला - चषक - द्वयेन
द्विता मदान्दोलित - मानसाः स्युः ।
पक्ष्म - द्वये तून्नमिते तयेदम्
प्रेङ्खोलितं भूतलमेव चाऽभूत् ॥ ६५ ॥

युग्मकम्

रम्भोरुरेका चरणाऽरुणिम्ना
सरोज - सौभाग्यमुपेक्षमाणा ।
सौन्दर्य - दृप्ताऽमर - कन्यकाना-
मतिद्वयी मूर्ध्नि पदं चकार ॥

श्रोतुं गिरोऽस्या मधुसात्कृतास्ता
कर्ण - द्वयीमप्रचुरां विदित्वा ।
"विधेहि नः श्रोत्रमयं शरीरम्"
इत्यर्थयन्ते स्म विधिं कुमाराः ॥ ६६-६७ ॥

श्रीः रूपिणी कैरव - काननानां
सम्पिण्डिता काचन कौमुदी वा ।
रणद्भिरत्नाऽऽभरणैः स्व - रूपम्
उद्घोषयामास जगद् - विजेतृ ॥ ६८ ॥

बाणैः पटोश्चाऽपि धनुर्धरस्य
कामं न विध्येत कुतोऽपि लक्ष्यम् ।
तस्यास्तु कार्श्यं विहता घमोघैः
कङ्काल - शेषास् [illegible] ॥ ६९ ॥

पुष्पैः पिशङ्गैश्च परिच्छदैश्च
प्रसाधिता विभ्रम - चञ्चलाऽन्या ।
अलुप्त - शीला तरुणी [1]तदात्वे
रेजे परीता मदनाग्निनेव ॥ ७० ॥

तरङ्गिता काऽपि बलि - त्रयेण
दृशो भृशं शीतलतां नयन्ती ।
इन्दीवराक्षी समभूद् विलासा-
ऽवगाह - वापी मदन - द्विपस्य ॥ ७१ ॥

कूटाऽधिरूढ - द्युति - दर्शनीया
काचिच्चरिष्णुः स्मर - सम्पदासीत् ।
भयातिरेकादिव लम्पटेभ्यो
मुहुर् मुखं या स्थगयाम्बभूव ॥ ७२ ॥

राकापतेर् बिम्बमवेक्ष्य लोकः
पश्चात् क्षणं पश्यति विश्वतस्तत् ।
तदाननं वीक्ष्य तु निद्रितोऽपि
विलोकयामास तदेव नित्यम् ॥ ७३ ॥

बभूव सा तूत्कलिका दिदृक्षोः
प्राक् प्रेक्षकस्यार्त्तिरनन्तकाला ।
द्रष्टुः परा दिव्य - सुखाऽनुभूतिर्
उदासिनो दुर्गतिरेव साक्षात् ॥ ७४ ॥

सृष्टिर् नवा विश्वसृजो विचित्रा
काचित् कुडी कुञ्चित - काक्ष - पाशैः ।
गृहोत्कता - वेगवतोऽपि लोकान्
चिराय चक्रे किल कीलिताङ्गान् ॥ ७५ ॥

सौवर्ण - भूषा च सुवर्ण - मूर्त्तिर्
भङ्ग्या सुमैः संस्कृत - केश -कूर्चा ।
चित्राऽम्बरा चित्र - कलेव चैका
चित्र - स्थितान् [2]सारणिकानकार्षीत् ॥ ७६ ॥

---

1. वर्तमाने । 2. पान्थान् ।

ज्योत्स्नाऽवदातैर् वसनैः पिनद्धा
चान्द्रीव मूर्त्तिर् वसुधाऽवतीर्णा ।
केनाऽपि चाऽस्पृष्ट - तनुः कुमारी
पीयूष - वृष्ट्या नयने सिषेच ॥ ७७ ॥

सा प्रीति - दूतीं कुटिलां स्व - दृष्टिं
चिक्षेप यस्यां दिशि चारु - शीला ।
चेतांसि मुग्धानि चकार तस्यां
लीलाजुषां मन्थरितेन्द्रियाणि ॥ ७८ ॥

अस्वीकृता स्त्री कुसुमायुधेन
तत्राऽभवत् काऽप्युपमान - बाह्या ।
एकाऽप्यहो ! या नयनाऽयनेन
विवेश सद्यो हृदयेषु पुंसाम् ॥ ७९ ॥

सुवर्ण - रूपाभरणोज्ज्वलाऽन्या
कंन्दर्प - सम्पत्ति - निधान - भूता ।
लावण्य - लुण्टाक - कुलैर् विविक्ते
लाम्पट्य - वृत्त्या प्रतिपाल्यते स्म ॥ ८० ॥

आरामिका पुष्पचय - प्रवृत्ता
कुञ्जे ध्रुवं कङ्कण - किङ्किणीनाम् ।
क्वाणस्य [1]कूटेन जगाविहैका
प्रवासि - पेयं मदनाऽवदानम् ॥ ८१ ॥

काञ्ची - क्वणश्चाऽत्र वराङ्गनाया
विक्षोभमन्तःकरणेषु तन्वन् ।
स्वाऽपूर्व - रूप - प्रतिमल्लतायै
आहूतिरासीज् जयघोषणा वा ॥ ८२ ॥

एका सिता राजत - सूक्ष्म - पत्र
परिष्कृता पायस - पिण्डिकेव ।
स्नानार्द्र - सक्तांशुक - दर्शनीया
लालायितान् लालसकांश् चकार ॥ ८३ ॥

---

1. व्याजेन ।

विक्षिप्य काक्षान् परितस् सलीलम्
फुल्लोत्पलं कापि जगच्चकार ।
न्यासैस्तथाऽन्या पदयोः पृथिव्यां
सरोजिनी - राजिमिव व्यतानीत् ॥ ८४ ॥

अदूर - नीहार - समीर - शीतात्
काये कुमार्याः - पुलक - प्रभेदः ।
उद्भिद्यमान - स्मर - बीज - जात
प्ररोह - पुञ्जः स्फुटमावभासे ॥ ८५ ॥

वेलोच्छलन्नूतन - यौवनाया
वेणीद्वयं नो हृदि लम्बमानम् ।
नागी - युगं वै कुच - कुम्भ - गुप्तं
तच्छील - सौभाग्य - निधिं ररक्ष ॥ ८६ ॥

याऽक्ष्णोर् विलासैर् मृदु-कुञ्चनाद्यैर्
अलम्बला जेतुमिमां त्रिलोकीम् ।
स्वा - स्त्री कथं नाम तयाऽनिमेषा
[1]तौल्यं भजेत् प्रस्तर - पुत्रिकाभा ॥ ८७ ॥

स्मरस्य संमोहन - सायकोऽस्याः
कायो विरिञ्चेः रचना - प्रपञ्चः ।
दृशोश्च वर्षो हिम - वालुकायाः
श्री - ह्री - भरान्मन्थरतामुपैषीत् ॥ ८८ ॥

कण्डूयमानोरु - तटं कुमारी
काचिन्नवा काचमयाऽङ्गुलीभिः ।
स्मरस्य [2]चाऽप्यक्षमिणो न हा ! कान्
निन्ये कृपा - भाजनतां वराकान् ॥ ८९ ॥

बालातपेनाऽपि विशीर्यमाणौ
गल्लौ पयोज - प्रतिपक्ष - मल्लौ ।
सा निह्नुवाना वसनाञ्चलेन
बाला ऽप्रदिम्नाऽपि नमस्कृताऽभूत् ॥ ९० ॥

1. तुलनाम् । 2. असहिष्णून् ।

वेणी परस्याः पुरतो विमुक्ता
चेष्टा - विलासैर् मृदु वेपमाना ।
अन्तः सुगुप्तं ज्वलतः स्मराग्नेः
साक्षादवालोक्यत धूम - धारा ॥ ९१ ॥

लोकोत्तराकर्षण - कारणेन
लावण्य - लेपैर् नव - यौवनेन ।
प्रसाधिता काऽप्यनवद्य - देहा
मुधैव मौग्ध्यात् कुसुमान्यचैषीत् ॥ ९२ ॥

बाला [1]वृषस्यन्त्यथ काचिदत्र
सूक्ष्मांशुक - व्यञ्जित - गोप्य - गात्रा ।
वेण्या मुहुस्तज्जघनं स्पृशन्त्या
रज्ज्वेव मुग्धानपि सञ्चकर्ष ॥ ९३ ॥

एकाऽपि खण्ड - प्रलयाय याऽलं
नितम्बिनी काऽप्यनवद्य - रूपा ।
तोये सरस्याः प्रतिबिम्बिताऽसौ
द्वैतं गता वेद्मि न किंनु कुर्यात् ॥ ९४ ॥

एकैकशोऽप्यत्र वराङ्गनानां
गात्रं स्मरस्याऽस्त्रमभून्नवीनम् ।
प्रत्नेषु पञ्चस्वपि सायकेषु
मन्दादरो येन स सम्प्रपन्नः ॥ ९५ ॥

संसार - रूप - प्रभुतां गताभिस्
ताभिर् बलाद् [2]दर्पक - दीपिकाभिः ।
क्रीताः कटाक्षैर् यदि किङ्करीकृताः
लोकास्तदेदं किमु कौतुकावहम् ॥ ९६ ॥

संवीक्षमाणोऽप्यभितो विलास-
लावण्य - लीला द्रढिमाऽचलेन्द्रः ।
निःसङ्गतामेव वशी विरक्तस्
तोयेऽब्जपत्र - प्रतिमां स तेने ॥ ९७ ॥

---

१. कामातुरा । २. दर्पकः = कामः ।

प्रत्युद्गताभिः परितः प्रजाभिः
प्रीति - प्लुताभिः परिपूज्यमानः।
क्रमात् स तासां हृदयेन साकं
नवो नरेशो नगरं विवेश ॥ ९८ ॥

पुरा चिराद् भर्तृ - वियोग - हेतोः
[1]पुरा नितान्तं गतयेव मौक्यम्।
स्फीती - भवत्प्रीत - जनोच्च - वाचा
वाचालताऽलाभि नृपेऽभ्युपेते ॥ ९९ ॥

भूभृद् - दिदृक्षोत्कलिकाऽऽतुराणाम्
वक्त्राऽम्बुजाताऽऽकुलितैर् वधूनाम्।
रथ्याऽऽपणागार - गतैर् गवाक्षैर्
व्यजीयताऽनङ्ग - निषङ्ग - शोभा ॥ १०० ॥

अचेतना येऽत्र सचेतनाश्च
स्थास्नु - स्वभावाश्च चरिष्णवस्ते।
महोत्सवेऽस्मिन् विविधैर् विधानैस्
सर्वेऽपि साहाय्य - कृतो बभूवुः ॥ १०१ ॥

पुनः प्रतिध्वान - मिषाज्जनोक्तम्
आम्रेडयद्भिर् जयकार - घोषम्।
महीधरैरुच्छ्रित - मन्दिरैश्च
गुणीकृतं गौरवमुत्सवस्य ॥ १०२ ॥

निष्कासितैरुत्सुक - सुन्दरीणाम्
मुखारविन्दैस् स्तवकायमानान्।
आदाय सौधानि तदा गवाक्षान्
स्थितान्यभूवन्नभिनन्दनाय ॥ १०३ ॥

गृहा ध्वजैर् वात - विधूयमानैर्
द्वाराग्र - बद्धैर् व्यजनोपमानैः।
सञ्चारिणामुत्सव - यात्रिकाणां
स्वेदं सखेदं सततं व्यनैषुः ॥ १०४ ॥

---

[1] पुरा = नगरी।

मार्गे महीपस्य तथा च मौलौ
विकीर्य वृक्षाः कुसुमानि तावत् ।
[1]देवार्चना - पुण्य - फलाऽधिकार-
भाजः प्रयाता इव चारितार्थ्यम् ॥ १०५ ॥

अनुक्रमं सैनिक - सङ्घ - गुप्ते
श्री - मातृगुप्ते कृतमङ्गलार्चे ।
अन्तः प्रविष्टे सुचिराद् विचेष्टं
सद्योऽभवद् राज - गृहं सजीवम् ॥ १०६ ॥

विकासयन् कैरव - चक्रवालम्
उल्लासयन् नीर - निधि तदाऽलम् ।
रेजे श्रिताऽस्तेतर - शैल - सानुः
सुधाऽभिवर्षी भुवि शीत - भानुः ॥ १०७ ॥

ततः शशि - प्रभा - शुभ्राऽपिधानेनाऽपवारितम् ।
निःशङ्कं नगरं भेजे निशाङ्के सुख - शायिकाम् ॥ १०८ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण
संदृब्धे, 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'पार्थिव-पुर-प्रवेशो'
नाम पञ्चदशः सर्गः समाप्तः ॥





१. देवः = राजा, देवता ।

# षोडशः सर्गः

आक्रान्तं [1]प्रतिभावता स्थिरतया प्रोच्चैः पदं राजताम्
भूयाद् भूय इयं च भूमिरभितः सौवर्ण - सम्पद्भृता ।
उद्बुद्धाः समुपोढ - जाड्य - तमसो लोकाश्च सञ्जानतां
शून्यं च प्रतिभासमानमखिलं पोपूर्यतां प्रीतिभिः ॥ १ ॥

यशो - महो - दीपित - दिग् - विदेशे
प्राणोपमेऽस्मिन् नृपतावुपेते ।
तमोवृतोऽसौ सहसा प्रदेशः
सचेतनः स्फूर्ति - मुपाजगाम ॥ २ ॥

सानाथ्य - मात्रं स्पृहयालवो जनाः
स - मन्त्रि - सामन्त - गणाः समेऽस्य ।
[2]साहित्य - कृत्या प्रभवन् विरोध-
राहित्य-भाजः स्थिर-शास्ति-कार्ये ॥ ३ ॥

भाग्योदये सत्यपि साधु - शीलो
ऽनुत्सिक्त-चेताः स्मित-मुग्ध-मूर्तिः ।
अपालयद् बान्धव - निर्विशेषम्
प्रजाः सदाचार - पथ - प्रवृत्तः ॥ ४ ॥

क्षान्त्या च शान्त्याऽथ च सत्य - सत्त्व-
मुख्यैर् विशेषैः शरणी - कृतेन ।
खर्वी - कृतास् तेन ततश्च सर्वे
ऽप्युर्वी - भृतो भूतल - भूतपूर्वाः ॥ ५ ॥

प्रवर्तयन्नार्य - वरैः पुराणैस्
सौजन्य - मार्गे प्रहते प्रजास्ताः ।
पादर्श - भूतं चरितं दधानो
विवेश भीमां न स पाप - सीमाम् ॥ ६ ॥

---

१. सूर्येण ; धीमता । २. सहायकाः ।

स आत्म - शासी वशिनां धुरीणो
नृपोऽपि निन्ये समयं मुनीव
उपागमत् संयम - कील - नद्धं
न विप्लवं शीलमथाऽदसीयम् ॥ ७ ॥

वाचा कृपा - कोमलया विपन्नान्
सन्दृष्ट - कष्टः सुखयन् समस्तान् ।
पात्रे यथा - कालमसाववर्षद्
देवोऽर्थिताऽर्थान् मघवत्समस्तान् ॥ ८ ॥

स ग्रास - वासो - वसु - वास - दानैर्
उल्लासयन् सर्व - जनान् जितात्मा ।
प्रपन्न - पीडा - परिताप - हर्ता
सदाऽर्थं - नैस्पृह्यमलं व्यतानीत् ॥ ९ ॥

मनुष्य - माहात्म्य - महानिधानम्
पुण्यैः प्रजानां पृथिवीं प्रपन्नः ।
सुप्राप इत्येव स सर्व - कालं
न कस्यचिद् दुर्लभ - दर्शनोऽभूत् ॥ १० ॥

गुणाढ्य - सम्मान - करे च विद्या-
विद्योतकेऽस्मिन् सति विप्रबुद्धे ।
तुषार - गौरः प्रबभौ प्रदेशः
सरस्वती - स्नेह - पटान्त - लीनः ॥ ११ ॥

अकर्कशत्वाद् मधुसात्कृतानि
सौहार्द - वात्सल्य - करम्बितानि[1] ।
आप्याययन् सत्य - जुषोऽमृतानि
वचांसि कं तस्य न सूनृतानि ॥ १२ ॥

अनन्य - सौजन्य - सुधा - समुद्रः
स सत्य - सन्धः स्थिरता - सुराद्रिः ।
प्रावर्तयत् सूक्ष्म - मतिः सतां मतः
प्रान्ते व्यवस्था निरुपद्रवाः सुखाः ॥ १३ ॥

---

१. करम्बितानि — मिश्रितानि ।

यतात्मनस् तस्य समस्त - राज्ये
स्तेयाऽस्तिताऽप्यस्तमुपैत् प्रभावात् ।
न्यषेधि येनाऽथ च पण्य - वीथ्याम्
वृथा कपाटावरणं रजन्याम् ॥ १४ ॥

स्वयं सरण्या स सता प्रसर्पन्
व्यतिक्रमं नैव चकार नीतेः ।
प्राज्येऽस्य तस्मान्न कुतोऽपि हन्त !
राज्ये सदाचार - विपर्ययोऽभूत् ॥ १५ ॥

विवेक - वैगुण्यमसौ विमुञ्चन्
नोनुद्यमानः पथिकृद्भिरार्यैः ।
न चाटुकारैर् न विटैर् न बन्दी-
वृन्दैरसद् - वर्त्मनि नेय आसीत् ॥ १६ ॥

स्तुत्यैः स कृत्यैस् समुपेत्य नित्यं
सौहित्यमव्याजमुदात्त - शीलः ।
निःश्रेयसस्याधिगमाय नूनं
[1]निःश्रेणिकां साधयति स्म साधुः ॥ १७ ॥

स दर्शनेनैव दरिद्रितानां
हरन्मुख - म्लानिमुदार - चेताः ।
मेने निधिष्वेव न रक्षितव्याम्
भव्यां विभूतिं विभजन् स्वकीयाम् ॥ १८ ॥

शुभार्थिनां हर्म्य - गतोऽपि गम्यः
परैः परोक्षेऽपि बभूव नम्यः ।
प्रसाद - सौम्यं विकचं सदाऽऽस्यं
दध्रे दृशाऽन्यांश्च नयन् स दास्यम् ॥ १९ ॥

नैष्ठुर्य - लीना करुणा - विहीना
व्याधाश्च दीनाऽबल - दत्त - बाधाः ।
निरीक्षिता एव महीक्षिताऽत्र
जाता अहिंसा - व्रत - दीक्षितास्ते ॥ २० ॥

---

[1] सोपानम् ।

चित्तेन वाचा क्रियया तथाऽसौ
क्रूरेऽपि सत्त्वे करुणायमानः ।
विभूषितो विक्रम - वैदुषीभ्यां
चक्रे शमैः शीततरं प्रदेशम् ॥ २१ ॥

क्षमा - पतिः कोऽप्यतुलः क्षमावान्
[1]अपश्चिमान् दिव्य-गुणान् स बिभ्रत् ।
नित्यं नवैः सत्त्व - दयाऽवदानैर्
वपुर् न कस्योत्पुलकं चकार ॥ २२ ॥

सौम्यात्मनः सर्व - सुखैषिणश्च
तस्याऽनुभावेन जिताश्चिरस्नाः ।
देश - द्विषन्तो विषयान्तरस्था
वश्या अकिञ्चित्करतामुपेयुः ॥ २३ ॥

लोकैर् व्यधीयन्त तदाऽत्र यागाश्
छागादि - हत्या - बहुलाः प्रदेशे ।
भूत्वाऽप्यहो ! निष्करुणाः स्वयं तु
यैस्तेऽमराणां करुणामकाङ्क्षन् ॥ २४ ॥

विलोक्य तद् [2]वैशसमेष भूपो
ऽनुक्रोश - रूपो मृदु - मानसत्वात् ।
लोकेऽपि मुग्धेऽन्ध - परम्पराभिः
कुर्वन् कृपां चिन्तयति स्म चित्ते ॥ २५ ॥

"हा ! मेऽधिकारः सकलोऽप्यपार्थः
कीदृक् किमीयश्च मृषाऽस्मि पार्थः ।
अद्याऽपि यद् दुःखद एष [3]मारः
प्राप्त - प्रसारः परितः प्रदेशम् ॥ २६ ॥

चित्तेन हिंसा यदि वाऽपि वाचा
विधीयमाना व्यथते समस्तान् ।
तां वीक्षमाणोऽपि न वेपते यः
पुमान् स हेयः पशुवद् गणेयः ॥ २७ ॥

१. उत्तमान् । २. हिंसाम् । ३. हिंसा ।

प्राणीह पीडा क्रियया यया तु
यः कोऽपि काल - त्रितये प्रयाति ।
ख्याताऽत्र हिंसा, कुरुतेऽघ - माता
निष्कण्टकं या निरयस्य मार्गम् ॥ २८ ॥

सैषाऽनृत - स्तेय - परिग्रहादेः
कन्याऽस्त्यनन्याऽभिहिता जघन्या ।
तां यो व्रती मुञ्चति तस्य मुक्ति-
मुक्ता ध्रुवं मुष्टि - गतैव वेद्या ॥ २९ ॥

हिंसा - पिशाची पिशित - प्रियाऽपि
देव्याः स्वरूपं परिधाय सौम्यम् ।
प्रमोहितान् पाप - पथ - प्रवृत्तान्
हा ! ऽऽकर्षतीयं मृगतृष्णिकाभा ॥ ३० ॥

"[1]मारीव मारी मम मण्डले मा
क्वचित् प्रयासीत् प्रथिमानमेषा ।
तस्मात् [2]क्षयोदर्क - धराऽविलम्बम्
उन्मूलनीया विष - वल्लरीव" ॥ ३१ ॥

इत्थं व्यवस्थाप्य दृढं दयालुस्
सामन्त - सभ्याऽनुमतः स्व - देशे ।
समादिशड् डिण्डिम - घोषणाभिः
प्रजा अहिंसा - व्रत - पालनाय ॥ ३२ ॥

[3]अमार - मार्गाऽनुचरोऽमराणां
सम्प्रेरणाभिश्च विदांवराणाम् ।
स सौमनस्यं सफलं नराणाम्
माङ्गल्यमैच्छच्च चराचराणाम् ॥ ३३ ॥

आदर्श - भूतान् विदधे हितार्थी
यथार्थ - संज्ञान् बहुशोऽध्वरान् सः ।
आमोदयंस्तद् - हविषा दिगन्तान्
आमोदयन् प्राणवतश्च देवान् ॥ ३४ ॥

---

१. मृत्युः = हत्या । २. विनाश-परिणाम-युक्ता । ३. अमारः = अहिंसा ।

अजात - शत्रोरपि तस्य राज्य-
सीमासु सैन्यास् सततं सुसज्जाः ।
रणेषु वा द्वेषणं - मारणेषु
हिंस्रा अमन्यन्त न मुक्त - शङ्काः ॥ ३५ ॥

अथ प्रजापः सहितोऽल्प - सैन्यैस्
स्वयं गिरि - ग्राम - निवासिनीनाम् ।
साक्षाद् दिदृक्षुः स दशां प्रजानाम्
आटीत् समन्तादपि दीर्घं - दृश्वा । ३६ ॥

समन्ततः सन्तत - वल्लि - पाशैः
स राज - मार्गैः कवली - कृतानि ।
क्वचिल्लुलोके कुसुमैरनेकैः
केदार - कूलानि विचित्रितानि ॥ ३७ ॥

आ - दृष्टि - तृप्तेः प्रसूतिं गताभिर्
लसन्महा - शालि - परम्पराभिः ।
मग्नाभिरीषत् सलिले ललङ्घे
स्थलानि सम्यक् सुरभी - कृतानि ॥ ३८ ॥

गच्छन् पदव्यां प्रकृति - प्रियोऽसौ
¹'उल्लोल' - नाम्नीं सरसीं ददर्श ।
राजीव - राजी - मुकुलैरुरोजैर्
या राजमाना नयने ररञ्ज ॥ ३९ ॥

दिग् - व्यापिनी पुष्करिणी प्रसन्ना
पार्श्वे प्रपन्नान् प्रतिबिम्बिताऽङ्गान् ।
हृदि स्वकीये विनिवेश्य हर्षम्
प्रादुष्करोतीव तरङ्ग - भङ्गैः ॥ ४० ॥

प्राञ्चो 'महापद्मसरो'ऽपि तस्यास्
संज्ञां पुरावृत्त - विदो यदाहुः ।
तत्सत्यमेवाऽनुतटं वृताया
पद्माऽधिवासैर् अगणेय - पद्मैः ॥ ४१ ॥

१ हिं० वुल्लर झील ।

[1]कारण्ड - [2]कादम्ब - कदम्बकानां
रुत - च्छलैः पुष्करिणी तदाऽसौ ।
आदाय फुल्लानि कुशेशयानि
प्रत्युद्गता स्वागतमित्युवाच ॥ ४२ ॥

तारङ्ग - तोये तरले विलीन-
बिम्बा अमुष्यास् तरवः प्रतीरे ।
बाहूपविष्टाः शिशवो जनन्या
प्रेङ्खोल्यमाना इव लीलयाऽऽसन् ॥ ४३ ॥

व्याजेन सा कैरव - कुड्मलानाम्
प्रकाशितोल्लास - विहास - दन्ता ।
[3]भर्तारमालोक्य पुरोऽभ्युपेतम्
परं प्रसन्ना रमणीव रेजे ॥ ४४ ॥

छायाभिरद्रि - द्रुम - वल्लरीणां
स्वयं प्रकृत्या लिखितेव, कान्त्या ।
व्यडम्बयद् दर्पण - मण्डिता सा
कलाविदः कांचन चित्र - मूर्त्तिम् ॥ ४५ ॥

प्रायः प्रजा - प्रेम - परम्पराभिः
प्रोते प्रदेशे परिवर्धमाने ।
खे बिम्बितेऽदर्शि जलेऽत्र साक्षाद्
द्यावा - पृथिव्योः परिरम्भ - लीला ॥ ४६ ॥

अतुष्ट - दृष्टया रसितानि दूराद्
दिनेऽत्र सुप्तानि सिताऽम्बुजानि ।
ताराश्च मग्ना निशि बिम्ब - रूपा
अचूचुरन् मौक्तिक - मज्जिमानम् ॥ ४७ ॥

तस्यास् तथा तोय - तले तरन्त्यस्
तता व्रतत्योऽतितरां विदूरम् ।
मातुं वृथैव प्रथिमानमस्याः
कलाज्ञ - सूत्रप्रतिमानमीयुः ॥ ४८ ॥

---

१. हि॰ मुर्गाबी । २. कादम्बाः — कलहंसाः । ३. नृपं : पतिम् ।

तटान्त - सङ्क्रान्त - लता - द्रु - पत्रा
मध्ये लसन्मीन - मराल - भूषा ।
सा [1]सूचि - शिल्पा वितता विरेजे
काश्मीर - लक्ष्म्या विशदेव शाटी ॥ ४९ ॥

रोचिष्णवोऽम्भः - कणिका दलेषु
[2]पात्री - विशालेषु मृणालिनीनाम् ।
उपायनत्वेन नृपाय दातुम्
मुक्ता इवासन् विधृता सरस्या ॥ ५० ॥

तारुण्य - लावण्य - तरङ्गिताऽङ्गा
वराङ्गनाः पोत - गृहोपविष्टाः ।
दिवो विमानैरधुनैव तस्याम्
उपागता अप्सरसो यथाऽऽसन् ॥ ५१ ॥

ततः सरस्या [3]'दल' – नामिकाया
आलोच्य सीमाऽतिग - चाकचक्यम् ।
विवेद चित्रीयित - चेतनोऽसौ
वापीमिमां नन्दन - काननस्य ॥ ५२ ॥

मीनाऽरविन्दाऽब्ज - मिलिन्द - सेव्या
निधानभूता मदनायुधानाम् ।
सा निष्प्रतिद्वन्द्विक - शोभगाऽऽसीद्
यथार्थं'मुल्लोल' - सहोदरीव ॥ ५३ ॥

विलङ्घ्य तां ग्रामटिकादिकेषु
पृष्ट्वा च पुंसां परिहृत्य पीडाः ।
स्थितेऽस्त - मस्ते स गभस्तिहस्ते
विश्रान्ति - हेतोः शिबिरं विवेश ॥ ५४ ॥

स ग्रामकाऽऽराम - तटे तदानीं
स्थितेऽर्धरात्रे सहसा विनिद्रः ।
शुश्राव शासी शिबिराऽविदूरे
शार्दूल - शब्दं ककुभः कषन्तम् ॥ ५५ ॥

---

१. सूचिकर्मद्वारेण पुष्पाद्यलङ्कृता । २. हिं० थाली । ३. हिं० डल झील ।

तदोर्ध्वं - देशाद् विहिताऽवतारा:
शैलेश - चूडा - श्लथ - शुभ्र - हारा: ।
बभासिरे निर्झर - नीरधारा:
दिवोऽभ्युपेता इव देवदारा: ॥ ५६ ॥

फेनाऽवदाता: प्रचुरा: प्रपाता:
वज्राहताद्रि - व्रण - पट्टिकाभा: ।
शिखाधृतानां हिम - कम्बलानां
दशा अवृश्यन्त विलम्बमाना: ॥ ५७ ॥

तस्मिन् दिने कश्चन रक्षि - सैन्यै:
शार्दूल - शावो जननी - वियुक्त: ।
बम्भ्रम्यमाणो विलपन् वराक
आवेष्टित: पञ्जरके न्यरोधि ॥ ५८ ॥

भटै: कृपायां कृपणैर् नृपस्य
रुद्ध: स पार्श्वे पट - मण्डपस्य ।
विडम्बयन् बाल - बिडाल - वाचम्
पोत: प्रयातुं प्रसभं प्रयेते ॥ ५९ ॥

बेभीयमान: सुतरां स शाव:
स्तब्धाक्ष उच्चै:कृत - कर्णकोटि: ।
अनुक्षणं मातरमाव्रजन्तीं
प्रतीक्षमाणोऽनुदिशं ददर्श ॥ ६० ॥

समुक्षिते लोचन - वारिणाऽलं
स पिञ्जरे रुद्ध - वपुर् वराक: ।
प्रतिक्रियायां शिशुरक्षम: सन्
सङ्घट्टयामास शिरोऽररेण ॥ ६१ ॥

स्तनन्धयो मन्दतया विरावी
[1]नम्यैर् नितान्तं स खरैर् नखै: स्वै: ।
मुग्धो मुधा लोहमयी: शलाका:
मुहुर् बिभङ्क्षन्निव वीक्ष्यते स्म ॥ ६२ ॥

---

१. हिं० लचकदार, कुञ्चनशील ।

आह्वानमाक्रन्दनमेतदीयम्
पर्यश्रु कुर्वंश्च सचेतसोऽन्यान् ।
श्रुत्वाऽपि यन्न द्रवतामुपेतम्
अयोमयं पञ्जरमेकलं तत् ॥ ६३ ॥

अद्याऽपि पूर्णेन स पान - पात्रे
सैन्यैः सदैन्यैः पयसाऽऽहितेन ।
प्रक्लिन्न - पुच्छश्च विशुष्क - कण्ठ
उन्निद्र आशा - रहितो बभासे ॥ ६४ ॥

संवीक्षमाणा विकला तमेव
वनाद् वनं वेगतरं व्रजन्ती ।
दृढ - स्तनी दुग्ध - भरोदयेन
शार्दूल - दारा विललाप भूयः ॥ ६५ ॥

महीरुहाणां मृदु - मर्मरेऽपि
विशङ्कमाना शिशुमभ्युपेतम् ।
सोपेक्षमाणाऽवट[1] - झाट - झुण्टान्
पिपेष पादैर् [2]द्रुनखांश्च लोष्टान् ॥ ६६ ॥

विधाय नीचैर् वदनं विरावैः
शृङ्गाणि शैलस्य विधूनयन्ती ।
साऽङ्के क्वचिन् निह्नुत-बाल-वत्सां
वनाऽवनिं चापि जिघत्सुराभात् ॥ ६७ ॥

प्रेष्ठा जविष्ठा प्रतिवाचमेव
पोतस्य पातुं प्रबलाऽभिलाषा ।
पुटीकृतोच्चैःश्रवण - द्वयी सा
पादान् पुनः स्थावरतामनैषीत् ॥ ६८ ॥

अमन्दमाक्रन्दन - नर्दनं तत्
स शुश्रुवान् हन्त ! तदीयमेव ।
सत्त्वाऽनुकम्पी सुकुमार - चेता
वृद्धश्चकम्पे न भयाऽभिभूतः ॥ ६९ ॥

---

१. हिं० गढ़े-कुञ्ज-झाड़ियां । २. कण्टकान् ।

स दत्त - कर्णो बहिरभ्युपेतः
स - हेति - हस्तोऽवहितो ऽभिपश्यन् ।
शुश्राव कञ्चिज् झटिषु भ्रमन्तं
जन्तुं रुवन्तं यदि वा रुदन्तम् ॥ ७० ॥

जिज्ञासमानोऽथ विलम्ब - वर्जं
शौवापदं तं विकटं विरावम् ।
कञ्चित् समाहूय स रक्षि - वीरम्
आज्ञापयामास ततोऽनुसर्तुम् ॥ ७१ ॥

प्रत्येत्य स प्राह कृताऽभिवादः—
"शार्दूल - शावोऽद्य भटैर् गृहीतः ।
सोऽत्रैव पार्श्वेऽस्ति च पञ्जरस्थः
सैषाऽस्य [1]माऽन्विष्यति तं रुवन्ती ॥ ७२ ॥

एकाधिपत्यं गिरि - काननस्य
धत्ते बलिष्ठा सहिता स्व - भर्त्रा ।
सैषा विशङ्का च विभीषयन्ती
दृप्ता प्रभो ! नोऽद्य वशङ्गतेति" ॥ ७३ ॥

तद्वाचमाकर्ण्य दयालु - शीलो
विचिन्त्य विश्लेष - दशां स्व - मातुः ।
वात्सल्य - मूर्त्तिः स्मृत - वत्स - लीलो
द्रवीकृतात्मा पुनराचचक्षे— ॥ ७७ ॥

"सा स्वामिनी स्याद् विपिनस्य हिंस्रा
मदोदया वाऽप्यदयाऽस्तु कामम् ।
चित्तेऽतुलां कोमलतां वहन्ती
माताऽपि वर्वर्त्ति हि वत्स - कामा ॥ ७५ ॥

मतीश्वरैर् मूर्तिमती मताऽत्र
मितेः परस्ताद् ममतैव माता ।
वाचस्पतेश्चाऽपि गिरां दवीयो
माहात्म्यमस्याः क्व कथा परेषाम् ॥ ७६ ॥

१. मा=माता ।

माता शिशुं पाययति स्व - रक्तं
गर्भे प्रसवतं च पुनः प्रसूतम् ।
सा स्नेह - रूप - स्तन - दुग्धधारा-
सूत्रेण बध्नाति विमुक्त - वाञ्छा ॥ ७७ ॥

आजीवनं वत्सलताऽञ्चलेन
सन्तापितं तं परिपाति वत्सम् ।
आकालिकीं चाऽस्य चितां निजाऽस्त्रैः
स्वप्नेऽपि निर्वापयतीव माता ॥ ७८ ॥

तस्माद् विलापी वियुतो जनन्या
स्तन्याऽभिलाषी वर - वीर ! गत्वा ।
शार्दूल - शावः स विलम्ब - वर्जम्
विमुच्यतां बन्धनतो वराकः" ॥ ७९ ॥

विसंवदन् धृष्ट - मतिः स आह—
"स्वैरं समायात्विह पोत - माता ।
बध्येत सैषाऽपि च वागुरायाम्
वध्येत वा पञ्जरकोपयाता" ॥ ८० ॥

तथा ब्रुवाणं विकटं भटं तं
क्षिति - क्षिदेश क्षममाण एव ।
मेने मनाक् क्षोभित - मानसोऽपि
[1]नाऽवद्यमेतत् सुलभं जने यत् ॥ ८१ ॥

सजीव - जाते सुतरां दयालुः
रक्षा - व्रते दीक्षित - पेशलात्मा ।
प्रैक्षिष्ट काक्षेण स रक्षिणं तं
किञ्चित् कृपा - कोप - कषायितेन ॥ ८२ ॥

श्रुत्वा विरावं च विलोक्य शावम्
माता प्रजाता परमं प्रसन्ना ।
प्राक् प्रस्नुतेभ्यः प्रवहत् प्रमोषितम्
पयोधरेभ्यस्समपाययत् पयः ॥ ८३ ॥

---

१. अवद्यम् = दूषणम् ।

स्पर्शं परेषामपवित्रितं तम्
मत्वैव मन्ये परिशोद्धुमिच्छुः ।
सा लेलिहाना मृदु मुद्रिताक्षी
भू - शायिनी तन्मयतामुपैषीत् ॥ ८४ ॥

मन्दं स्पृशद्दन्त - मुखात्त - वत्सा
ययौ न वेगादथ पूर्ववत् सा ।
आशंसमानेव शुभानि तेषां
लोलोच्यमानाऽनुपदं कृतज्ञा ॥ ८५ ॥

सर्वातिशायित्वमुपाऽश्नुवानैः
संसेवनीयो गुण - पक्षपाती ।
विदांवराणां च कलाविदां स
सम्मान - दान - व्यसनी बभूव ॥ ८६ ॥

अथैकदोपेत्य पृथु - प्रतिष्ठश्
श्री - 'भर्तृमेण्ठः' कविरद्वितीयः ।
काव्यं 'हयग्रीव - बधा'ऽभिधं स्वम्
आमूलचूलं समदर्शयत् तम् ॥ ८७ ॥

ततः कृतिं तां पदशः स शृण्वन्
पेप्रीयमाणः सुतमां सचेताः ।
प्रारम्भतोऽन्तावधि साऽवधानो
निन्दां [1]नुतिं वा न चकार तस्याः ॥ ८८ ॥

चिकीर्षवः किञ्चन धीर - धुर्याः
प्रायेण वाचंयमतां भजन्ते ।
स्थलेषु धीरं प्रवहद् गभीरं
नीरं नदानां कुरुते न नादम् ॥ ८९ ॥

एवङ्कृतेऽसौ कवि - चक्रवर्ती
तत्रागमं वन्ध्यमिवाऽभिजानन् ।
आशा - प्रणाशाऽऽकुलितान्तरात्मा
मानी समौनं कृपणोऽनुदध्यौ — ॥ ९० ॥

---

[1] नुतिः — प्रशंसाम् ।

"नरेश्वरोऽयं नितरामसभ्यः
को नागरोऽस्मिन् गरिमोपलभ्यः ।
ग्रामी ध्रुवं प्रांशु - पदेऽपि तिष्ठन्
मूल्यं मणीनां न विवेक्तुमीष्टे" ॥ ९१ ॥

प्राशाद्रि - कूटात् पतिता स इत्थम्
मन्दं मुखान्तः परिदेवमानः ।
स्फुरत्कर - व्यञ्जित - दुःखवेगो
भूयः स्वकीयां रचनामचैषीत् ॥ ९२ ॥

सूत्रे क्रमात् पुस्तक - पत्रकाणि
प्रोतुं प्रवृत्तेऽथ च भर्तृमेण्ठे ।
विद्वद् - विधेयस् तदधो धरेशो
न्यधापयत् काञ्चन - पात्रमेकम् ॥ ९३ ॥

पीयूष - साराऽत्र रसस्य धारा
वेलां व्यतिक्रम्य समुच्छलन्ती ।
न जातु निर्यातु वृथेति पात्रं
न्यधायि नूनं नृपतेर् निदेशात् ॥ ९४ ॥

दृष्ट्वैव तत् सूक्ष्म - मतिः कवीन्द्रो
यथार्थतामेकपदे बुबोध ।
प्राग् गर्हणाच् चेतसि चाऽधिपस्य
कृतागसं स्वं बहु धिक् - चकार ॥ ९५ ॥

महीक्षितैवं रस - मार्मिकेण
सभाजितः सन् स्मित - सौम्य - वाचा ।
भूयो वितीर्णं विभवं प्रभूतम्
मेण्ठो द्विरावृत्तमिवाऽभिमेने ॥ ९६ ॥

निर्मापयामास स 'मातृगुप्त-
स्वामी' - त्यभिख्यं मधुसूदनस्य ।
देवालयं यस्य तथा व्ययार्थं
ग्रामान् प्रभूतान् प्रददौ प्रभावान् ॥ ९७ ॥

तन्मन्दिरस्योच्च - शिखाऽग्र - शूलो
नाऽघौघमेवाऽस्य जघान कर्तुः।
श्रद्धा - जुषोऽन्यानपि तूर्ध्वं - लोक-
यानाय सङ्केतयति स्म मार्गम् ॥ ९८ ॥

पुण्यार्थिना तेन बहुत्र पाक-
शाला विशाला रचिताः प्रदेशे।
स्वादीयसी यासु वितीर्यते स्म
विमुक्त - हस्तं [1]कृशराऽऽगतेभ्यः ॥ ९९ ॥

एकं तु दीनो [2]बृगलं मुखेन
तत्राऽभ्युपेतो न्यगलत् प्रसन्नः।
द्वित्रैः शुभाशीर्वचनैः परञ्च
संवर्धयामास मुहुर् महीपम् ॥ १०० ॥

इत्थं तथा नैत्यिक - धर्म - कर्म-
हेमाऽचलस्तेन समाचितोऽभूत्।
यत्साधनेनाऽस्य सुरालयस्तु
पदान्तर - प्राप्य - कपाट आभात् ॥ १०१ ॥

राज्येऽदसीये दृढ - दण्ड - नीतौ
सौहार्द - सूत्रेण मिथो निबद्धे।
पराधिकारं न जहार कश्चिन्
नोद्वेजयामास बलोर्जितोऽन्यान् ॥ १०२ ॥

म्लानिर् न तस्मिन् वदनेषु पुंसां
ग्लानिर् न तावत् सदनेषु काचित्।
द्रोहो न मोहो न च पारदार्यं
क्रौर्यं न चौर्यं समभूदनार्यम् ॥ १०३ ॥

समृद्धि - सौभाग्य - समन्वितत्वाद्
बभूव वादोऽत्र न चाऽभियोगः।
धर्मासनस्था अपि प्राड्विवाका
जजृम्भिरे कर्मकृतो वराकाः ॥ १०४ ॥

---

१. हिं० खिचड़ी। २. ग्रासम्, पं० बुरकी।

शीतानि तोयान्यभितो वहन्त्यो
गीतानि नादेन जगुः स्रवन्त्यः ।
क्रीतानि पुण्य - क्रियया प्रजाभिः
पीतानि चैक्ष्यन्त सुखाऽमृतानि ॥ १०५ ॥

धर्मासनस्थे सति मातृगुप्ते
न्यायाय कौचित् पुरुषौ कदाचित् ।
पुण्याऽवतारौ [1]सुतरामगृध्नू
प्रीतावुपैतां स - कपोतहस्तम् ॥ १०६ ॥

पृष्टोऽथ वादी विनतो न्यवेदीत्-
"जीर्णं गृहं यत् प्रतिवादिनोऽस्मात् ।
क्रीतं मया प्रापि तदीय - भित्तौ
दीनार - मुक्ताभरणादि गुप्तम् ॥ १०७ ॥

दत्तं गृहस्यैव मयाऽस्य मूल्यं
तस्मान्न चाऽयं विभवो मदीयः ।
मयाऽनुरुद्धो मुहुरर्थितोऽपि
हठाज् जरीगृह्यत एष नेमम् ॥ १०८ ॥

लोकम्पृणाऽनुग्रहशील ! तस्माद्
हे नाथ ! तं दापयितुं प्रसीद ।
पराधिकाराऽऽक्रम - पातकाच्च
गोपाय मा द्राङ् निरये निपातात् ॥ १०९ ॥

कृतेङ्गितेन प्रतिवादिनाऽथ
प्रावाचि भूयो विनिमय्य शीर्षम् ।
"स्वामिन् ! यथालब्धमिदं निशान्तम्
विक्रीतमस्मात् समवापि [2]चाऽर्घः ॥ ११० ॥

भूयस् ततो मूल्यमिदं ग्रहीतुम्
भूयः प्रभो ! धर्मधराऽत्र कोऽहम् ।
[3]वित्तं तदेतत् सुकृतैः पुराणैर्
वित्तं महात्मानमिमं प्रयातु ॥ १११ ॥

१. अगृध्नू=अलुब्धौ । २. अर्घः=मूल्यम् । ३. वित्तम्=लब्धम् ।

प्राग् द्विन - वर्षेभ्य इहत्य - धन्यात्
स्वामित्व-भाजो बहु-मन्दिराणाम् ।
एतत् प्रभो ! वेश्म मयाऽपि तावत्
क्रीतं यथावत् समभूत् पुराणम् ॥ ११२ ॥

वीक्ष्योन्मदिष्णुं[1] सहधर्मिणीं स्वां
दुःखायमानस् स [2]परुद् धनाढ्यः ।
निःश्वास - वातैः शमितात्म - वर्तिर्
देवाऽनपत्यो [3]मरिमाणमापत् ॥ ११३ ॥

एवङ्कृतेऽनेन धनेन नाथ !
किं नाम कार्यं मम दीर्घ - दर्शिन् ! ।
तद् रक्षितुं वैतरणी - पथान्मां
देवः प्रमाणं स्पृहणीय - सत्त्वः" ॥ ११४ ॥

तद्वाचमाचम्य पुरश्च पश्यन्
देवौ स देवाविव मूर्त्तिमन्तौ ।
अव्याज - कारुण्य - मृदुत्व - मूर्त्तिः
प्रेङ्खोलिताऽन्तःकरणो बभूव ॥ ११५ ॥

विकल्प - सङ्कल्प - जडीकृतात्मा
सोऽचिन्तयत्—"किं नु विभज्य देयम् ।
धर्मं - क्रियायां विनियोक्तुमाभ्याम्
एतद् धनं भाति न राज - हार्यम्" ॥ ११६ ॥

शुभार्थिनामत्र सदाऽभिगम्ये
नम्ये तथाऽऽख्यान - परे नरेशे ।
बद्धाञ्जलिः कापि विवेश काक-
तालीयवद् व्याकुलिता पलिक्नी ॥ ११७ ॥

मन्ये महीपस्य वितर्क - बाधाम्
व्यपोहितुं तत्र वपुष्मतीयम् ।
सम्प्रेषिता कारुणिकेश्वरेण
लोकोत्तरा काचन शक्तिरासीत् ॥ ११८ ॥

---

१. उन्माद-रोगिणीम् । २. परुत् — गतवर्षे । ३. मृत्युम् ।

सा व्यञ्जयन्ती विनयं [1]जरण्डा
रण्डाह—"राजन्! मम वित्तमेतत्।
तत्साक्षिणी चाऽथ कथा व्यथाया
प्राकर्णनीयाऽवहितं मदीया ॥ ११९ ॥

पुरः स्थिताभ्यामभियोग - भाग्भ्याम्
आभ्यां स्व-वृत्तैर् दिवि गामुकाभ्याम्।
क्रीतस्य योऽभूद् भवनस्य नाथः
स एव नाथः समभून्ममाऽपि ॥ १२० ॥

जायापती वेश्मनि पैतृकेऽस्मिन्
[2]धूपायितौ चापि निरन्वयत्वात्।
पद्मा - प्रसादात् प्रमदं वहन्तौ
चिराय वेलामनयाव हा! ऽऽवाम् ॥ १२१ ॥

वाणिज्य - हेतोर् भगवन्! कदाचिद्
गते विदेशे मम जीवितेशे।
हिरण्यमेतद् भवनस्य भित्तौ
न्यधायि तास्कर्य - भयान्मया यत् ॥ १२२ ॥

एकाकिनी तावदहं तदैव
दैव - क्रुधो लक्ष्य - पदं प्रपन्ना।
विक्षिप्त - चित्ता नितरां न जाने
कुत्राऽवसं हन्त! कदा व्यधां किम् ॥ १२३ ॥

कृतान्त - कारुण्य - कटाक्षिताऽन्ते
सुप्तोत्थितेवाऽऽसमवाप्त - संज्ञा।
तदाऽन्य - गेहे स्थितया मया च
श्रुतं यथा - वृत्तमिहार्त्तिदं नो ॥ १२४ ॥

ममोपचाराय बहु व्यवस्यन्
व्ययीकृताऽशेष - धनस्तपस्वी।
चिन्ता - कुकूलानल - दह्यमानो
हा! देवभूयं दयितः प्रयातः ॥ १२५ ॥

१. वृद्धा। २. दुःखेन धूपमानौ ज्वलन्तौ।

अनिष्ट - दृष्ट्याऽपि यथार्थतोऽहं
दिष्टेन दृष्टा किमु चेतनाऽऽसम् ।
आश्लिष्ट - कण्टेव विनष्ट - चेता
किं नान्तकस्याऽन्तिकमभ्युपेता" ॥ १२६ ॥

आकर्ण्य तत् कारुणिको 'जरिण्या
दृष्ट्वा दशां दारुण-दुःख-दात्रीम् ।
तातप्यमानस् त्वरयैव तस्यै
समार्पिपत् तद् द्रविणं परीक्ष्य ॥ १२७ ॥

एवं स्वयं पुण्य - पथाऽध्वगस्य
शीलानि सीमन्तयतः प्रजानाम् ।
माहात्म्य - भाजोऽस्य महीश्वरस्य
न्यायः शुभोदर्कतरो बभूव ॥ १२८ ॥

हैमाऽवगुण्ठनमपास्तमिव क्रमेण
चूडाभिरुज्झित इव क्षिमा प्रपातैः ।
स्वैरं विमुक्त-जडिमा स्पृशति स्म वात-
उद्भिद्यमान-हृदयानि वन-स्थलीनाम् ॥ १२९ ॥

आलोकि चाऽथ सुचिरान्मलिनिम्नि मग्नं
तज्जग्मिवत् किमपि कोकिल - कण्ठ - कौण्ठ्यम् ।
छिद्रेषु मुद्रित - मुखाः कृपणा मिलिन्दाः
सौक्ष्म्येण वीक्ष्य च मनाग् बहिरभ्युपेताः ॥ १३० ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'प्रजा - परिपालनं'
नाम षोडशः सर्गः समाप्तः ॥

◻

१ वृद्धायाः ।

# सप्तदशः सर्गः

सौवर्णं कमलं यथा रुचिरयं कासार - कल्पेऽम्बरे
व्याकोचं भजते च कैरव-घनी-प्रस्पर्धि-तारातति:।
दीनानां मुख-पङ्कजानि च मुदा फुल्लन्ति यस्येङ्गितै:
सोऽयं वो हृदयाम्बुजे विलसतु श्रीपद्मपाणिः प्रभुः ॥ १ ॥

इति सुखं स्वमुपेक्ष्य महीपतौ
सकल - जीवहिताय कृतोद्यमे ।
अनुदिनं जनताऽत्र नवोत्सवैस्
सुखमयं समयं गमयन्त्यभूत् ॥ २ ॥

रवि - करैरथ कूर्चक - कोमलैर्
उपगतैर् विकृतिं च समीरणैः ।
शिशिर - दुर्भगता परिमार्जिता
सुम - धुरं मधुरं ववृधे दिनम् ॥ ३ ॥

भुवि च खे निभृतं निविशन् मधुर्
विकसितेषु पलाशि - लतादिषु ।
विलसितेषु मुखेषु च जीवता-
मुदपतद् भवनेषु वनेषु च ॥ ४ ॥

अनुदिशं जनताऽपगत - त्रपा
ऽनवहिताऽऽश्रम-दशा व्यलसत् क्वचित् ।
क्वचन पांसुषु पान्थ - जनोऽलुठत्
किमघना मधुनाऽऽचरितं ह हा ! ॥ ५ ॥

उपगतो मुख - बाष्प - कवोष्णतां
सुरभि - मन्थरितस् स समीरणः ।
सतत - चुम्बित - शैल - शिखश्शनैर्
व्यकचयत् सुमनांसि मनांसि च ॥ ६ ॥

चिर - हृता निज - कौसुम - सम्पदं
समधिगम्य शनैः पुनरर्पिताम् ।
अलि - कलैर् वनिका व्यवृणोद् मुदम्
ऋतुषु मानवता नवतामिता ।। ७ ।।

परिपतत्सरघा - मुखरीकृताम्
मधुप - राग - पराग - मधूत्सवाम् ।
परभृतो मुदितस् सुम - वाटिका
कल - रुतैश् शतधा समवर्धयत् ।। ८ ।।

मधु - धना परिवेष्टय वन - स्थलीम् ।
रद - पटलैः रचितैश् शिविरैर् यथा
हरण - लालसयेव [1]मलिम्लुचास्
समुदिता मुदिता मधु - मक्षिका ।। ९ ।।

मधुपवद् विहरन् दयिता - सखो
मुदमवाप विलोक्य स मालिकः ।
किसलय - प्रसवैर् मृदु - हासिनीम्
भवन - मालतिका - लतिका - श्रियम् ।। १० ।।

मधु - वरेऽभिगते गृह - वाटिका
व्यभजताऽमित - सौरभ - सम्पदम् ।
[2]समिर - दूत - मुखेन दिवानिशम्
प्रियतरे नगरे नग - रेखिणि ।। ११ ।।

ऋतु - महे कलिकाऽभिनिमन्त्रिताः
चपल - चित्रपतङ्ग - कन्यकाः ।
किमपि कौसुम - पात्र - निवेशितम्
पपुरितो मधुरं मधु - रन्धितम् ।। १२ ।।

मधु - मदैः प्रतिबोधित - मन्मथैर्
जित - जगद् - हृदयाः कल - गुञ्जनैः ।
न तुतुदुर् मधु - भूपति - बन्दिनः
कमलिनो मलिनोञ्छन[3] - वृत्तयः ।। १३ ।।

---

१. चौराः । २. समिरः=समीरः । ३. उञ्छनं=चयनम् ।

परिमलं सुम - [1]सम्पुट - सम्भृतम्
वहति वाटक - वाट - तटे [2]जपा ।
नव - वधूरिव सौभग - संस्कृता
तरुणिमाऽरुणिमाऽञ्चित - विग्रहा ॥ १४ ॥

उपहितेऽथ हिते कुसुमाकरे
सुखमलाभि भृशं विषमेषुणा ।
मलिनिमानमलं वहता मुखे
प्रहरणैः रहितेन हि तेन हा ! ॥ १५ ॥

विपुल - सौरभ - सम्प्लव - वीचयः
समुदिताः सहसा वन - वारिधेः ।
क्रमभितर्प्य सुमाऽऽसव - संस्तुता
अमदयन्नदयन्न सचेतनम् ॥ १६ ॥

पथिक - कम्पन - चम्पक - वल्लिकां
स्मर - विलास - सखीमथ मल्लिकाम् ।
विधुर एव विलोक्य स पुष्पिताम्
विकलतां कलतां च ह हा ! ऽगमत् ॥ १७ ॥

मदन - दाह - शमाय जले ध्रुवं
झष - वधूमिव मज्जन - रञ्जनीम् ।
समवलोक्य रहो वरवर्णिनीं
स्थितमहो ! युवकेन वकेन [3]वा ॥ १८ ॥

उपगते समये स्मर - शासने
जगदगादखिलं मदयित्नुताम् ।
विटपिनाऽपि यतो मरुदूर्मिभिः
प्रचलता च लताऽभजत श्लिषाम् ॥ १९ ॥

विविध - राग - पराग - पराशिभिर्
मृदुल - गन्धवहैस् स्मृत - होलिकैः ।
सुम - रसैः समरञ्जि दिशां मुखम्
विलसितं लसितं जड - चेतनैः ॥ २० ॥

---

१. हिं० डिबिया । २. हिं० गुलाब । ३. वा=इव ।

दर - विकासि - सुमोदर - मज्जका
मुहुरुदञ्चित - पक्षतयोऽलय। ।
अगणयन् रसिका न तनु - क्षयम्
उपवने पवनेन विलोडिते ॥ २१ ॥

विहसतेव विलोक्य विदेशिना
क्रकच - दन्तुर - बिन्दु - समैस् सुमैः ।
[1]करुणिनो वियुता वकुलेन किं
न तरुणा तरुणा विफलीकृता। ॥ २२ ॥

अविदिताऽन्यजनै। शुशुभे लता
किसलयैः कुसुमैश्च परिष्कृता ।
स्थितिमतीव रहस्यभिसारिका
परिलसद् - [2]गहना गहनान्तरे ॥ २३ ॥

यदपि शील - विलुण्ठन - लम्पटाः
समभवन् न भयात् पथिका। परम् ।
सुरभि - मायिक - योगवशाद् हृदि
प्रियतमां [3]यतमामपि मेनिरे ॥ २४ ॥

कवचितो भव वीर ! यथेच्छया
दृढतयाऽऽलि! बधान च कञ्चुकम् ।
निशितता विदिता किमलौकिकी
न कुसुमेषु सुमेषु - युधाजितः ? ॥ २५ ॥

क्रकचिका - समया [4]समया वनीम्
विकच - केतक - पत्रक - धारया ।
व्यतनुत व्रणितं रणितं भृशम्
अलि - कुलं मधु - मोषण - लोलुभम् ॥ २६ ॥

यदथ मेदुरितं दुरितं मुहुर्
नग - विभा - हरणाच्छिशिरस्य तत् ।
प्रतिबभौ कुपिता विपिन - स्थली
विकच - किंशुक - वह्नि - शिखाऽऽवृता ॥ २७ ॥

---

1. करुणार्हाः । 2. गहना — भूषणम् । 3. यां कामपि । 4. समीपे ।

पुलकिना युवकेन सुम - स्रजो
वितरता कृपरोन करे परणम् ।
मृदुतया द्रुतयाऽङ्गुलिना स्मितं
किमपि मालिक - बालिकया कृतम् ॥ २८ ॥

विधुरितोऽभजताऽत्र यदोदयम्
अनिमिषाक्ष इमं स उदैक्षत ।
सरसिजं च दिवाऽमनुतेव हा /
विधुरितो वसुधां दयितामयीम् ॥ २९ ॥

सलिल - दोहद - सार - समर्धिता
दर - दलन्मुकुला नव - मालिका ।
दशन - दर्शन - वञ्चनया ध्रुवम्
व्यतिगतं शिशिरं समपीडयत् ॥ ३० ॥

मञ्जारचूडाऽङ्गद - शिञ्जिताङ्गी
[1]कन्दर्प - दूती - रशना शनैः सा ।
व्यक्त - स्मिता [2]कौसुम - सौरभेण
विवेश देशे मधुमास - लक्ष्मीः ॥ ३१ ॥

गोधूम - मूर्ध्नो मृदु - मञ्जराणि
चञ्चूभिराच्छिद्य शुका द्विकाश्च ।
करिष्यमाणं कृषकैः परस्तात्
प्रारेभिरे भूत - बलिं प्रसह्य ॥ ३२ ॥

गोधूम - भूमिं परितः परीतैः
शुष्कैः शितैः शस्य - शिरःस्थ - शूकैः ।
बभौ प्रविष्टे मधुमास - मित्रे
केदार - लक्ष्मीः पुलकाञ्चितेव ॥ ३३ ॥

का का वधूरद्य पतिं विदेशात्
प्रत्यागतं प्राप्स्यति धम्मिरणीति ।
काका वराका पुरतो गृहाणाम्
प्रसूचयन् वाशितमाचरन्तः ॥ ३४ ॥

---



१. कन्दर्पदूती = कोकिला । २. काकः ।

पुष्पाणि वाटेषु च वाटिकासु
शनैः शनैरङ्कुरणोन्मुखानि ।
अधीरयन् किञ्चन विप्रयुक्तां
नाथोऽभ्युपेता[1] मधुना सहेति ॥ ३५ ॥

विचित्र - रङ्गास् तनवः पतङ्गास्
तरङ्गिताङ्गा दिवि रोरुवन्तः ।
उत्सङ्गितान् प्राग् युव - दम्पतीभिः
कुञ्जान् विशन्तोऽप्यशनैरपैषुः ॥ ३६ ॥

समापतन्त्यः सरघास् समन्ताच्
छत्रेषु शश्वद् मधु न व्यचिन्वन् ।
किं तर्हि तास् स्थास्नुतया स्व - पार्श्वे
रिरक्षिषन्ति स्म मधुं विमुग्धाः ॥ ३७ ॥

रहस्सु सङ्गे कलिकाऽऽदिमेऽसौ
चञ्चल्यमाने चिर - चाटुकारे ।
शिलीमुखे गुञ्जन - रञ्जनेऽपि
नोन्मुद्रयामास मुखं नवीना ॥ ३८ ॥

माध्वीक - गुञ्जा - स्वर - धार - वर्षैर्
विस्मारयन्तीव भव - प्रपञ्चम् ।
मधोर् महिम्नाऽद्य मिलिन्द - माला
जाता ध्रुवं पाञ्चशरी विपञ्ची ॥ ३९ ॥

चैतन्य - हीनं शिशिरेण दीनं
गोपाल - बालैरपि शोचनीयम् ।
पुष्प - प्रलम्भात् कृत - जृम्भकं तद्
वनं युवीभूतमिव व्यभासीत् ॥ ४० ॥

फलाशया सम्पतितैरधीरैर्
वाचालतामागमितानि कीरैः ।
न कानि मूकानि च काननानि
बभासिरे सम्प्रति साऽऽननानि ॥ ४१ ॥

---

1. अभ्युपेता = उपायास्यति ।

वनेषु वल्गत्पवनेषु विष्वक्
पदे पदे चोपवनेषु मन्दा ।
सुमेषु - शिञ्जा[1] - जनितेव शिञ्जा[1]
मिलिन्द - गुञ्जा मदयाम्बभूव ॥ ४२ ॥

शिलीमुखाली - मुखरीकृतेषु
लीनानि वापी - नलिनी - वनेषु ।
मरालकानां मिथुनानि पक्षान्
मिथोऽलिखन् चञ्चु - पुटैश्चिराय ॥ ४३ ॥

स्कन्ध - स्थितौ मर्कट - दम्पती तौ
प्रावर्त्य रज्जूकृत - लम्बि - पुच्छौ ।
कण्डूयमानौ नखरैर् मिथश्च
ददंशतुः कर्ण - लतां म्रदिम्ना ॥ ४४ ॥

गाढेषु गुल्मेषु सुगोप्य गात्रं
रोमन्थ - मग्नैर् मुकुलीकृताक्षैः ।
सक्तैर् मिथोऽलिह्यत मध्य एव
मुहुर् मुखाद्यं मिथुनैर् मृगाणाम् ॥ ४५ ॥

रहः कपोतो भ्रमि - नर्तनार्तो
गुत्कार - रावैरनुनीयमानाम् ।
पर्यक्रमीत् स्वां दयितां चिरं च
पदात्पदं तां पुनरुत्पतन्तीम् ॥ ४६ ॥

तौ चानुकूल्ये फलित - प्रयासे
चञ्च्वां च चञ्चूं विनिवेश्य भूयः ।
चिराश्रितं चेतसि चीयमानम्
मिथोऽप्यदातां मधु वाऽनुरागम् ॥ ४७ ॥

[2]द्विभूम - नीडेषु नवेक्षु - पत्रैर्
व्यूतेषु बद्धेष्वनिशं द्रुमाग्रैः ।
दोलोत्सवा दम्पतयो वयानाम्
पान्थान् व्यधुर् दोलित-जीवनाऽऽशान् ॥ ४८ ॥

---

१. शिञ्जा=धनुर्गुणः ; झङ्कारः । २. हिं० दुमंज़िला ।

बाला वधूर् वल्लभ - विप्रयुक्ता
विबोधिता कोकिल - काकलीभिः ।
श्वश्र्वादि - सान्निध्यमुपेक्षमाणा
द्वारं ययौ हा ! कृपणाऽनुवारम् ॥ ४९ ॥

स्माराः स्फुलिङ्गाः सुचिराय सुप्ताः
स्वान्तेषु सौरभ्य - सुखैः समीरैः ।
सन्धुक्षिता यद् - द्युति - पीतिमानो
ऽदृश्यन्त वक्त्रेषु वियोगिनीनाम् ॥ ५० ॥

आसीनमभ्येत्य चिर - प्रवासात्
श्वश्रूपकण्ठे दयितं दयार्हा ।
ऐक्षिष्ट पुष्टोत्कलिका - सहस्रा
गुप्तं वधूः कूणित - नेत्र - कोणा ॥ ५१ ॥

विलज्जनं दूरमपास्य मार्गे
मिलज्जनं चाऽप्यवधीरयन्ती ।
बाला न वक्षः स्तृणुते स्म पीत-
हालाऽद्य मन्ये किमपि प्रकाशम् ॥ ५२ ॥

पदे पदे पुष्करिणी - प्रतीरे
[1]प्रतानिनीनां प्रकराः प्रफुल्लाः ।
आन्दोल्यमाना ननृतुः समीरैर्
नट्यः सवेशा इव दर्पणाऽग्रे ॥ ५३ ॥

सौशील्य - चैलात् पतयालवश्च
लाम्पट्य - नाले निभृतं विशन्तः ।
शीत्कारिणो वागुरिका युवानो
वाटीषु वीथीष्ववशा विचेरुः ॥ ५४ ॥

स्कन्धैः कषन्तस्तरुणीर् विपण्यां
क्षमां प्रमादाय च भिक्षमाणाः ।
संसूचनायेव किमप्यपूर्वम्
ऐक्षन्त काक्षैस् [2]सहकृत्वनोऽन्ये ॥ ५५ ॥

---

1. लतानाम् । 2. सहायकान् ; सखीन् ।

आलिङ्गिताङ्गी स्फुट - यौवनेन
फुल्लासु वल्लीषु च पुष्पलावी ।
तन्वी चरिष्णुर् लतिकेव रेजे
यद्वापि कान्तिः सुम - वाटिकायाः ॥ ५६ ॥

उद्वेल - तारुण्य - महाप्रवाह-
कीर्त्येव याऽऽप्लावयति स्म लोकम् ।
तयाऽप्सरस्सौभग - सद्विलासैर्
अनायि नाक - प्रतिमां प्रदेशः ॥ ५७ ॥

नितम्बिनी लम्पट - लुण्ठनीयं
सर्वस्वमेकं मदनस्य बाला ।
आदाय रूपं हृदयं दलन्ती
लीला - गतिं मानवती वितेने ॥ ५८ ॥

पुष्पेषु - पृथ्वी - जय - वैजयन्त्यास्
तस्याः गृहाग्रे तरुणाः दिवाऽपि ।
मृषा मुहुः किञ्चन कासमानाः
हा हन्त ! कौर्मी गतिमन्वतिष्ठन् ॥ ५९ ॥

नाडी - परीक्षार्थमदात् करं प्राग्
व्याजेन बाला युव - वैद्य - पाणौ ।
शशंस पृष्टाऽथ शनैर् हृदार्त्तिम्
मधो ! कला - कौशलमद्भुतं ते ॥ ६० ॥

हा ! ऽपूर्वरूपोऽधिगतश्च वृद्धि
तारुण्य - लोपाद् गुण - कर्म - हीनः ।
बलिष्ठ - निष्ठो हृदि शब्दशास्त्री
कस्याश्चिदप्यागममद्य मेने ॥ ६१ ॥

त्रपा - नताक्ष्यो मुकुलीकृताक्ष्यः
कटाक्षेक्षिता वा मृदु - कुञ्चिताक्ष्यः ।
नेत्र - प्रणालैर् हृदयेष्वमान्तम्
बाला विलासं मदनस्य वेमुः ॥ ६२ ॥

ऐक्ष्यन्त तन्व्यो मृदुला ध्रमायाः
कपोतिकाभाश्च शशेक्षणा याः ।
ता एव मुग्धास् सहसा प्रजाता
हृदा [1]सपत्नाकरणेऽद्य सिद्धा ॥ ६३ ॥

मञ्जीर - काञ्ची - तनु - किङ्किणीनां
निशम्यमाना विशिखासु शिञ्जा ।
विप्रोषितानामधुना विशेषाद्
श्रोन्निद्र्य - दाने पटिमानमैषुः ॥ ६४ ॥

सञ्जीवयन्ती वन - कूल - कुञ्जान्
सोधायमाना पिक - काकली सा ।
प्रवासिनां पाश - निबन्धनाय
बभूव हा ! डिण्डिम - घोषणेव ! ॥ ६५ ॥

सम्प्रत्यपि प्रोषित - जीवितेशा
रहो विलापं शरणं प्रपन्ना ।
माराऽग्नि - धूमोद्गम - सन्निभानि
शुचाऽमुचन् निःश्वसितानि काश्चित् ॥ ६६ ॥

प्राणप्रदो यः पिक - पञ्चमोऽभूत्
ताभ्यो मधौ सोऽद्य च जीर्यमाणे ।
[2]कृतान्त - विद्वेष - वशंवदाभ्यः
[2]कृतान्त - सन्देश इव प्रजातः ॥ ६७ ॥

श्यामायमानाऽपि धरा पुरस्ताद्
हैमी मधु - स्पर्शमणेर् महिम्ना ।
आशास्वशोशुभ्यत येन लोके
गोधूम आपत् 'कनके'त्यभिख्याम् ॥ ६८ ॥

इत्थं प्रकृत्या कृत - काय - कल्पे
जातेऽभितो नन्दन - भू - विकल्पे ।
उत्क्रान्त - सांसारिक - रीति - रेखम्
उच्छृङ्खलं यौवनमुल्ललास ॥ ६९ ॥

---

१. वेधते इति यावत् । २. कृतान्तः = भाग्यं, यमः (मृत्युः) ।

### युग्मकम्

सुहास - सम्पन्न - सरोवराणाम्
इन्दीवराणामभवन् प्रभाते ।
दलेष्वदोलायित - कन्दलेषु
कामं तुषारस्य कणा निकामम् ॥

परं प्रजानां परिपोषितानां
सन्तोषितानां च समीहिताप्त्या ।
बाधाऽऽध्यभावात् स्फुट - रोचनेषु
नाऽश्रूण्यवैक्ष्यन्त विलोचनेषु ॥ ७०-७१ ॥

क्रोडीकृताशा लतिका लिहन्तः
सौरभ्य - धीरा सुभगाः समीराः ।
द्वारादि - कान्तार - दरी - मुखेभ्य
आमोदयन्तस् सततं निरीयुः ॥ ७२ ॥

सुप्राप - सांसारिक - सौभगानां
स्मितेषु सुव्यक्त - सुखासिकानाम् ।
नालोक्यते स्मोच्छ्वसितं तु लोकैर्
उद्गीर्यमाणं परमाननेभ्यः ॥ ७३ ॥

'थै थै' - पदं शीधु - मदं तु तौर्य-
त्रिकोपजातं श्रवणे विवेश ।
शल्यायमानं न वचः परेषाम्
मर्मान्तिगं स्वप्न - दशास्वपीह ॥ ७४ ॥

### युग्मकम्

प्रीतैः पिकैः फुल्ल - फलैर् बृहद्भिः
बाला - विलासैर् भव - भूति - भोगैः ।
मरन्द - मोदैर् मृदुभिर् मरुद्भिर्
मर्त्याः पवर्गेण[1] सुखायमानाः ॥

तपस्तितिक्षा - क्षपिताऽक्ष - लक्ष्यान्
कङ्काल - शेषान् क्वचिदप्यरण्ये ।
पेप्रीयमाणान् कृपणान् मुधैव
मुग्धानजानन्नपवर्ग[2] - लिप्सून् ॥ ७५-७६ ॥

---

१. पद्यस्थ पांच पवर्गीय वर्णों में निर्दिष्ट पदार्थों द्वारा ।
२. मुक्ति, पवर्गीय वर्णों में निर्दिष्ट पदार्थों से भिन्न ।

याते रवौ किञ्चन चण्डिमानम्
फुल्लानि जातानि फलानि विष्वक् ।
वृक्षा व्रतत्यश्च वनेषु गुल्मा -
ये स्थावरास्ते स्थविरा इवासन् ॥ ७७ ॥

नित्योत्सवं विस्मृत - तापमेवं
प्रशासता प्रीत - हृदा प्रदेशम् ।
श्रीमातृगुप्तस्य कृपा - पयोधौ
पञ्च व्यतीयुस् समया सुमानाम् ॥ ७८ ॥

सौराज्येन समर्धितैश्च सुखितैरेवं जनैरेकदा
मध्याह्ने स्थित एव हन्त! सहसाऽऽदित्यो[1] दिवि द्योतितः ।
कालेनाऽम्बुमुचा कराल - महसाऽऽक्रान्तः समालोक्यत
संवीता वसुधाऽन्धितेव तमसा सम्मीलिताऽम्भोरुहा ॥ ७९ ॥

प्रमन्दाऽमृत - निस्यन्दे चन्द्रिरे निशि मन्दिरे ।
प्रसुप्तो मातृगुप्तोऽपि ददर्शोल्का निपातिनीम् ॥ ८० ॥

स्वस्तिकाकारतां यातं व्यत्यस्तोल्का - द्वयं ततः ।
भाल - लेखे स देशस्योच्छेद - चिह्नमशङ्कत ॥ ८१ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'वसन्त-वर्णनं'
नाम सप्तदशः सर्गः समाप्तः ॥



१. सूर्यः, विक्रमादित्यश्च व्यज्यते ।

## ( अष्टादशः सर्गः )

चेतश् ! च्योतय चाण्डाल ! चापल्यं चरितं चिरात् ।
[1]चीर्णां च्यावय चार्वाक - चोरिका - चर्य - चातुरीम् ॥ १ ॥

चतुर्वर्गाय चेष्टा चेच्चिनु चारित्र - चारुताम् ।
चरणे चन्द्रचूडस्य चुम्ब चर्चय चिन्तय ॥ २ ॥

तीर्थेषु तर्पित - पितृ - प्रवरस्ततोऽसौ
तारुण्य-रञ्जित-तनुस् तनयोऽञ्जनायाः ।
प्रागेव च 'प्रवरसेन' इति प्रसिद्धः
श्रीपर्वते स्थितिमगाद् विनिवर्तमानः ॥ ३ ॥

अश्रावि तेन पथिकेभ्य इहाश्रितेभ्यो
मानुष्य - मान - कुलगौरव - मानसेन ।
'योऽपालि पूर्वपुरुषैः प्रथित - प्रतिष्ठैः
सोऽग्राहि देश इतरेण ममाऽधुने'ति ॥ ४ ॥

वृत्तान्त एष नितरां द्रुत - नाग - तुल्यो
दुःखाकरः श्रवणयोः सहसा प्रविश्य ।
दन्दह्यमानहृदयस् समकालमस्य
दुर्दान्त - रोष - दहनं जनयाम्बभूव ॥ ५ ॥

कोपाऽनलोत्कट - शिखाभिरमुष्य तप्ते
अङ्गारक - प्रतिभटे नयने अभूताम् ।
उच्छ्वासिनोऽपि जनक - प्रलय[2] - प्रसूतम्
वाष्पाम्बु येन युगपच्छुषिकामुपेतम् ॥ ६ ॥

तत्र स्थितं तमुपगम्य निबद्ध - जूटस्
सिद्धो 'ऽश्वपाद' इति पाशुपतः प्रसिद्धः ।
स्वाद्यं समर्प्य सहसा वनजं फलाद्यं
खाद्यं तथान्यदपि, मन्दमिदं जगाद ॥ ७ ॥

१. चीर्णां = अनुष्ठिताम् । २. प्रलयः = मृत्युः ।

प्राग्भूत - जन्मनि मया समवापि सिद्धिर्
यावत् तदा त्वमभवो मम शिष्ट-शिष्यः।
पृष्टेन तत्र भवता वर - याचनार्थं
राज्योपलब्ध्यभिरुचिः प्रकटीकृतासीत् ॥ ८ ॥

त्वल्लालसां सपदि पूरयितुं गरिष्ठां
सौभाग्यभाजन ! यदा यतमान आसम्।
[1]अन्धुः कृपा-कुशलयोर् विवशाऽऽर्त्त-बन्धुर्
व्यक्तस्तदाऽऽदिशदिदं शशि-शेखरो माम् ॥ ९ ॥

एतं सदाचरण - सौम्य - गुणैरुपेतं
छात्रं निजं विपुल - वत्सलता - सुपात्रम्।
सिद्धं गणं मम विबोध तपस्समृद्धं
राध्यं समीहितममुष्य मयाऽस्ति साध्रम् ॥ १० ॥

नाशङ्कनीयमिह यत् परिपूरिताशं
त्र्यक्षं समक्षमचिरात् कृत - भक्तरक्षम्।
द्रष्टासि तेऽथ वितरिष्यति वाञ्छितं यः
इत्युक्तवान् निमिष एव तिरोदधेऽसौ ॥ ११ ॥

तेजोमयीमिव तपोदहनेन जाताम्
उल्कामिवाऽम्बरतले च विलीयमानाम्।
तां तस्य मूर्त्तिमवलोक्य चमत्कृतात्मा
कर्तव्य - मार्गमपि निस्तिमिरं स मेने ॥ १२ ॥

संस्पृश्य शैल - शिखरं विनिवर्तमाना
सौदामनीव ककुभः प्रतिभासयन्ती।
साऽलात - जात - रचितेव तनूस्तदीयं
सौभाग्यमेव सहसोज्ज्वलयाम्बभूव ॥ १३ ॥

प्रागेव तत्र पुटिताञ्जलि - पूजितेन
प्रस्थायिना सपदि पाशुपतेन तेन।
आशीः - प्रदान - समये समदायि नूनं
श्रीपर्वतो भगवता स्व - करेण तस्मै ॥ १४ ॥

---

१. अन्धुः = कूपः।

राज्येप्सया सुखमपास्य तपस्यतोऽस्य
सिद्धेन सूचित - समीहित - सौष्ठवस्य ।
तत्रैव सन्तत - समाहित - मानसस्य
मासा गता बहुतिथा विपुल - प्रयासाः ॥ १५ ॥

नाऽज्ञायि चण्ड-किरणो न तुषार-शीतं
नाऽभोजि किञ्चिदुचितं रुचितं न पीतम् ।
नाऽसेवि तेन शयनं वसनैर् [1]निवीतं
नाऽऽलोकि चाऽन्यदपि राज-सुखैः परीतम् ॥ १६ ॥

दिव्यापि - राज्य - गरिम - स्पृहयालुनाऽत्र
तेनाऽभ्यगायि हृदय - द्रढिमा तदद्रेः ।
अच्छिन्न - शब्द - जप - पण्डितिमा झरेभ्यस्
स्थेमाऽऽसनस्य सततं च शिला-स्थलीभ्यः ॥ १७ ॥

प्रायोपवेशिन इवाऽस्य महामहिम्नः
कायोऽत्र तीव्र - तपसा तनिमानमापत् ।
संसार - सागर - समुत्तरणं सुखेन
येनाऽस्य जातमघ - भारवता स्वसाध्यम् ॥ १८ ॥

चेचीयमानमनिशं सुकृतं तदीयं
क्वाचित्कमेव भुवि भारि बभूव तावत् ।
यस्याग्रतो गुरुतमं वितरिष्यमाणं
सम्पत्स्यते प्रतिफलं नियतं लघिष्ठम् ॥ १९ ॥

संवीज्यमान इव पूरक - रेचकाद्यैस्
साचिव्यमाप्त इव चाऽन्तरुपांशु - जापैः ।
स्थास्नुर् निरन्तरतया क्रमशस्तपोऽग्निर्
व्यक्तोऽस्य वक्त्र - महसि प्रशिमानमाप ॥ २० ॥

दक्ष - द्विषद्दलन - दर्पक - दाह - दृष्टिश्
[2]चेटेन चेतसि चिराय च चिन्त्यमानः ।
तेनैव तीक्ष्ण - तपसस्तपनेन तावद्
दुद्राव दीन - दयितो लघु देव - देवः ॥ २१ ॥

---

१. निवीतं = प्राच्छादितम् । २. चेटेन = सेवकेन ।

संस्मारितो व्रतिक - पाशुपतस्य वाचा
स्मेरस्ततः स्मर - रिपुर् वरदाग्रहस्तः ।
तेजोमयेन वपुषा ह्रसितोष्णरश्मिस्
तत्तापसस्य पुरतः प्रकटी - बभूव ॥ २२ ॥

शैल - स्थली - सुलभ - वस्तु - कृताङ्गभूषः
वैयाघ्र - चर्म - वृत - पाशुपत - व्रतीव ।
अव्यावहारिकमसौ यतिरूपमाप्तो
देद्युत्यते स्म दिवि दिक्षु च दिव्य - देहः ॥ २३ ॥

युग्मकम्

पश्चात्ततो बहु - दिनेभ्य उपोषितेन
पानीय - पान - पवनाऽशन - पोषितेन ।
दिग्वाससाऽऽसित - शिला - तपनोषितेन
नैदाघ - माघ - मरुताऽपि च शोषितेन ॥

तेन प्रचण्ड - महसा प्रतिबोधितेन
प्राणामि मोदि - मनसा पुलकाञ्चितेन ।
अश्लाघि चाऽथ तदुपासनयेव हूतः
सर्ग - स्थिति - प्रकृति - संक्षय - हेतुभूतः ॥ २४-२५ ॥

"[1]कोकिलीकृत - कन्दर्प ! [2]काल - कालाप - कङ्कण ! ।
केकि - काल - [3]कनत्कण्ठ ! कपालिन् ! करुणां कुरु ॥ २६ ॥

कपर्दिन् ! कालिका - कान्त ! क्लेश-कुञ्जर-केसरिन् ! ।
कल्मषाणां कुलं कर्षं कल्याणं किर केवलम् ॥ २७ ॥

[4]गूढपाद् - गुण्ठित - ग्रीव ! गिरीश ! गिरिजा - गृह ! ।
गौरी - गृहीत - गात्रार्ध ! गङ्गाधर ! गजान्तक ! ॥ २८ ॥

गीर्वाण - ग्रामणी - गीत ! गणान् गोपाय गर्धिनः ।
गुण - गौरव - गाम्भीर्य - गर्भया गृणतो गिरा ॥ २९ ॥

१. कोकिलः = हिं० कोयला ।
२. कालः = सर्पः ।
३. कनत् = हिं० चमकता ।
४. गूढपाद् = सर्पः ।

शैलेश्वर - शिखा - शायिन् ! शशिशेखर ! शङ्कर ! ।
शोकं शमय शैघ्र्येण शूलिन् ! शात्रव - शासन ! ॥ ३० ॥

श्लाघां श्वःश्रेयसं शर्म श्रियं [1]श्वायय शाश्वत ! ।
शिष्यं शर्व ! शिवाश्लिष्ट ! शोधये शरणं श्रितम् ॥ ३१ ॥

प्रविलोपित - पञ्चेषो ! पिनाकिन् ! पार्वतीपते ! ।
प्रत्यवायान् पराकर्तुं प्रत्नं पातय पातकम् ॥ ३२ ॥

पुषाण पौरुषं पद्यां प्रवृद्धेः परिशोधय ।
पादयोः पतितं पाहि पुराराते ! परात्पर ! ॥ ३३ ॥

संयमेन समं सिद्धीश्वर ! संयुग - साहसम् ।
संदेहि स्वस्ति - सम्पन्नाः सम्पूर्णाः सर्व - सम्पदः ॥ ३४ ॥

सकुल्याः स्थास्नु - सम्मानाः सन्तान - सहिताः समे ।
सन्तु स्वर्ग्याः सुसन्तुष्टाः सम्राजः सम्प्रतिष्ठिताः ॥ ३५ ॥

परमेश ! प्रभो ! पुण्यं परिपाकि प्रवर्तय ।
पद्य - पुष्पाञ्जलिं प्रत्तं प्रतीच्छ[2] प्रीतिपूर्वकम्" ॥ ३६ ॥

एकादशात्मकममुं स्मयमान - मुद्रं
रुद्रं निरूप्य चक्रवांस्स्तवनं सदात्मा ।
वारेण च प्रणतवान् विरराम यावत्
तावत् स तेन जगदे जगदीश्वरेण ॥ ३७ ॥

"व्यक्ता स्पृहा बहुविधाऽद्य तव स्तवेन
कामं परं प्रिय ! वरं प्रवरं वृणीष्व ।
प्रीतस्य मे प्रवर ! येन वर - प्रदित्सा
तीव्रं च तेऽपि तप एतु फलेग्रहित्वम् ॥ ३८ ॥

नग्नाङ्गकश्च कृपणश्च कपाल - पाणिर्
हा ! किन्तु कुत्सित-विभूति-विभूषणोऽसौ ।
क्वाऽनन्तमस्तव - समीहित - सम्प्रदाने
वन्ध्यं तरुं विदितवानसि पारिजातम्" ॥ ३९ ॥

---

१. वर्धय । २. प्रतीच्छ = स्वीकुरु ।

माहेश्वरेण वचसैवमथाऽनुयुक्तो—
ऽनुध्याय सोऽपि च कृताञ्जलिराह "नाथ !।
साम्राज्यमेकलमकण्टकमद्वितीयं
देहि प्रसाद - सुमुख - प्रजयाऽर्चनीयम्" ॥४०॥

इत्येवमर्थितवतः प्रवरस्य वृद्धिम्
विश्वेश्वरो विविदिषुः पुनरित्थमाह ।
"मुक्तिं विमुच्य किमु सौम्य ! मुधैव मौग्ध्याद्
भुक्तिं भयावह - फलामुररीकरोषि ॥ ४१ ॥

भ्रान्तो भवान् भुवन - भङ्गुर - भोग - भासा
भव्या भणन्ति भसितं भुवि भूप-भूतिम् ।
सम्पत्तिरेव कमला - समुपासकानाम्
व्यापत्ति - रूपमुपयाति हि शासकानाम् ॥ ४२ ॥

चिन्ता - चिता - विकट - रौरव - सम्प्रवेशो-
[1]ङ्कारः प्रिय ! प्रथित - पार्थपदाऽधिकारः ।
तन्मूलिका गदित - गौरव - गृध्नुता चा-
ऽहम्पूर्विका भ्रम - पुनर्भव - मज्जनाय ॥ ४३ ॥

तस्माज्जहीहि मनसोऽप्यसदीप्सितं तद्
मन्यस्व मञ्जुल-मतिं मम मोक्ष-मूलाम् ।
धात्री - फलेन तुलितं परिणाम - रम्यम्
[2]वार्द्धं वचो भवति बाल - धियामगम्यम्" ॥ ४४ ॥

व्याख्यामिमां भगवतोऽथ च शुश्रुवान् स
रोषाग्नि - रूषित इवाकुलितान्तरात्मा ।
आचष्ट सर्वविदमीक्षितवांश्चिरं तम्
अद्यापि कोमलदृशा करुणां किरन्तम् ॥ ४५ ॥

"व्यक्तं भवन्तमवबुध्य तपस्वि - वेषम्
ब्रह्माण्ड - बीजमथ सर्वं - समर्थमीशम् ।
याच्ञा व्यधायि मयका स तु नाऽसि शर्वः
यस्याऽनुकम्पिनि करे मम कोऽपि गर्वः ॥ ४६ ॥

१. ओङ्कारः=प्रारम्भः ।
२. वृद्धोक्तम् ।

यच्चात्थ दैन्य - विषयेऽविदुरः प्रभोर्मे
कापट्य - वेष ! नियतं तदलीकमेव ।
नग्नाङ्किता - नरकपाल - विभूतिमत्त्वा-
न्यस्याहितानि सुहितानि हि लक्षणानि ॥ ४७ ॥

दीनं व्यनक्ति वसनेन विहीनताऽस्य
याच्ञां कृपाकर - करे कलितः कपालः ।
साक्षाद् विभूतिमथ चाह विभोर् विभूतिः
तत्तथ्यमन्धित - धियोऽन्यथयन्ति मुग्धाः ॥ ४८ ॥

दीनो जनो निवसनैर् वसुभिश्च हीनो
याचेत यत्किमपि यावदपीश्वरं मे ।
सोऽस्मै वितीर्य वरदो विपुलां विभूतिं
स्वैश्वर्य - गौरवमलं प्रकटीकरोति ॥ ४९ ॥

मान्या उदार - चरिता इह याचिताः सा-
मान्या अपीहितमहो ! वितरन्ति भूयः ।
देवा दयार्द्र - हृदया अपि दान - हेतोः
सार्थाऽभिधा निगदिताः सुतमां वदान्याः ॥ ५० ॥

स्वामी तु लोक - विदितो मम देव - देवः
स्वामीशतामतुलितां मनसाऽप्यगम्याम् ।
[1]व्यक्तिं नयेत् स करुणा - वरुणालयश्चेद्
व्यक्तिं क्षणात् स्वपुषीं विदधाति शक्तिम् ॥ ५१ ॥

काले पुरा क्वचिदभूदुपमन्यु - नामा
बालो द्विजस्य निगमागम - पारगस्य ।
तेन स्तुतः स तृषितेन पयोऽर्थिनाऽदात्
क्षीरोदधिं हितमतिर् भगवानमुष्मै ॥ ५२ ॥

पित्र्यं प्रसह्य परिपन्थि - जनेन राज्यम्
अध्यास्य यः परिभवो भुवि मे व्यधायि ।
जानास्यरुन्तुदममुं हृदय - व्रणं चेत्
कैवल्य - काङ्क्षित-कथां कुरुषे किमर्थम्" ॥ ५३ ॥

---

१. व्यक्तताम् ।

व्यक्तीकृताऽकपट - सुन्दर - दिव्य - देहः
प्रीति - प्रसाद - सदनं वदनं दधानः ।
संसाध्य वाञ्छितममुष्य ततो महेशो
भूयश् शिवोऽशिवमपोहितुमाचचक्षे ॥ ५४ ॥

"विस्मृत्य वास्तविक-वर्त्म-विवेक-वृत्तिम्
विष्वग् विलास-विष-वासनया विसंज्ञम् ।
त्वां बोधयिष्यति स मद्वचसाऽश्वपादस्
संज्ञां विधाय समये सति सङ्गतार्थे ॥ ५५ ॥

गुण्यैस्ततश्च निचितैः प्रचुरैः स्व - पुण्यैः
शस्तः समस्त - भुवनेषु परास्त - पापः ।
सारूप्यमेष्यसि ममाऽप्यपुनर्भवाय
यल्लक्ष्यमस्ति परमं चरमं च पुंसाम्" ॥ ५६ ॥

एवं निरूप्य मुदितं भुवि भावि - देवम्
आशीर्वचोभिरभिनन्द्य मृगाङ्क - मौलिः ।
लोकोत्तरां नभसि बिभ्रदलात - दण्ड -
लीलामनन्य - विदितः सहसा विलिल्ये ॥ ५७ ॥

प्रत्यक्षतामुपगतं पुनरश्वपादम्
आमन्त्र्य तत्र विनतोऽथ स [1]राज-बीजी ।
देशान्तरेषु विहरन् सुभगंभविष्णुः
काश्मीर-देश-वसुधां निकषा प्रपेदे ॥ ५८ ॥

विज्ञाय देश - गत - वृत्तमथो सजात्यैः
सम्प्रेरितोऽपि बहुधोपगतैरमात्यैः ।
तान् मातृगुप्त - नृप आक्रमणान्निवार्य
निश्चित्य कृत्यमपि भावि बभाण भूयः ॥ ५९ ॥

"भूमीन्द्र इत्यभिमतोऽभय - भीमयोधी
जानन् स्वमूर्जित-बलं मम मार्ग-रोधी ।
स्वैरी स 'विक्रम' - धराधिप एव वैरी
रोषः क्व 'मातृ'-नृपतिं प्रति लब्ध-पोषः ॥ ६० ॥

१. राजपुत्रः ।

स्वैर् [1]नर्दितैः सततमर्दित - काननस्य
पञ्चाननस्य विदिताऽप्रतिमोर्जितस्य ।
हुङ्कार - भीम - रुत - मारुत - मात्र - नष्टैः
किं शस्यते नु शशकैर् मशकैर् विरोधः ? ॥ ६१ ॥

वज्रो मदादिव समुद्धत - कन्धरेषु
युक्तं व्यनक्ति यदि शक्तिमलं धरेषु ।
लोष्टे स वीरयति चेन्निपतन् वराके
वक्ष्यन्ति हा ! न तदधः-पतनं नराः के ?" ॥ ६२ ॥

सम्यक् परीक्ष्य स ततोऽगणितान् प्रवीरान्
धीरान् रणे द्रढिम - दैर्घ्य - लसच्छरीरान् ।
सैन्ये प्रवेश्य हय - हस्ति - मयादि - पैन्ये[2]
दैन्येतराचित - धरानजयत् त्रिगर्तान् ॥ ६३ ॥

प्रीतः स नागर- मुख - श्रुत - शौर्य - गीतः
कर्षन् बलानि करुणां कृपणेषु वर्षन् ।
शुश्राव तत्र पथि 'विक्रम' - भूमिपालं
हा ! ऽकाल एव सहसा समवाप्त-कालम् ॥ ६४ ॥

संश्रुत्य सैन्य - सहितः स सरित्सदेशे
तस्मिन् दिवा द्रुततया विहिते निवेशे ।
भावार्द्र इत्यवितरामनुभूत - शोकस्
तस्थौ विविक्त-भुवि वारित-भृत्य-लोकः ॥ ६५ ॥

भाराच्छुचामिव नितान्तमधोमुखानि
जातानि तत्र पट - केतन - केतनानि ।
नूनं दुरासद - बृहद् - हृदयाऽसुखानि
[3]मौक्यं गतानि जडितानि च चेतनानि ॥ ६६ ॥

[4]मन्यौ तदाऽस्य हृदि वैरिणि सम्प्रविष्टे
तूर्णं ततो निरगमद् - विजय - प्रसादः ।
निःश्वास - शीत - मरुता दृढ - दुःख - दाहं
तत्राऽनुवारमसकौ शमयन्निवाऽभात् ॥ ६७ ॥

---

१. गर्जितैः । २. पैन्यं=स्थूलत्वम् । ३. मौनम् । ४. शोके ।

सर्वाङ्गमेवमथ मूकिम - मुद्रितं स्वम्
वक्त्रं चिरादचल - पाणिपुटे निधाय ।
नाऽपायि किञ्चिदपि तेन न चाऽप्यभोजि
नाऽशायि नापि सचिवादि - सभाऽप्ययोजि ।। ६८ ।।

दीर्घं श्वसन् पुनरिव स्मृत-वाप[1] - मृत्युः
केनाऽप्यकाण्ड उपगम्य निबिद्ध - मर्मा ।
मत्वेव नीच - रजनीचर - लुण्ठितं स्वम्
एवं स्थितः स समचिन्तयदन्तरेव ।। ६९ ।।

देवः शरीर - भृदभूद् भुवि देव एव
तत्किं गतोऽस्पृहमना इव देवभूयम् ।
आनाक - विश्रुत - यशाः स मही - महेन्द्रः
प्रस्पर्धमान इव जेतुमगान् महेन्द्रम् ? ।। ७० ।।

धाताऽप्यजायत विरच्य यमत्र धन्यं-
मन्योऽथ येन धरणीश-पदं च मान्यम् ।
राजन्वतीयमपि येन वसुन्धराऽभूद्
आदित्य एव सहसाऽस्तमुपागतोऽसौ ।। ७१ ।।

आः ! काल-राहु-गलिते सति राज-राजे[2]
सान्द्राऽन्धकार-पिहितोऽहह ! शौर्य-लोकः ।
सौदामनीं विधुरयन् युधि चन्द्रहासः
संद्रक्ष्यते क्व ननु सम्प्रति तस्य हा ! सः ।। ७२ ।।

शूरान्तरैरतुलिते स्मृति - मात्र - शेषे
तस्मिन् महीभृति गतेऽपुनरागमाय ।
हा ! स्पर्धिनोऽद्य विरहाद् धरणीतलेऽस्मिन्
कण्डूयनं शमयिता मम बाह्योः[3] कः ।। ७३ ।।

वीरस्य जीव - हरणं तदकारणं स्यात्
तादृग्विधस्य मरणं हि रणं विना यत् ।
मन्येत कर्म - पटिमा प्रढिमाऽथ [4]पाशिन् !
किं क्षोदिमैष जडिमा तव चण्डिमा वा ? ।। ७४ ।।

---

१. वापः=पिता । २. राज-राजः=राजेन्द्रः ; चन्द्रः ।
३. बाह्वोः । ४. यमराज ! ।

इत्थं गतेऽद्य सहसाऽन्तिकमन्तकस्य
दुर्जेय - सैनिक - बलेऽप्युरुविक्रमेऽरौ ।
क्ष्मापो व्यलोकि सुतरामनुभूत - तापो
धीराः पराग - सुकुमार - हृदो हि वीराः ॥ ७५ ॥

सामान्यतोऽनुपदमीक्ष्यत एव शौर्यं
क्रौर्यं तथाऽभ्युपगतं स्थिर - साहचर्यम् ।
ईदृग्विधं त्रदिम - विक्रमयोस्तु मैत्र्यं
क्वाचित्कमेव खलु सङ्गममामनन्ति ॥ ७६ ॥

ईयुर् निमीलां कमलानि हन्त !
स्मेराणि दीनानि न कैरवाणि ।
तीव्रोऽस्त - मस्ते तपनो न्यपप्तद्
नो चन्द्रकश्चाऽप्यचलां चुचुम्ब ॥ ७७ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण संदृब्धे 'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'प्रवरसेन-पीडा-पश्चात्ताप-वर्णनम्' नाम अष्टादशः सर्गः समाप्तः ॥

# एकोनत्रिंशः सर्गः

तृणवत् तर्जित-[1]तन्त्रो मुदितैर् मिलितो मुनीश्वरैर् महितः।
जयति जनकजा-जानिस् त्रिभुवन-तापत्रयीं तिरयन् ॥ १ ॥

मुनिर् महीपोऽप्यथ मातृगुप्त
ऐश्वर्यं वहन् लालित-सर्वलोकः।
तदैव दैवोपहतः [2]प्रयाणम्
आकर्णयद् विक्रमभूमिभर्तुः ॥ २ ॥

स शुश्रवानेव च तां प्रवृत्ति
क्षमी क्षमापोऽचल-चण्ड-चेताः।
कालेन दष्टं सहसाऽथ मेने
प्रच्यावितं शैलतटात् स्वमेव ॥ ३ ॥

धीरोऽपि तस्याऽसमयं तदानीं
सर्वेश्वरस्य प्रमयं निशम्य।
भृशं कृतज्ञत्व-वशंवदः स्वां
न चेतनां धारयितुं शशाक ॥ ४ ॥

सदा प्रसादाद् विशदाननाब्जः[3]
साधुः सुवाचा स सुधाऽभिवर्षी।
अनभ्र-वज्राऽभिहतो ध्रुवं सन्
अनेडमूकत्वमिव प्रपेदे ॥ ५ ॥

स धीरयिष्यन् हृदयं कथञ्चिद्
दण्डायतान्युच्छ्वसितानि मुञ्चन्।
राजाधिराजं प्रलयं प्रपन्नं
प्राणैरियेषेव तदाऽनुयातुम् ॥ ६ ॥

---

१. तन्त्रम्=शासनम्। २. प्रयाणं=मरणम्।
३. अब्जं=कमलम्; अब्जः=चन्द्रः।

शरीर - मात्रेण हि तस्थुषोऽद्य
मुहुर् मनोऽस्योज्जयिनीं जगाहे ।
तापेन तत्राऽधिपतेश्चितायास्
तातप्यमानं यदभूदिहाऽपि ॥ ७ ॥

निमेष - शून्येन दृशोर् द्वयेन
स बाष्प-बिन्दून् विपुलान् विमुञ्चन् ।
सङ्कल्पितायां हृदि तच्चितायां
धूमैर् ध्रुवं व्याकुल आबभासे ॥ ८ ॥

उन्मुद्रिते तस्य चिरेण नेत्रे
अद्यापि दूरं स्थिरतामुपेते ।
दिवङ्गतस्याऽपि धराधिराजो
दिदृक्षयेवोत्सुकतामधत्ताम् ॥ ९ ॥

सौधैकदेशे रहसि स्थितोऽसौ
ब्राह्मण्य - तेजोनिधिरद्य दूनः ।
स्वं सान्त्वयित्वा स्वयमेव कृच्छ्राद्
मनस्यलालप्यत भूय एवम् ॥ १० ॥

कालेन हाऽस्तं [1]प्रतिभावतीशे
नीते न वोढुं क्षितिपत्वमीशे ।
उपस्थितायामपि किं रजन्यां
सरोजमुन्मुद्रितमेव तिष्ठेत् ? ॥ ११ ॥

ध्वस्ते धराशायिनि वज्र - घाताद्
आधार - भूते धरणी - धरेन्द्रे ।
कार्श्यं वहंश्चाऽपि झरः स्रवेच्चेद्
मन्येत धाष्टर्यं ध्रुवमेतदीयम् ॥ १२ ॥

हा जीवितेशे[2] सति लोक[3] - बन्धौ
आदित्य - देवे परलोकमाप्ते ।
धत्ते वराको गरिमाणमत्र
कं लोष्ट - मात्रं मणिरग्निगर्भः[4] ? ॥ १३ ॥

---

१. प्रतिभावान् = सूर्यः; विशेष-बुद्धिमान् । २. जीवितेशः = सूर्यः ।
३. लोकबन्धुः = सूर्यः । ४. अग्निगर्भः = सूर्यकान्तमणिः ।

अन्तर्द्धिमीशे जगतोऽभ्युपेते
कैमर्थ्यमेतर्हि मम स्थितेः स्यात् ।
ध्वस्ते कथा - वस्तुनि हृद्य - रूपे
शिष्टं गतार्थं भरतस्य वाक्यम् ॥ १४ ॥

वैधुर्यमाप्तस्य महात्म - शक्त्या
प्रगल्भनैः किं मम सम्प्रतीह ।
निर्वाण - वह्निः प्रबल - प्रतापी
सोऽङ्गारकः कोकिल[1] एव कालः ॥ १५ ॥

देशान्तरेभ्योऽपि समभ्युपेता
अपूपुजन् यं विबुधा[2] अजस्रम् ।
सूक्ष्मेक्षिकावान् क्रमपेक्ष्य लाभम्
वस्तुं गतोऽसौ विबुधैस् सहेतः ॥ १६ ॥

शौर्याश्रित - श्री - शुभ - शर्मशाली
स्वामी स मुक्त्वा किमिति स्व-लोकम् ।
स्वार्थीव सर्वान् जनयन्ननाथान्
स्वर्लोकमैषीत् पर - लोकसंज्ञम् ॥ १७ ॥

प्राण - प्रतीकाश - विशेष - सारा
सा वैद्युती स्यादिह चेन्न धारा ।
[3]तन्त्राणि लोपात् तिमिरे न भान्ति
यन्त्राणि मृल्लोष्ट - निभानि भान्ति ॥ १८ ॥

अथर्द्धं - शोकं कलयन् स लोकं
स्फीताऽभितापं विदधत् प्रलापम् ।
दोधूयमानो ध्रुवमात्मनैव
वृत्तान्यसास्मयंत तस्य भर्तुः ॥ १९ ॥

गुप्त - प्रदानेव महीश्वरेण
मां दूतवत् प्रेषयतोज्जयिन्याः ।
गम्भीरता - नीरधिना न तेन
विज्ञापितोऽहं न च कोऽप्यमात्यः ॥ २० ॥

---

१. कोकिलः = हिं० कोयला । २. विबुधः = विद्वान्; देवता ।
३. तन्त्राणि = हिं० बिजली की लड़ियां ।

विकार - शून्यानन - मुद्रया च
व्यक्तीकृतं नैव विधीयमानम् ।
यत् पांसु - पूरे पतितोऽस्मि बालः
उत्थाप्य नीयेऽभिरमोरुदेशम् ॥ २१ ॥

महीश्वराणां [1]मणिनेव तावत्
पृष्ठं परामृश्य च पणिना मे ।
[2]मलीमसोऽप्यस्मि [3]सुराहंतायाः
प्रणोदितः प्रांशु - पदं प्रपन्नः ॥ २२ ॥

नाहं व्यजानां पथि दूत - भूतो
यद् गुप्त - रूपेण तदाज्ञयैव ।
पुरश्च पश्चान्मम पान्थ - वेषा
मद्रक्षणायैव चरां प्रयासुः ॥ २३ ॥

पश्चान्मयाऽज्ञायि यदाज्ञया ते
विष्वङ् नियुक्ता निभृतं ममैते ।
यत्रापि कुत्रापि निवेश - देशे
व्यधुर् व्यवस्थां मम विश्रमाय ॥ २४ ॥

वार्ताहरं स्वं हृदि मन्यमानो
नीतोऽपि तेन प्रभुणा नृपत्वम् ।
सौख्यानि सर्वाण्युपलभ्य मार्गे
ऽजानां वितीर्णानि जनैर् वदान्यैः ॥ २५ ॥

तस्यैव चादेशमनुव्रजन्त
उच्चावचाकार - चराश्चरास्ते ।
व्यपोह्य नद्यादिक - भावि - बाधा
मन्मार्ग - निर्देशनमन्वतिष्ठन् ॥ २६ ॥

आज्ञापितास् तेन कृपालुनेव
नियोगिनो मन्त्रि - मुखास् समेऽपि ।
सभाजनार्थं नियतं ममैव
काश्मीर - सीमां निकषाऽभ्युपेयुः ॥ २७ ॥

---

१. मणिः=स्पर्शमणिः (पारस); रत्नम् । २. मलीमसः=हिं० लोहा; मलिन।
३. सुराहं=हिं० स्वर्णं; देवोचित ।

बाला - मृगीशावक - बालकानाम्
अमङ्गलोपप्लव - कष्टकाले ।
मत्प्राणरक्षाऽपि चरंस् सुगुप्तम्
इतस्ततश्चाऽक्रियताऽदसीयैः ॥ २८ ॥

अबुध्यमानस्य किमप्यपूर्वं
शौवस्तिकं[1] दैविक - वास्तवत्वम् ।
स्याद् यौगपद्येन तदा पदव्यां
रक्षा परीक्षा च ममौजसोऽभूत् ॥ २९ ॥

सिंहस्य बालाक्रमण - प्रसङ्गे
गुल्मेषु धन्वी पिहितो व्यलोकि ।
शिशोश्च पन्नस्य नदी - तरङ्गे
ममोपकण्ठे ऽतरतां प्रवीरो ॥ ३० ॥

यथार्थतस्तन्मयकाऽन्वमायि
कारुण्यमासीन्मयि ते त्वमायि ।
दुःखायतां नो पथि किङ्करोऽयम्
व्यचारि यत् तद् भवतेति पूर्वम् ॥ ३१ ॥

निःश्वासतामित्थमुपागताऽसुः
निश्चित्य किञ्चित् स ततोऽन्तरेव ।
लोकाऽश्रुभिः प्राक् परिषिक्त - मार्गम्
आस्थानमापद् मलिनाननताक्षः ॥ ३२ ॥

स सान्त्वयित्वाऽत्र समानुदश्रून्
आहूय [2]गञ्जाधिप - मन्त्रि - मुख्यान् ।
मौलिं च भूषा अवतार्य गात्राद्
न्यस्यंस्तथैषां पुरतो न्यवेदीत् — ॥ ३३ ॥

"भारं भवद्भिस् सुहृदः ! प्रदत्तम्
वोढुं यथाशक्ति मया प्रयत्तम् ।
संन्यासमिच्छुर् बत ! नाऽधुनाऽल-
ङ्कर्मीण एतन्नियमं विधातुम् ॥ ३४ ॥

---

१. शौवस्तिकम् = भविष्य-कालीनम् । २. गञ्जाधिपः = कोषाध्यक्षः ।

प्राज्यस्य नाकेऽपि सुदुर्लभस्य
साम्राज्य - सौख्यस्य महीतलेऽस्य ।
त्यागातिरिक्तं ममताऽऽतुरस्य
न भेषजं मे प्रतिभाति किञ्चित् ॥ ३५ ॥

निर्व्याज - सम्मानित - सत्समाजे
यातेऽधुनाऽस्तं सति [1]राजराजे ।
शैत्येन शून्ये निविडान्धकारे
तापाय तिष्ठेदिह को नु हा ! रे ! ॥ ३६ ॥

चिताग्निरूपामधिशय्य शय्याम्
[2]अमुत्रभूयं व्रजितेऽपि [3]मित्रे ।
भाः ! शासनं वा मृदुलासनं वा
न चोचितं नो रुचितं ममेति" ॥ ३७ ॥

यथा यथाऽङ्गान्यभवन्नमुष्य
सज्जा - विहीनानि तदा क्रमेण ।
चेतांसि शोकेन तथा समेषां
चैतन्य - शून्यत्वमिवाऽभ्युपेयुः ॥ ३८ ॥

आकस्मिकीं त्याग-कथां तदीयां
निशम्य भूयः कुलिशाहतानाम् ।
उत्पश्यतां शाश्वतिकं वियोगं
द्वैगुण्यमश्रूण्यगमन्नमीषाम् ॥ ३९ ॥

प्रेष्य - प्रिये पार्थिव - दृश्य - देवे
तस्मिन् महीपाल - मणौ यियासौ ।
सद्योऽद्य दैन्यं समुपेयिवांसि
क्रोशन्त्यभूवन् भवनान्यपीतः ॥ ४० ॥

एवं स संन्यस्त - समस्त - वस्तुर्
अव्यक्तोऽप्यलक्ष्यः सकलैः सबाष्पैः ।
दिगन्त - सङ्क्रान्त - कथोऽभ्यजायत
क्षमापतिर् हन्त ! महामतिर् यतिः ॥ ४१ ॥

---

१. राजराजः=सम्राट्; चन्द्रः । २. अमुत्रभूयं=परलोकम् ।
३. मित्रे=सुहृदि; सूर्ये ।

प्रस्थायिनो गैरिक - रक्त - हर्म्य-
भित्ति - च्छटा - सङ्क्रम - कौङ्कुमानि ।
वासांसि तस्याऽद्य विनैव यत्नं
तमग्निवेशं यतिमेव चक्रुः ॥ ४२ ॥

व्यचीचरत् सोऽथ ममाऽद्य नूनम्
अनून - सौभाग्य - कटाक्षितस्य ।
श्रेयोऽन्तरायान् सहसाऽपहर्तुम्
प्रीतिं प्रपन्नः प्रतमां परेशः ॥ ४३ ॥

उच्चैः समुद्घोषयतः कथासु
पराङ्मुखत्वं सततं श्रियोऽत्र ।
दिष्टया न मोहं न च मुग्धिमानम्
[1]विकत्थनस्येव गतं मनो मे ॥ ४४ ।

रुष्ट्वा कृतान्तेन सुदारुणेन
शोकोदधौ पातित एकतोऽस्मि ।
तुष्ट्वाऽद्य मायामय - वार्धि - मग्नो
निस्तारितोऽहं परतस्तथेति ॥ ४५ ॥

अत्रान्तरे क्लेशद एष देशे
सन्देश आशु प्रससार तद्वत् ।
पात्रे प्रसन्नाम्भसि तैल - लेशो
ऽशेषे यथैव प्रसृतिं प्रयाति ॥ ४६ ॥

आपन्न - पीडा - प्रशमाय पुण्य-
श्लोकाय चाऽस्तोकगुणाय तस्मै ।
लोकैस्तदाकर्ण्य च शोक - मूकैर्
बाष्पैर् [2]निवापाञ्जलयः प्रदत्ताः ॥ ४७ ॥

[3]न्यासी स सम्प्रत्यपि देव आसीद्
दासीकृतैः प्रीति - धनोपहारैः ।
चरैस्तथा चानुचरैः परैश्च
वरैर् नरैर् बद्ध - करैः परीतः ॥ ४८ ॥

---

१. आत्मश्लाघिनः । २. तर्पणतोयाञ्जयः । ३. संन्यासी ।

विधाय भूम्यै चरमं प्रणामं
निर्याय हर्म्याच्च परिव्रजन्तम् ।
नन्नम्यमाना नगरौकसस्तं
न्यवारयन् [1]ग्रस्त - गिरः प्रयाणात् ॥ ४९ ॥

प्रवेपितानां पवन - प्रवाहैः
पुनः पुनः केतन - मस्तकानाम् ।
व्याजेन तं वीथिषु जग्मिवांसं
नूनं न्यरौत्सुश्च निकेतनानि ॥ ५० ॥

ययौ दयालुः स उदार - दानी
हा ! ऽऽनाथ्यमाप्तेव च राजधानी ।
त्राणैषिणी प्राङ् मुषितेव भूयः
प्राणैर् विहीना जनता व्यलोकि ॥ ५१ ॥

[2]अनागते दुर्लभ - दर्शनं तं
स्थिरात्मनाऽऽलोकयतां जनानाम् ।
बाष्पाम्बु - पूर्णान्यपि लोचनानि
बभासिरे हन्त ! पिपासितानि ॥ ५२ ॥

'स्नेहेन भक्त्याऽथ च सौहृदेन
त्वं देव ! सायुज्यमिवाऽभ्युपेतः ।
कृतापराधेष्वपि पेशलात्मा
किमश्म - नैष्ठुर्यमुरीकरोषि ॥ ५३ ॥

वैवश्य - हेतोः स तु चक्रवर्ती
प्रेतः प्रजानां परिपीडनाय ।
[3]क्षान्तो वशी नः किमु दुर्भगानां
क्षिप्नुः क्षते क्षारमसि प्रजातः' ॥ ५४ ॥

इत्यादि - निर्वेद - निवेदनानि
रुद्धानि निःश्वास - परम्पराभिः ।
वचांसि भेजुर् न नृणां विरामम्
अस्राण्यजस्राणि तथा निकामम् ॥ ५५ ॥

---

१. ग्रस्तगिरः=रुद्धवाचः । २. अनागते=भविष्यति काले ।
३. क्षमाशीलः ।

निवृत्त - सर्वं - क्रय - विक्रयेषु
पुरापणेष्वद्य शुचाश्रयेषु ।
विशीर्णया कण्ठ - निगीर्णया तं
जयेति वाचा वणिजोऽभ्यनन्दन् ॥ ५६ ॥

निधाय नेत्रे पदयोः समौनं
चङ्क्रम्यमाणस्य विरागमूर्तेः ।
अजस्र - धारा - स्रवदश्रवोऽस्य
परे पुरस्तात् पदवीमरुन्धन् ॥ ५७ ॥

प्रोञ्छन्त एकेन करेण नेत्रे
परेण धूतेन च याचमानाः ।
हा नाथ ! याया विरहय्य नाऽस्मान्
इति ब्रुवाणाश्च तमन्वनैषुः ॥ ५८ ॥

वाद्यैः पुराऽऽनीयत डिण्डिमाद्यैर्
गीतैश्च यो भक्ति - भरोपनीतैः ।
औज्झत् स एवाऽद्य पुरीं विलापान्
शृण्वन् प्रजानाममिताऽभितापान् ॥ ५९ ॥

पाद्याऽर्घ्यं - सत्कारमुपेयिवान् यः
स्मेराननैरीश्वर इत्युपात्तः ।
बाष्पोदक - प्रोक्षित - पादपद्मो
लोकैरसौ दीन - मुखैस्तदाऽभूत् ॥ ६० ॥

## युग्मकम्

[1]अनुव्रजं प्राप्य [2]भवद् - व्रजानाम्
प्राणाधिकानां परितः प्रजानाम् ।
अक्षीण्युदश्रूणि निरीक्षमाणः
स धीर-सत्त्वोऽपि हि मातृगुप्तः ॥

दुःखाऽसहिष्णुः सुकुमार - चेताः
आघातमेत्येव पुनस्तदानीम् ।
अजल्पितोदग्र - मनोविकारः
प्रत्यक्षतोऽभूद् गुणिताश्रुधारः ॥ ६१-६२ ॥

---

१. अनुव्रजं=मार्गं पार्श्वे । २. भवद्-व्रजानां=समवेतानाम् ।

अप्रसान्त्वयत् सोऽथ समान् सतापान्
वात्सल्य - वाग्भिर् मधु - पेशलाभिः ।
उल्लङ्घयामास च नागराणाम्
वाग् - वागुरावेष्टित - बाष्प - वार्धिम् ।। ६३ ।।

ध्वजांशुकैर् वातरयोर्म्मिमद्‌भिर्
तदा मुहुर् मर्मरमुद्वमद्‌भिः ।
साभ्यर्थनं दोलित - तुङ्गहस्ता
न्यवारयत् तं नगरी प्रयाणात् ॥ ६४ ॥

सत्त्वाऽऽवृताऽपूर्व - गुणव्रजं तम्
पुरौकसो राममिव व्रजन्तम् ।
अन्वग् ययुः प्रस्मृत-पुत्र-दारास्
तत्प्रीति - पाशेन विकृष्यमाणाः ॥ ६५ ॥

लोष्टेष्टकोद्‌घातमपानुदन्तः
पुरः प्रयान्तः पुर - वासिनस्तु ।
मलीमसौ मा भवतां नृपाङ्घ्री
इतीव बाष्पैरसिचन् पथोऽस्य ॥ ६६ ॥

पवित्रितं पार्थिव - पाद - पद्म-
पातैः परे पाणि - पुटेषु पांसुम् ।
पश्चात् प्रयान्तः प्रचुराः पुमांसः
प्रीति - [1]प्रदान - प्रतिमं ररक्षुः ॥ ६७ ॥

पर्यश्रवोऽन्ये तमनुव्रजन्तो
निष्ठाजुषस् तत्पदवीं प्रणेमुः ।
प्रभु - प्रसाद - प्रतिमं च मत्वा
तद्रेणुमादाय शिरस्स्वधार्षुः ॥ ६८ ॥

नालन्तमास् तद्विरहं विसोढुं
प्रेङ्खोल्यमानाः पवन - प्रवाहैः ।
पलाशिनः शीर्ष - शिखाप्रशाखाः
सङ्घट्टयामासुरिवाऽम्बरेण ॥ ६९ ॥

1. प्रदानम् = उपहारः ।

तं [1]स्वामिनं वा सहसाऽनुकूलं
यान्तं निरूप्याऽपुनरागमाय ।
बभौ वितस्ताऽऽतत - वीचि - हस्ता
संश्लेषमिच्छुर् यदि वा रुरुत्सुः ॥ ७० ॥

ऐक्षन्त दीना प्लवकाश्च मीनास्
तं रक्षिणं प्राणवतां [2]प्रसक्त्या ।
प्रतीक्षमाणा इव च क्षपाहं
तिष्ठन्ति सम्प्रत्यपि निर्निमेषाः ॥ ७१ ॥

मार्गे लता न्यस्त - शिखा - शिरस्कास्
स्यात् पूतयोस् तत्पदयोः पतन्त्यः ।
कृत्वाऽद्य काश्मीर - धरामनाथां
तं जग्मिवांसं ध्रुवमन्वनैषुः ॥ ७२ ॥

ग्रामीण - लोकास् सरणौ सतोकाः
व्यथा - विहस्ताश्च [3]कपोत - हस्ताः ।
कालेऽश्रुधारा - पतनान्तराले
ताप-स्पृशा हन्त ! दृशा पपुस्तम् ॥ ७३ ॥

पार्थो नरान् निःश्वसितैरजस्रम्
अस्रार्द्रतां शोषयितुं त्वनीशान् ।
विनम्रयाऽनुव्रजतः स वाचा
न्यवीवृतद् रुद्ध - पदान् कथञ्चित् ॥ ७४ ॥

एकैकशस् सान्त्वित - चेतसोऽपि
पर्यश्रवस्तं पुरता प्रयान्तम् ।
आ दृष्टिपातात् पुनरीक्षमाणाः
लोका हृतस्वा न ययुर् न तस्थुः ॥ ७५ ॥

यथा यथा देश - धरां विमुञ्चन्
देवो दृशोर् दूरमसावयासीत् ।
दयानिधिं तं हृदयानि तावत्
तथाऽन्वयुर् भक्तिभृतां जनानाम् ॥ ७६ ॥

---

१ स्वामी=राजा; पतिः । २. भक्त्या; आसक्त्या । ३. बद्ध-करपुटाः ।

बाबध्यमानोऽपि पदे पदेऽसौ
निःश्वास - सूत्रैर् व्यचलन्न लक्ष्यात् ।
घातैर् महावात - तरङ्ग - जातैस्
स्थेमानमुज्झन्ति कुलाचलाः किम् ? ॥ ७७

आत्मीकृतोऽभूद् विषयान् विमुच्य
'काश्मीर' एको विषयो 'यकेन[1] ।
तमप्यपाकृत्य विदूर – यायी
केषामभून्नो विषयः शुचा सः ॥ ७८ ॥

महीश्वरत्वं विरहय्य तस्मिन्
माहेश्वरीं हा ! पदवीं प्रपन्ने ।
स्रष्टुः समस्ता रचना प्रशस्ता
पर्यस्तरूपा प्रतिभासते स्म ॥ ७९ ॥

कपोत - रावो [2]मरिगतोपमः प्राग्
हुङ्कार आभादधुनाऽऽतुरस्य ।
सुधा - मदं कोकिल - कूजितं च
हृत्तोदनं रोदनमाबभासे ॥ ८०

दिवानिशं मङ्गल - मन्त्रनादैर्
अभ्युक्ष्य पान्थान् परिपूजयन्तः ।
जाताः प्रपाताः स्वयमेव मार्गे
शोकाश्रुधारा धरणीधराणाम् ॥ ८१ ।

भ्रमार - निर्देश - पवित्र - देशं
समुज्झतोऽस्याऽन्त्य - पदाङ्क - लेखा ।
मन्ये हितायैव पुनः प्रजानाम्
प्रमारण - स्मारण - लेख[3] आसीत् ॥ ८२ ॥

स्वप्नेऽप्यहिंसा - व्रत - निष्ठितं तं
कृपाकरं पार्श्वत ईक्षमाणाः ।
तस्थुर् जडाङ्गा इव निर्निमेषाः
खगा मृगाश्चाऽपि [4]नगाधिवासाः ॥ ८३ ॥

---

१. यकेन=येन ।  २. मरिगतम्=रति-कूजितम् ।
३. तच्चरण-चिह्नेषु चलनायेत्यर्थः ।  ४. नगाः=वृक्षाः; पर्वताः ।

अमार - धर्मं - प्रबल - प्रतिष्ठे
तस्मिन् प्रविष्टे विपिन - स्थलीषु ।
मुक्त्वा स्वजं द्वेषमुपात्त - मैत्री-
सत्त्वानि सत्त्वानि तदा बभूवुः ॥ ८४ ॥

तथा हि सौशील्य - सुखाकरेण
सौम्येन मार्गे हरिणा स्थितेन ।
स्कन्धान् कषन्तोऽत्र द्रुताप्लुताश्च
तृप्ताश्च दृप्ता हरिणा विचेरुः ॥ ८५ ॥

क्षीरस्यति स्माऽज - शिशुर् वराको
व्याघ्री - स्तनान् सत्वरमभ्युपेतः ।
मध्येपथं मौग्ध्य - वशाः शशाश्च
[1]तृण्येति बालान् बुभुजुर् वृकाणाम् ॥ ८६ ॥

रीत्याऽनया कारुणिको निरस्यन्
स [2]गर्दिकां भूमिभृतस् तदानीम् ।
प्रीताः प्रजा [3]अन्यथयन् न पश्चाद्
व्यापारयामास मनाङ् [4]मनोऽपि ॥ ८७ ॥

प्रजा विबाधाऽन्धुषु[5] नोदयित्वा
विलाप - वाचोऽपि च नो दयित्वा ।
स रोदसी चाऽप्यह ! रोदयित्वा
ययौ स्व-चेतोऽबहु तोदयित्वा ॥ ८८ ॥

आराधिता येन सदैव लोकाः
प्रसाधिता विश्वजनीन - वाञ्छाः ।
न बाधिता हा ! परमाणवोऽपि
शूलाऽकरोत् कं न शुचा स एव ॥ ८९ ॥

प्राण - प्रदः प्राणवतां क्षणात् प्राक्
प्रह्लादयन् कीर्तित - लक्षणोऽपि ।
खेलायति स्मेव स पेशलात्मा
प्राणैः प्रजानां स्ववियोग - दानैः ॥ ९० ॥

---

१. तृण्या=घास-समूहः । २ गर्दिका=सिंहासनम् । ३. दुःखयन्नित्यर्थः ।
४. का कथा लोचनयोः मनोऽपि पश्चान्न व्यापारयामास । ५. अन्धुषु=कूपेषु ।

देही सुधर्माश्रय एष देवस्
स्नेही ततोऽल्पाऽल्प - परिच्छदः सन् ।
लोकेऽवदान - स्मरणानि मुञ्चं-
स्तद्राज्य - सीमां निकषा प्रपेदे ॥ ६१ ॥

उद्दाम - दर्पान् दययाऽनुशासी
दासीकृताऽशेषदिशाऽधिवासी ।
न्यासीं गतोऽकिञ्चनतां स शोच्यां
हा ! ऽऽसीत् तदानीमपि लोक-शासी ॥ ६२ ॥

इनेऽथाऽन्य - देशं [२]विरक्ते यियासौ
दिने राजतं रूपमुत्सृष्टवान् हा ! ।
नगोऽप्येष काषाय - वेषोऽभितप्तस्
स तेनेव तेने स्व - दुःखानुभूतिम् ॥ ६३ ॥

क्षणेनोदयं यास्यतीन्दौ समन्तात्
क्षणे नोदिता कौमुदी - मोद - मार्दैः ।
तमीशं नवीनं समासाद्य सद्यः
तमी शङ्करी सुप्रभाता भवित्री ॥ ६४ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-
विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते
'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'मातृगुप्त-संन्यास-वर्णनम्'
इत्याख्य एकोनविंशः सर्गः पर्यवसितः ॥

---

१. सुधर्माश्रयः=देवसभाश्रयः; पुण्यात्मा ।
२. विरक्ते=विशेषेण रक्ते; विरते ।

# त्रिंशः सर्गः

[1]वल्लवी - वल्लभो विग्रही विक्रमो
दूरयन् दानवोद्दाम - दर्पान् द्रुतम् ।
सर्वतः सर्वदा सौख्य - सम्पत्तये
कोऽपि कल्याण - कल्पद्रुमः कल्पताम् ॥ १ ॥

एवं प्रवरसेनोऽसौ सिद्धः सौभाग्य - भाजनम् ।
चतुरङ्गेण चक्रेण चक्रे भू - जय - योजनम् ॥ २ ॥

वज्र - वेगेन बम्भ्रम्यमाणो हयी
द्रागुदीचीन - देशानधीनान् जयी ।
संविधाय प्रतीचीं प्रसन्नां क्रमात्
स्वं प्रतापं मुमोचाऽधिकर्तुं[2] ततः ॥ ३ ॥

शूरगोष्ठीषु गीताऽद्भुतौजःकथः
सोऽथ वीरव्रुवान् प्रत्यवायान् पथः ।
पातयन् शातयन् मानभृद् - योधिनः
चक्रमे [3]चक्रिकाभिश्चमू - रोधिनः ॥ ४ ॥

आनुपूर्व्येण पार्श्वस्थ - पार्थानसौ
मर्दयन् मार्जयन् नामयन् शामयन् ।
केन रोद्धव्य आसीत् स्व-देह-द्विषा
वार्धि - वेलेव धीरो धरां धर्षयन् ॥ ५ ॥

वस्तुतो धर्म - संस्थापनार्थाय स
कापथायायिनो यातना - दायिनः ।
मायिनो धर्म - कापट्य - वेशानभूद्
बोधयन् रोधयन् शोधयन् योधयन् ॥ ६ ॥

---

१. वल्लवी=गोपी । २. अधिकर्तुं=शासितुम् ।

३. चक्रिका=कपटचेष्टा, हिं० षड्यन्त्र ।

सोऽथ काश्मीर - सीमा - सकाशे स्थितं
नाऽतिदूरेऽशृणोन् मातृगुप्तं प्रभुम् ।
पुञ्जितं पौरुषं पुण्य - सत्त्वाकरं
नो नरेशं तदा न्यासि - वेशं परम् ॥ ७ ॥

तर्हि सोऽचिन्तयद् यद् गुणानां निधिः
मातृगुप्तो महात्मा महीपो मुनिः ।
प्रान्त - मात्रस्य नो शासकः साम्प्रतं
स्वान्तमप्येष शास्ति प्रजानां परम् ॥ ८ ॥

दर्शनं तस्य पुण्यात्मनः स्याद् ध्रुवम्
पाप - पुञ्ज - प्रणाशाय च प्रीतये ।
हन्त ! तस्याऽऽशिषो लिप्सुनाऽद्धा मया
कार्यं आत्मा कृती पाद - संस्पर्शनैः ॥ ९ ॥

तन्मयाऽद्योपसत्तव्य एकात्मना
मुक्त - सैन्येन चेहाप्त - दैन्येन च ।
प्रह्व - मस्तेन चाबद्ध - हस्तेन च
न्यस्त-शस्त्रास्त्र-शस्तैश्य[1]-वस्त्रेण सः ॥ १० ॥

वैरि - वेपाय वीराऽवलेपाय च
चेष्टितं यच्च राज्ञो रजो - वेष्टितम् ।
त्याज्यमत्रैव तत् प्राज्यमुच्छृङ्खलं
नम्रता लम्भनीया परा [2]कम्रता ॥ ११ ॥

इत्थमात्मानमुत्सृष्ट - मानं तदा
पातयिष्णुः परिव्राट् - पदाम्भोजयोः ।
दीनवत् सम्प्रपत्तुं महाविक्रमस्
सोऽचिचिन्तच्चिरं धैर्यवन्निश्चयी ॥ १२ ॥

[3]तीरितार्थस्ततोऽरिन्दमोऽनीकिनी-
नायकोऽप्येकलस् तद् - दिदृक्षोत्सुकः ।
सभ्यतां ख्यापयन् यापयन् न क्षणान् ।
प्रास्थिताऽऽह्लादितस् तीर्थं - यात्रीव सः ॥ १३ ॥

---

१. ऐश्य-वस्त्रेण = राजोचितवेशेन । २. कम्रता = सुन्दरता; सौजन्यम् ।
३. तीरितार्थः = निर्णीत-कृत्यः ।

मन्त्रि - मुख्यैः परं प्रेरिता पञ्चषाः
अग्रतोऽगुश्चराः पान्थ - संवादिनः ।
अन्वयुस्तं भविष्णुं च सर्वेश्वरं
सादिनोऽशेष - वेषादिकाच्छादिनः ॥ १४ ॥

श्रद्धया मातृगुप्तेन सम्बद्धया
वेगवाही पुरः प्रेर्यमाणस्ततः ।
प्राप सोऽ[1]कालहीनं प्रदेशं प्रभुर्
देवदेवेन यो दिद्युते स्वा - समः ॥ १५ ॥

धीर - वीरोऽथ काश्मीर - सीमान्तरं
गाहमानश्चिरात् प्रोषितस्तोषितः ।
नन्नमीति स्म पम्फुल्यमानां सदा
पावनीं स्वाऽवनीं तां वनी-भूषिताम् ॥ १६ ॥

द्वित्र - सार्थं स पार्थं परिव्राजकम्
वीक्षमाणः क्षमावान् क्षमाऽधीश्वरः ।
दूरतः पूरितः श्रद्धयाऽनन्तरं
स्वेक्षणे तत्क्षणेऽमन्यताप्त - [2]क्षणे ॥ १७ ॥

मातृगुप्तस्य गीतस्य गोपैरपि
वीत - तृष्णस्य चाक्रीत - चेता गुणैः ।
सोऽविगीतः[3] प्रतीतोऽभिनीतार्जवः
प्राणमद् न्यासिनं तं निबद्धाञ्जलिः ॥ १८ ॥

मातृगुप्तोऽप्यथो दीर्घदर्शी द्रुतं
स्वाऽभिधाख्यायिनं तं समागामिनम् ।
चारुहासी कृताशीर् मुदाऽभ्युत्थितस्
सस्वजे शश्वदेनं तथा वत्सलः ॥ १९ ॥

चर्चितेऽनामयेऽथो मिथः कामतस्
तत्र सभ्योपचारेऽपि निर्वर्तिते ।
अर्पयित्वा दृशं तर्पयित्वा भृशं
स्नेहसिक्तैरतिक्तैर् विलासैर् गिराम् ॥ २० ॥

---

१. अकालहीनं—शीघ्रम् ।
२. क्षणः—उत्सवः, सुयोगः ।
३. अविगीतः—अनिन्दितः ।

"भो ! कृतं स्निग्ध ! सम्भावनैर् नैकशस्
स्थीयतां स्थीयतां किं कृते सम्भ्रमः" ।
एवमाम्रेडयन्तौ[1] धरा - धूर्धरौ
तौ निषण्णौ यथास्थानमाह्लादितौ ॥ २१ ॥

सोऽथ [2]निर्माय निर्माय-वृत्तिर् यतिर्
मातृगुप्तस् सुधा-स्यन्दिनीं भारतीम् ।
ज्ञातुमिच्छन्निवागन्तुकस्येप्सितम्
वीक्षमाणो मुखं मूकिमानं ययौ ॥ २२ ॥

[3]आञ्जनेयस्तदा राजराजोऽतुलः
[4]कौल - सौशील्यमुन्मुद्रयन् निर्भरम् ।
रञ्जनं व्यञ्जयंश्च प्रपेदेऽञ्जसा
सौम्य - [5]सात्म्योपनीतां विनीतां गिरम् ॥ २३ ॥

"स्नेह - सम्पोषितं देहवत् सन्ततम्
वैरिभिर् बन्धुभिर् वाऽविभाज्यं बलात् ।
त्याज्यमेकान्ततोऽज्ञायि वैरागिणा
देव ! किं प्राज्यमेतत् सुराज्यं त्वया ?" ॥ २४ ॥

एवमुक्ते तथा तेन मन्ये पुनस्
तोदनेनार्दित - स्यन्दमान - व्रणः ।
द्रोह-मोहादि-हीनो वशी सन्नपि
वाचमुच्छ्वास - दिग्धां शनैराददे ॥ २५ ॥

साक्षिणी शोकजाऽस्तोक - तापस्य सा
तस्य निःश्वासधारा हृदो निःसृता ।
सन्निकृष्टस्य भूपस्य भूयोऽप्यलं
दीपयामास सद्योऽद्य दुःखानलम् ॥ २६ ॥

"वत्सलो मेदिनी - चक्रधारीश्वरस्
साधुवृत्तिर् वपुष्मानसौ विक्रमः ।
येन चाऽभूम भूमण्डलेशा वयं
हा ! ऽस्तमाप्तो गुणोपासकः शासकः ॥ २७ ॥

---

१. आम्रेडयन्तौ=पुनर्वदन्तौ । २. निर्माय=उक्त्वा । ३. आञ्जनेयः=प्रवरसेनः । ४. कौलम्=वंश्यम् । ५. सात्म्यम्=हितम् ।

साम्प्रतं राजसिंहासनेऽसाम्प्रता:[1]
के वयं किम्प्रभावाश्च किं धर्मका: ।
लुप्त आदित्यदेवे विकासं तथा
किं विलासं भजन्तेऽत्र पद्मा: क्वचित् ? ॥ २८ ॥

सागरो [2]जीवनाधारभूतो न चेत्
स्याद् धरागर्भतापं शनै: शीतयन् ।
वारिवाहो वराको वृथा गर्जितुं
शेक्ष्यते धूम - भूमात्मक: केवलम्" । २९ ॥

एवमुक्तेऽथ तेनाञ्जनेयोऽभ्यधाद्—
"भावितात्माऽनुकम्पी भुवो भूषणम् ।
[3]शील - शालीनताढ्यम्भविष्णुर् भवान्
धर्षित: केन वाऽमर्षितोऽहर्षित: ॥ ३० ॥

यत्प्रतीकारमाकाङ्क्षमाण:, परं
स्वं विदित्वा क्षमी क्षेम-रक्षाऽक्षमम् ।
दीन - बन्धुं दयासिन्धुमूर्जस्वलम्
वत्सलं विक्रमं हन्त ! शोशुच्यते ॥ ३१ ॥

बाध्यमानो वराको विपद् - वंशसै:
पीड्यमान: प्रतीपै: परै: पूरुष: ।
निर्वृतिं नाऽधिगच्छन् निराशोऽपि च
स्नेहिनं वा सहायं स सास्मर्यते ॥ ३२ ॥

तत् कृतं व्रीडया स्वान्त - सम्पीडया
दुष्ट-दिष्टस्य चोच्छृङ्खल - क्रीडया ।
मुच्यतां मौन-मुद्रा महात्मन् ! मन:-
शूल-मूलं समुत्पाट्य चाऽऽशूच्यताम्" ॥ ३३ ॥

[4]अस्मितां च क्रुधं सस्मितो व्यञ्जयन्
मातृगुप्तस्तदा [5]सम्प्रपेदे गिरम्— ।
"उत्सहेताऽपकर्तुं महीपाल ! क:
शूरमानी तथाऽलन्तमोऽपीह न: ॥ ३४ ॥

---

१. असाम्प्रता:= अयोग्या: । २. जीवनम्=जलम्; प्राणा: ।
३. शील···=सच्चरित-विनयघनवान् भवन् । ४. अस्मितां=स्वाभिमानम् ।
५. सम्प्रपेदे गिरम्=वाचमुवाच ।

नो [1]जरण्डा वयं नापि [2]षण्ढाः वयं
दण्डने द्वेषिणां तु प्रचण्डा वयम् ।
शस्त्र-चर्यासु सच्छास्त्र - चर्चासु च
दक्षतामक्षतां स्मो दधाना वयम् ॥ ३५ ॥

तद् वराकेण वीर - ब्रुवेणाऽथवा
मर्त्य - काकेन सद्योऽघ - पाकेन वा ।
मन्त्रिभिर् यन्त्रिभिस्तन्त्रिभिर् वाऽपरैस्
त्रासनीयास्तथाऽपासनीयाः[3] कथम् ॥ ३६ ॥

शक्यते शौर्य - शौण्डीर्य - शीलैरपि
नो विरोधो न वा नो निरोधो जनैः ।
[4]वाडवेनैत्य सङ्घर्षमस्मिन् जगत्-
सागरे को न सन्तापमापत्स्यते ॥ ३७ ॥

कातरत्वं न जागर्ति नो मानसे
वीर्यमङ्गे च शौर्यं न निद्रायते ।
कीर्तिशेषत्वमाप्तेऽपि सर्वेश्वरे
भाग्य-भानुस्तु देद्युत्यते साम्प्रतम् ॥ ३८ ॥

निस्तुलं तत् स्व - माहात्म्यमातन्वता
लोक - मर्मज्ञ - धीराऽधिराजाऽमुना ।
[5]प्रेष्य - देशीयमेनं समुन्नीय मां
रोपितः कोऽपि राजन् ! न बन्ध्यो द्रुमः ॥ ३९ ॥

संस्मरंस्तस्य लोकोत्तराऽनुग्रहान्
साम्प्रतं निष्फलं जीवनं धारयन् ।
अस्मि साकं न तेनैव पुण्यात्मना
हा ! कृतान्तेन नीतो विगीतेन किम् ? ॥ ४० ॥

मग्न आदित्य - देवे प्रतीच्यम्बुधौ
लोक आप्ते च काराऽन्धकारान्तरे ।
पुष्करं चारिमाणं च पुष्णाति चेत्
स्यात् कृतघ्नत्व - पन्थाः प्रथिम्ना युतः ॥ ४१ ॥

---

१. जरण्डाः=वृद्धाः । २. षण्ढाः=नपुंसकाः ।
३. अपासनीयाः=अपसारणीयाः । ४. वाडवः=विप्रः, वडवानलः ।
५. प्रेष्यदेशीयम्=तुच्छसेवकम् ।

[१]भूभृतं [२]प्रांशुमालोकसे यं पुरस्
तस्य शीर्षं यदा स्पृश्यतेऽर्हपंते। ।
अन्यतोऽलभ्यया सत्करच्छायया
तावदेवोच्यते हेमकूटोऽसकौ ॥ ४२ ॥

हा ! परेते च तस्मिन् जगज्जीवने
मूषिताऽशेष - सौभाग्य - मौलिर्ध्रुवम् ।
शिष्यते दीन - दीनः स एवाऽलघुः,
जाड्य-मूर्त्तिर् मृदां चाऽश्मनां सञ्चयः ॥ ४३ ॥

स्वोपकर्त्तुः कृतज्ञत्व - सङ्केतनाश्
चेतना - वर्जिताश्चापि दृष्टा अहो ! ।
उज्जिहाने रवौ सूर्यकान्तो लसन्
म्लानिमभ्येति तस्मिंश्च निम्लोचति ॥ ४४ ॥

स्तूयमानं [३]विमानं ध्वजाऽभ्रंलिहं
स्तम्भ आधारभूते विपन्ने सति ।
तुङ्गिमानं द्रढिम्ना स्व - मानं दधत्
किं यथापूर्वमातिष्ठते भूपते ! ॥ ४५ ॥

तेन दन्दह्यमानो गतो ग्लास्नुतां
हेलया[४]ऽऽनायमुच्छिद्य मायामयम् ।
स्थास्नु - निर्वाण - लाभाय वाराणसीं
क्षिप्रमेतास्मि धास्येऽथ विप्र - व्रतम् ॥ ४६ ॥

[५]लोकनाथेन दिव्याच्छ - गाथेन हा !
तेन शून्यीकृतस् साध्वसाऽऽन्ध्यावृतः ।
भाति संसार एषोऽधुनाऽसारवान्
[६]मारवान् वन्ध्यता - विभ्रमानुद्वहन् ॥ ४७ ॥

जीवनं लक्ष्यते हन्त ! लज्जास्पदं
श्वास आभाति पेपीयमानो गरः ।
सेव्यमाना विलासास्तथा मानवैः
मोहयन्त्यद्य प्राग् धिक्कृता मा न वै ॥ ४८ ॥

---

१. भूभृतम्=अद्रिम्; नृपम् । २. प्रांशुम्=उच्चम् ।
३. विमानं=प्रासादः । ४. आनायम्=जालम् ।
५. लोकनाथेन=भूभुजा; सूर्येण । ६. मारवान्=मरु-सम्बन्धिनः ।

राज्य - रङ्गे मया भूप ! शैलूषवद्
वल्गता प्रेक्षिकाभाः प्रजाः प्रीणिताः ।
त्याग-मार्गोन्मुखेनेन्दिरा स्वैरिणी
साऽस्यते साम्प्रतं श्रेयसां वैरिणी ॥ ४९ ॥

मोक्ष-मार्गाऽर्गलं राज - सिंहासनं
शासनं वा चिराद् विघ्नितोऽऽसनम् ।
स्वैरमुन्मुच्य भोगी यथा कञ्चुकं
शान्तिमात्मा ममाऽर्च्छति चोल्लाघताम्[1] ॥ ५० ॥

रुद्ध - कण्ठ - स्खलद्वर्ण - व्यक्तोद्वेगमथान्तरा ।
देवो विप्र - वरः पथ्यं कथ्यं तथ्यं समापयत् ॥ ५१ ॥

वपुष्मान् विक्रमस्तावद् विस्मितश्च कृत - स्मितः ।
वदतां प्रवरः प्राह 'प्रवरः' सौम्यया गिरा ॥ ५२ ॥

'स्वामिभिः स्थेयसीं कीर्तिमागामिभिः
पुण्य - वर्चोविभैर् वै भवत् - सन्निभैः ।
धत्त एषा कृतज्ञैः समुत्पादितैः
'रत्नगर्भे'त्यभिख्यां यथार्थां धरा ॥ ५३ ॥

दूषितः स्वार्थनिघ्नैः कृतघ्नैस्तथा
नारकत्वं नरैर् नीयमानोऽन्यथा ।
भूषितो भूसुराऽग्र्यैर् भवादृग्विधैर्
नाक - लोकेन पास्पर्ध्यतेऽयं भवः ॥ ५४ ॥

यत्कृतज्ञोपमानेन च श्रीजुषा
मानवीयो नवीनोऽनुकार्यः परैः ।
मार्ग आविष्कृतः कोऽपि लोकोत्तरस्
तेन सद्वृत्तता सौभगं लम्भिता ॥ ५५ ॥

नित्यतामभ्युपेताऽह ! युष्मत्कथा
मानवत्वं गतं मान - वत्त्वं तथा ।
पुण्य - साद्गुण्य - पूर्णा भवद् - गौरवैः
केन कम्प्याऽधुना स्यात् [2]स्थिराऽसाधुना ? ॥ ५६ ॥

---

१. उल्लाघताम् = स्वस्थतां, प्रसादम् ।  २. स्थिरा = पृथ्वी ।

पांसवः पाविताः पाद-पद्मैः पथाम्
प्रापिताः पार्थ ! [1]पाटीर-पिष्टाततताम् ।
श्रीमता शासिता स्नेहिनोल्लासिता
चारितार्थ्यं च काश्मीर-भूमिर्गता ॥ ५७ ॥

इष्ट-दिष्टेन दृष्टो यथात्मीकृतः
पुण्य-पाकेन वा पात्रतां प्रापितः ।
कोऽद्य धन्यो मदन्योऽस्ति संवीक्षिता
[2]वैबुधी येन मूर्त्तिश्चरिष्णुर् भुवि ॥ ५८ ॥

पक्षपाती गुणानां प्रशस्यः परः
को विवेकी विना विक्रमादीश्वरः ।
राजहंसस्तथा रत्नजीवीव यो
लोष्ट-पुञ्जेषु जज्ञे भवत्सौभगम् ॥ ५९ ॥

स्नेह-[3]धाराऽपि पात्र-स्थिते [4]पाथसि
[5]स्फातिमायाति चित्रं यथाऽलं तथा ।
अत्युदात्तैर् गुणैस् सज्जिते सज्जने
सत्क्रियाऽल्पीयसी चापि युष्मादृशे ॥ ६० ॥

वारिवाहेन कीर्यन्त एवाऽम्भसां
राशयो विश्वतोऽश्मोषरादाविह ।
शुक्तिका-जीव आदाय कञ्चित् कणं
स्वाति-सौहार्दमर्घ्यं व्यनक्त्येकलः ॥ ६१ ॥

कोऽपि केदार उप्तेऽपि बीजोच्चये
शोच्यतां कर्षकस्याऽश्नुते स्थेयसीम् ।
बीजके वापितेऽल्पेऽपि चाऽन्याऽपरः
शस्यते शस्य-वैपुल्य-[6]पूलोद्भवैः ॥ ६२ ॥

प्रायशोऽन्याऽकृतज्ञः कृतोपक्रियस्
स्वोन्नतिं हन्त ! वेवेत्ति दैवीं दयाम् ।
पुण्य-पुष्टिं पुराणीं च पाकोन्मुखीम्
मान्यतां मन्यते चात्मनश्चातुरीम् ॥ ६३ ॥

---

१. पाटीरपिष्टाततताम्=चन्दन-चूर्णत्वम् ।
२. वैबुधी=दैवी ।
३. धारा=कणिका ।
४. पाथसि=जले ।
५. स्फातिं=विस्तारम् ।
६. पूलः=भारः, कूर्चः ।

तानि जानामि मर्माणि कर्माण्यहं
यानि नग्नीकृतान्यस्य वै हानये ।
[1]त्रस्नुरस्मादसौ मय्युदारोऽभवच्
चिन्तयत्येवमन्तर् जघन्यो जनः ॥ ६४ ॥

अर्हणीयो भवानस्ति सोऽष्टापदो[2]
यः परीक्षासु सर्वासु दृष्टः शुचिः ।
कल्पना - जल्पनाऽनल्प - सीमाऽतिगैर्
न्यक्कृता निर्जराश्चापि युष्मद् - गुणैः ॥ ६५ ॥

दीप्तिभिर् द्योतयन् दूर-देशान् दिशां
[3]लोकबन्धुर् भवत्येकलो नाऽपरः ।
सौष्ठवैश् चर्चितस् सज्जनैरर्चितस्
तद् भजेत् केन [4]कुल्येन तौल्यं भवान् ॥ ६६ ॥

तेन कार्या कृपा सौम्यता - स्वामिना
मुच्यतां नैव राज्यं 'तथोमु'च्यताम् ।
येन गुण्यादरो विश्वतो मेऽपि च
स्थावरामाप्नुयात् सत्त्वमूर्ते ! प्रथाम् ॥ ६७ ॥

प्रेष्ठ - पार्थेन पूर्वं प्रदत्ता पुनर्
मेदिनी दीयमाना परस्तान्मया ।
पालनीया प्रजा - वत्सलेन त्वया
मास्म कार्षीः प्रभो ! वज्रसारं मनः ॥ ६८ ॥

कोऽस्ति काश्मीर - कल्पः प्रदेशः परो
यत्र लोकोत्तरं सौभगं स्पन्दते ।
कल्पनातीत - सौशील्य - शाली नृपः
कुत्र लभ्यश्च काल-त्रये त्वादृशः ॥ ६९ ॥

[5]अस्मयन् मुञ्च निर्बन्धमेतं ततो
राज्यतन्त्रं बधानात्म - हस्ते परम् ।
[6]शीकतां श्रेयसां श्रेणिरेषा पुनर्
धन्यतां यातु काश्मीरकी काश्यपी" ॥ ७० ॥

---

१. त्रस्नुः=भीतः । २. अष्टापदः=स्वर्णम् । ३. लोकबन्धुः=सूर्यः, सर्वमित्रः । ४. कुल्येन=सद्वंशजेन । ५. अस्मयन्=अस्मान् प्रसन्नान् चिकीर्षन् । ६. शीकतां=तर्पयतु; अम्बुकणान् वर्षतु ।

चाटुनाऽमोहिता। कैतवाऽपोहिताः
स्नेह-सिक्ताश्च सन्देह - रिक्ता हि ता। ।
प्राच आचम्य वाचोऽथ राज्ञो हिताः
सस्मितो मातृगुप्तो गिरामाददे ॥ ७१ ॥

"आर्यवर्येण चौदार्यचर्येण च
शौर्य - सोदर्य ! सौहार्द - सौम्याक्षरैः ।
तत्त्वतस् तथ्यमाख्यायि यच्छ्रीमता
नाऽतिशेते सतां सम्मतामौचितीम् ॥ ७२ ॥

किन्तु तथ्याद् गरीयस्यसौ गीयते
लोक-सीमाऽथ शिष्ट-प्रतिष्ठा सखे ! ।
गण्यते सर्वथा स्वोपकर्तुंन् प्रति
कापि कर्त्तव्य - निष्ठा गरिष्ठा ततः ॥ ७३ ॥

क्षम्यतां तेन नैवाऽन्यथा मन्यतां
नो विरोधोऽत्र मे कोऽपि योधाग्रणीः !
सत्यमित्येव रूक्षाक्षरं लेशतः
वक्तुकामोऽस्मि किञ्चित् सखाऽसीत्यतः ॥ ७४ ॥

भूमिभर्त्तः ! यथावत् कृशां वा भृशाम्
वेत्ति सर्वोऽपि सर्वस्य पौर्व्वी दशाम् ।
वर्तमानां परं सर्व - साक्षी विभुर्
नूनमात्मा च जानाति नैवाऽपरः ॥ ७५ ॥

कोऽहमासं च कीदृक् - पदे निष्ठितस्
तत् किलामूलचूलं त्वया बुध्यते ।
सर्वमप्यस्मि जाने तवाजन्मनो
नाऽपि मे नाऽपि ते किञ्चिदन्तर्हितम् ॥ ७६ ॥

प्राक्तनी मामकीना दशा वर्तते
मानसे ते तथा तावकीना मम ।
तेन चान्योन्यमावां हि मन्यावहे
पौर्व्वमेवाऽधुना प्राकृतं पूरुषम् ॥ ७७ ॥

तद् - [1]भ्रमाऽऽवर्तकाऽऽवर्तिनावेव च
नाऽऽशयं हा ! मिथस् संविजानीवहे ।
तस्य हेतोर् भवान् [2]दीर्घदृश्वाऽपि सन्
नोचितं रोचनं चाह राजन् ! वचः ॥ ७८ ॥

किं न्विदानीमपि त्वन्मते भूपते !
धूसरो जीर्णवासा अहं भूसुरः ? ।
चक्रगत्या विहारी प्रतोलीषु वा
क्वापि कक्षासु रक्षाकरो यामिकः ? ॥ ७९ ॥

अस्तु, भूत्वापि भूभृद् नरोऽस्मादृशस्
सम्पदस् स्वीकरोत्वन्यदत्ताः कथम् ।
शिक्षिता भिक्षु-चर्यां क्षितीशा यदि
शष्पमश्नन्तु कण्ठीरवाः कानने ॥ ८० ॥

सद्य औचित्य-लेखां समुल्लङ्घयन्
प्राक्तनीं पावनीं पद्धतिं प्रोत्सृजन् ।
स्वार्थ-लाभाय मन्येय चेत् ते वचः
[3]पोरुषं प्रोषितं पातकं पोषितम् ॥ ८१ ॥

आर्यमौदार्य-कार्यं विचार्यं न वा
गौरवं तस्य सर्वेश्वरस्याऽद्भुतम् ।
भोग-हेतोर् मृषाऽधन्यवादी भवन्
किं नयेयं विलासीव सामान्यताम् ? ॥ ८२ ॥

निर्मिमाणः कृतघ्नत्व-मार्गं नवं
भङ्गुरां भीषणां भोग-भूमिं भजन् ।
नाटयन् नारकीं भूमिकां मृत्यवे
किं निनीषुर् भवेयं निजामस्तिताम् ? ॥ ८३ ॥

---

१. भ्रमावर्त...=भ्रमरूपे जलावर्ते लुण्ठन्ती । २. दीर्घदृश्वा=दूरदर्शी ।
३. पोरुषम्=मनुष्यता ।

लालसा भोग-लाभाय मे स्याद् यदि
को नु मां मानिनं रोद्धुमीष्टे ततः ।
[1]भोगिनं कोपयेत् केवलोऽसौ, भवेद्
योऽल्पदृश्वाऽन्धितश्चान्तकामन्त्रितः ॥ ८४ ॥

पालिता लालिता ग्रङ्गभूता इमाः
पोषितास्तोषिताः सस्यवच्च प्रजाः ।
ताः पणीकर्तुमीशा मदर्थे स्वकं
किञ्च पाञ्चालिका नापि [2]चञ्चा वयम् ॥ ८५ ॥

मय्युदारेण दिव्यात्मनाऽनुग्रहो
ऽकारि माहात्म्य-कूपेन भूपेन यः ।
हा ! न सम्पत्स्यते मे ततो निष्कृतिः
साम्प्रतं जीर्यतेऽन्तर्ममाऽभीप्सितम् ॥ ८६ ॥

सा परावर्तिता हन्त ! नोपक्रिया
सम्भवत्यत्र राजन्नुपायान्तरैः ।
दिष्ट-दौष्ट्येन दुःखासिकार्त्तस्य मे
गण्ड ग्राविष्कृता स्फोटिकेत्थं हृदि ॥ ८७ ॥

ईर्यिवानस्मि तस्याऽन्यतोऽलक्षितं
राजहंसस्य सौजन्य-मार्गं प्रभोः ।
तेन सूक्ष्मेक्षिका सद्विवेकात्मिका
ख्यापनीया गुणज्ञस्य लोके मया ॥ ८८ ॥

एवमेवाऽवदानान्तरैर् दिक्तटान्
स्थास्नु-कीर्त्योपलिप्य प्रजापालके ।
मज्जयित्वा महीं तैमिरे तोयधौ
देववत्पूजिते देवभूयं गते ॥

स्वाधमर्ण्यं निनीषुर् मनाग् लाघवं
तद्गुणान् कीर्तयन् धिक्करोम्येष भो ! ।
राजयोगानिमान् भोग-रोगान् मृषा
नारकीयेङ्गिताश्चेतसाऽऽलिङ्गितान् ॥ ८९-९० ॥

---

१. भोगिनं = सर्पम् ; भोगासक्तम् ।
२. चञ्चाः = (सस्य-रक्षार्थं क्षेत्रे निहिताः) पलाल-पुरुषाः ।

हा ! ऽद्सीयां मूर्ति मा स्म मा स्मारयः
नाऽर्गलं पातयोत्सर्ग-मार्गे मम ।
भ्रंशनेनाऽसकृद् धर्म - कूटादलं
किं प्रतिज्ञा-विभङ्गाय मां बाधसे ॥ ९१ ॥

नोदनैस्तोदनेनाऽस्मदन्तव्रणे
दीन-बन्धो ! वृथा वेदना-वर्धनैः ।
कीर्तनीयः खलीकार - नर्मोत्सवे
शोच्यतामेषि गोष्ठीषु पुण्यात्मनाम् ॥ ९२ ॥

[1]प्राभिजात्यं त्वया यद्यपि व्यञ्जितं
स्वादिमोत्कर्ष-वर्षैर् गिरां गौरवैः ।
शौर्य-सिन्धो ! परं सत्यसन्धस्य मे
किं कृतज्ञत्व-धर्मेण खेलायसि ? ॥ ९३ ॥

तं द्विजं[2] येन मुख्यं विमुक्तं पदं
कः पुनस्तत्र संस्थापनेऽलन्तमः ।
कोऽल्पदृश्वा द्विजो यश्चिकीर्षेच्च तत्
नाऽम्बु [3]नादेयमावर्ततेऽधोगतम् ॥ ९४ ॥

तत् प्रवीरेण काश्मीर ! धीरेण च
वत्सलेनेव भद्रङ्करेणाऽधुना ।
ह्लादिताः प्राङ् मया[4]ऽसादिताः पुत्रव-
च्छासनीयास्त्वयोपासनीयाः प्रजाः ॥ ९५ ॥

शासनात् प्राक् प्रजानां परं पार्थिव !
शासनीयस्त्वयाऽऽत्मा गतस् स्थास्नुताम् ।
वैरि-वर्गं जिगीषुर् बहिर्वर्तिनं
शत्रु-षड्वर्गजेता सदा स्यास्तथा ॥ ९६ ॥

---

१. प्राभिजात्यं=सत्कुलजत्वम् । २. द्विजं=दन्तं; विप्रम् ।
३. नादेयं=नदी-सम्बन्धि । ४. असादिताः=अपीडिताः ।

योऽजिताक्षो जितः काम-कोपादिभिः
पिञ्जरे [1]चक्रिकोत्पिञ्ज-रूपे द्विषाम् ।
पाशितः शासितो नाशितो ऽहर्निशं
सो[2]ऽनुशेते च शेते तथा शोच्यते" ॥ ९७ ॥

एवमाद्यं मुहुस् सत्यतोपस्कृतं
सम्यगाचम्यमानं महीस्वामिना ।
युक्तिमन्मातृगुप्तेन तन्मन्त्रितं
गद्गदं भूरि वक्त्रं ततो यन्त्रितम् ॥ ९८ ॥

[3]सौरभे सौभगे सौर-सौख्ये गते
का कली स्मेरता या वराकी व्रजेत् ।
काक-लीला-विलीने ककुप्कानने
काकली कौकिली कोमला क्वाऽधुना ॥ ९९ ॥

कामं गञ्जतु कुञ्ज-कानन-तरौ गानं कलं केकिनां
लासं वा तनुतां नितान्त-सुभगं सौदामनी खाऽङ्गने ।
स्वैरं द्यामपि नोदयन्तु मुदिरा प्रास्वाद्य-वाद्य-स्वनैः
के ते मानस-यायिनं स्थिर-मतिं रोद्धुं मरालं क्षमाः ? ॥ १०० ॥

खे चक्र-क्रकचे चन्द्रे चूर्णिताऽऽन्ध्ये गते रविः ।
उदितः कर-कूर्चैस्तद्-धूलि-कूटं मिमार्जिषन् ॥ १०१ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-
विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण विरचिते
'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'मातृगुप्त-प्रस्थानम्'
इत्यभिख्यो विंशः सर्गः परिणतः ॥



---

१. चक्रिकोत्पिञ्जरूपे = उपजाप-विद्रोहरूपे ।
२. अनुशेते = पश्चात् तप्यते ।
३. वसन्त-सम्बन्धिनि ।

# एकोनविंशः सर्गः

भव - मोचन ! भीम - विलोचन ! हे
भव ! मारमघौघ - विसारमिमम् ।
भवने भवने श्रथयन् [1]क्रथयन्
भव भद्रकृदत्र पुनर् भुवने ॥ १ ॥

तस्थिवांस्त्राटकीवाऽथ देवोन्मुखश्
चक्रवर्ती भविष्णुर् जगद् - विश्रुतः ।
शुद्धया श्रद्धया प्रीति - सम्बद्धया
प्राह प्रोञ्छन् त पर्यश्रुणी प्रेक्षणे ॥ २ ॥

साधु, साधीय आख्यायि साधो ! त्वया
नो सतां सम्मतं लङ्घनीयं वचः ।
तेन सङ्कल्पितं मेऽपि सञ्जल्पितं
श्रूयतां भूयतां सावधानेन च ॥ ३ ॥

"या इमाः सौम्य ! ते सन्ति सम्पत्तयो
योऽथ राज्ये भविष्णुस्तवाऽर्थागमः ।
राजमाने गुणैर् - लब्ध - माने त्वयि
स्प्रक्ष्यते सर्वथा तन्न सर्वं मया ॥ ४ ॥

वैबुधं विभ्रमं बिभ्रता पावितं
राज - सिंहासनं यत् त्वयाऽध्यासनैः ।
तत्र माहात्म्यमादाय किं मादृशो
उत्सहेताऽऽसितुं मानुषो [2]मत्सरः ॥ ५ ॥

दूरतो दर्शनैश्चाऽपि संस्पर्शनैर्
अन्तरुद्भावयत् सच्चरित्राङ्कुरान् ।
कल्मषोज्जासनं भव्य - भद्रासनं
तत्तु वन्द्यं जयोक्त्याऽभिनन्द्यं मया ॥ ६ ॥

---

१. क्रथयन्=नाशयन् । २. मत्सरः=मशकः ।

पुण्यशीलस्य ते पाद - पाथोजयोः
पांसुभिः प्राक् परं पूज्यतां प्रापितम् ।
पाद - पीठं पदाभ्यां परामृश्य किं
पातकी धृष्टता - साहसी स्यामहम् ? ॥ ७ ॥

पाणि - युग्मेन भालेन वा मौलिना
स्पृश्यमाना तथा चुम्ब्यमाना मया ।
सा महिष्ठस्य माहेश्वरस्य प्रभोः
पाद - पीठी पवित्री महेष्ट - प्रदा ॥ ८ ॥

युग्मकम्

हन्त ! नम्योऽनुगम्यो नरैश्चाऽमरैश्
छत्रकैस्तालवृन्तैस्तथा चामरैः ।
सेवितो यैर् भवान् पुण्यता-लाभवान्
रक्ष्यमाणा रहस्ते पदार्था मया ॥

[1]वर्धयन्तोऽहितं वर्धयन्तो हितम्
व्यापदं पातुकामत्र पारत्रिकीम् ।
ऐहिकीं दैहिकीमान्तरीं वाऽपि च
[2]धारयिष्यन्ति मे वारयिष्यन्ति च ॥ ९-१० ॥

इत्युदीर्यार्यवर्यो द्रढिम्ना ततस्
संयतात्मा ययौ वाच्यतत्वं परम् ।
सद्गुणानां मनस्येव चाऽप्राकृतम्
[3]पार्थवं पार्थिवस्तस्य सस्मार सः ॥ ११ ॥

सद्गुणैरानतोऽभूद् [4]विवक्षुः प्रभुर्
आ समुद्राद् धराधीशताया भरम् ।
नो [5]विवक्षुः; स्वनन्तीः परं शुश्रुवान्
साम्प्रतं चापि सोधीर् गिरो [6]ब्रह्मणः ॥ १२ ॥

मातृगुप्तस्ततो ऽभ्येत्य वाराणसीं
कौङ्कुमं [7]काशि काशाय - वेषं वहन् ।
तेजसा तर्जयंस्तिग्मरश्मि बभौ
जीवितोऽपि प्रविष्टस्तपस्याऽनले ॥ १३ ॥

---

१. छिन्दन्तः । २. निरोत्स्यन्ति । ३. पृथुताम् = आधिक्यम्; महत्त्वम् ।
४. वोढुमिच्छुः । ५. वक्तुकामः । ६. विप्रस्य । ७. काशि = उज्ज्वलम् ।

यं सिषेवे स्वतस् सम्पदां सन्ततिः
यश्च पूज्यः प्रशस्यः प्रजानां पतिः ।
मुक्त-माया-रतिः क्षेम - पुण्याऽऽयतिः
सन्मतिः सर्वथा सोऽद्य जातो यतिः ॥ १४ ॥

पातिता दूरतस् स्वेच्छयाऽशेषतो
वासनाश्चेन्द्रियार्थाश्च तुल्यास्तृणैः ।
अग्निवेशैक - प्राकार - संवेष्टितं
दाहभीत्योपसत्तुं न तं प्राभवन् ॥ १५ ॥

तस्य जाताऽधुनाऽलं विरक्तिर् [1]भवे
[2]स्थाणुतां च प्रयाता [3]प्रसक्तिर् भवे ।
निश्चलं मानसं रत्नदीप - प्रभं
नो चकम्पे महावात - घातैरपि ॥ १६ ॥

योग - विद्या - वलाद् देहचर्याऽपि च
ह्रासमस्याऽऽप वैराग्य - राज्यस्थितेः ।
येन पूर्वेष्ट - वासोग्रहेऽप्यस्पृहो
वन्य - वृत्तिर् बभूवाऽसको निर्ममः ॥ १७ ॥

मातृगुप्ते विलुप्तेऽथ दृग्गोचराद्
नष्ट - नेदिष्ठ - बन्धुर्यथाऽन्तर्मनाः ।
सत्यनिष्ठो महिष्ठो मही - स्वामिनां
शून्य - देशामशेषां ददर्श क्षितिम् ॥ १८ ॥

पालयन् स्वां प्रतिज्ञां ततस्सन्ततं
सत्य - सन्धो भविष्यद् - धरा - धूर्धरः ।
प्रेषयामास काश्मीरकाऽऽयं समं
श्रद्धया मातृगुप्ताय संन्यासिने ॥ १९ ॥

युग्मकम्

सोऽप्यहो ! भिक्षया जीवनं यापयन्
काशि-काश्मीरयोः स्वं यशो गापयन् ।
त्यागितां हा ! ऽतिभूमिं गतां तापयन्
सत्त्व - बीजानि विष्वग् दृशा वापयन् ॥

---

१. भवे=संसारे । २. स्थाणुतां=स्थिरताम् । ३. प्रसक्तिः=आसक्तिः ।

पुण्य - राज्यं परत्राऽपि च स्थापयन्
स्वं च शैवे पदेऽनुक्रमं प्रापयन् ।
तां समस्तां हठात् प्रेषितो सम्पदम्
प्रार्थकेभ्यो दरिद्रायकेभ्यो ददौ ॥ २०-२१ ॥

युग्मकम्

श्रौतघोषे ऽघ - मोषे प्रदोषेऽपि च
जह्नुकन्या - तटे काशिका - कानने ।
भूतिनाऽथापि संवेष्टितस् सर्वतः
सोऽक्षसूत्रीक्षितस् तापसैस् सस्पृहम् ॥

ध्यान - लीनोऽतिदीनो विहीनाशयः
कल्पिते भूतले पर्ण - तल्पेशयः ।
[1]जीर्ण - तार्णोटजे प्रीयमाणो जटी
[2]वाहयन्नेकलोऽस्थात् स कालम् वशी ॥ २२-२३ ॥

नाऽभवत् साम्प्रतं तस्य सिंहासनं
नाऽम्बराणां वराणां तथा भासनम् ।
वन्दि-वृन्दं न चाऽत्राऽनुजीवी जनः
छत्रधारी न वा चामरी - वीजनः ॥ २४ ॥

युग्मकम्

गोवरेणोपलिप्ता[3]ऽऽश्मिकी वेदिका
काऽपि [4]वार्क्षी त्वचा निर्वृतेर्वेदिका ।
तार - तानस् तरङ्ग - स्वरोऽनारतः
क्रौञ्च - कोकाः कपोताः कुरङ्गादिकाः ॥

शाखिनोऽनातपाः कुञ्ज - कल्पा लताः
शीत - वातोर्मिका - दोलिकाऽऽलोलिताः ।
इत्यभूत् तस्य मुख्यं च सुख्यं धनम्
आत्मनश्शासिनस् त्यागितोल्लासिनः ॥ २५-२६ ॥

---

१. तार्णोटजं = तृण-कुटी ।
२. यापयन् ।
३. आश्मिकी = प्रस्तरनिर्मिता ।
४. वार्क्षी = वृक्ष-सम्बन्धिनी ।

अर्थि-सार्थाय यच्छन् यथेच्छं धनं
प्रेषकस्याऽपि दिक्षु प्रथां द्राघयन् ।
शिष्टमिष्टं दशाऽन्दाऽवसानं कृती
पावनं जीवनं वर्तयामास सः ॥ २७ ॥

उत्ससर्जाऽथ दीनार्त्त - भर्त्ता यतिः
राज्यवत् कायमेतं प्रपञ्चात्मकम् ।
स्नेहिनां सत्कवीनां कृते स्वां कथां
देहिनां चेतरेषां मनस्सु व्यथाम् ॥ २८ ॥

पुण्य-पुञ्जैः प्रजानां च दीनार्थिनाम्
पावनीं कर्तुमभ्यागतो वाऽवनीम् ।
[1]शेषयन् हा ! निराशा इवाशा इमाः
प्रत्युपागात् पुनर् द्यां स कल्पद्रुमः ॥ २९ ॥

गौरवेणैवमन्योन्य - संस्पर्धिनाम्
मानिनां दानिनां ज्ञानिनां [2]स्वामिनाम् ।
अत्र चित्रं पवित्रं चरित्रं न कैर्
गीयतां पीयतां नित्यमन्वीयताम् ॥ ३० ॥

आमोदैः पूरणायाशाः, विदग्धा अपि पावकाः ।
परार्थे धारयन्ति स्वं गुरवोऽगुरवो यथा ॥ ३१ ॥

अङ्ग - संस्थाविशेषेण चेतोहरः
साम्प्रतं चापि जीवन् शरीरी स्मरः ।
नागरी - कामिनी - पद्मिनी - कानने
रूप - लक्ष्म्या च वात्यायमानो ध्रुवम् ॥ ३२ ॥

प्रस्फुटच्छ्यामल - श्मश्रु - भृङ्गावली-
वेष्टिताऽम्भोज-वक्त्रो, मधु-स्यन्दिनीम् ।
मोहयन्तीं वशीकार - मन्त्रोपमां
सत्य - सौहार्द - हृद्यां गिरामुद्गिरन् ॥ ३३ ॥

---

1. शेषयन्=मुञ्चन् । 2. स्वामिनाम्=नृपाणाम् ।

सर्वदा स्मेरता - सुप्रसन्नाननः
ऐन्दवं मञ्जिमानं नयन् म्लानताम् ।
कान्त - कर्णान्ति - विश्रान्त - नेत्राम्बुजो
रत्नमन्यत् पयोधेः परं निर्गतम् ॥ ३४ ॥

पाणिपादे विशाले च भाले स्फुटैर्
लाञ्छितो लक्षणैर् [1]दिव्यता-चक्षणैः ।
ताल - तुल्यां बलिष्ठां दधानस्तनूं
मेघ - गम्भीर - घोषैर् द्विषो भीषयन् ॥ ३५ ॥

पद्मरेखाङ्कभृत्पाणि - पादः स्फुरत्-
पद्मराग - प्रभा - हारि - पादद्वयः ।
पद्मया प्रीति - पात्रत्वमासादितः
पद्म-नेत्रो बभौ कोऽपि पद्माकरः ॥ ३६ ॥

शृङ्खलत्वं गतैः कुञ्चितैः कुण्डलैर्
वीक्षकाणां बलादेव बध्नन् मनः ।
रत्न - रोचिष्णु - सत्कङ्कण - व्याजतो
[2]रत्नगर्भैकचक्रं दधानः करे ॥ ३७ ॥

मत्त - मातङ्ग - लीलागतिं चङ्क्रमैस्
तर्जयन् विभ्रमं सैंहमालोकनैः ।
कुण्डलान्दोलनैर् गण्डयोर् मण्डितः
चण्ड - कोदण्ड - विद्या - महापण्डितः ॥ ३८ ॥

कम्बुकण्ठः स कण्ठीरवाभां कटिं
गूढजत्रुः परास्तात्म - शत्रुस्तथा ।
वैरि - वेलाऽवरोधाय वक्षो दृढं
शैल - भालोपमानं विशालं वहन् ॥ ३९ ॥

व्याज - वर्जं दयोदार्य - वीर - व्रतो
धुर्य - धैर्यार्यवर्यः प्रतापार्यमा ।
शील - शाली च शालीनता - श्लाघितस्
साधुता - सौमनस्याऽतिभूमिं गतः ॥ ४० ॥

---

१. दिव्यता-चक्षणैः=देवत्वसूचकैः । २. रत्नगर्भा=भूमिः ।

तेजसां चौजसामद्वितीयो निधिस्
साहसोत्साह - साहाय्य - सूक्ष्मेक्षिकः ।
सर्वतोदिक्क - साम्राज्य - सौभाग्यवान्
चक्रवर्ती भविष्णुः प्रजावत्सलः ॥ ४१ ॥

मर्त्य - मात्रस्य माङ्गल्यमूलां मुदाम्
ईहमानश्च धर्मस्य संस्थापनम् ।
प्राञ्जनेयस्ततः स्वाशयापूर्त्तये
स्थास्नु-चेता दृढं [1]संन्यभान्त्सीत् कटिम् ॥ ४२ ॥

ओजसामाश्रयो ऽराजता - साध्वसं
संजिहीर्षुर् भविष्णुं स जिष्णुः प्रभुः ।
स्व - प्रतापं निनीषुः परां स्थास्नुतां
नाम-शेषां चिकीर्षुस्तथा [2]ग्लास्नुताम् ॥ ४३ ॥

द्रोह - रोहाय देशे सदेशेऽपि वा
लोभने क्षोभणे वा प्रजानां रतान् ।
संविधित्सुर् हताशानुदाराशयस्
सैन्य - सङ्घैः समं संचचाराऽभितः ॥ ४४ ॥

गान - गान्धर्व - योगैस्तथोच्चावचैः
स्वादिमोद्दाम - सर्पत्सुधा - [3]सारघैः ।
सोऽथ वाद्यैरभूत् सर्वतः सत्कृतो
दोलयद्भिर्दिशो ऽन्वीयमानो बलैः ॥ ४५ ॥

निर्भरं नृत्यतां नागराणां तथा
चर्चरीश्चक्षुषा चेतसा चाऽऽपिबन् ।
ब्रह्मवेदीव सायुज्यमागात् समं
ग्रामिकैरुन्मदैश्चापि साङ्ग्रामिकैः ॥ ४६ ॥

प्रीणयित्वा प्रजाः पार्थिवः स्वान्निधीन्
पूरयन् दूरयन् दुर्गतिं देशतः ।
मास्म भूत् कोऽपि दीनश्च दूनः पुमा-
नित्यदा[4]न्नित्यदाऽधीश्वरो वत्सलः ॥ ४७ ॥

---

१. अबध्नात् । २. हर्षक्षयम् । ३. सारघं=मधु ।
४. नित्यदा=सदा (दृश्यतां स्वरादिगणः) ।

वीक्ष्य काश्मीरिकाः सुप्रसन्ना जनाः
देश - [1]दायादमेनं तदा वास्तवम् ।
मङ्गलाकाङ्क्षिणः पुष्प - वृष्टिं व्यधुर्
यत्र तत्रोच्चकैश्चक्रिरे वा स्तवम् ॥ ४८ ।

युग्मकम्

पदात्पदं कुञ्चित - कुञ्जिताग्रे
नाना - शिलाभिः शबलीकृते च ।
उच्चावचे वर्त्मनि पर्वतीये
धराङ्किते रूपिणि भित्ति - चित्रे ॥

वीराऽश्ववारैरनुगम्यमानः
पार्ष्णि - प्रवेग - प्रचलत्पदातिः ।
स जग्मिवानश्वतमाऽधिरूढो
लीलां जिगायाऽजगरस्य राजा ॥ ४९-५० ॥

आः ! शूल-तुल्या अथ शल्य - [2]कुल्याः
पाषाण – धाराः पदवी - प्रसाराः ।
अपावृतास्या इव यान्त्रिकाणां
पादानखादन्निव संपिनद्धान् ॥ ५१ ॥

स्थलानि सर्वङ्कष - शीतिमानम्
अन्तर्दधानान्यपि चाऽतिमानम् ।
प्रसारयन्ति त्वचि कालिमानं
हा हन्त ! भान्ति स्म दहन्ति देहम् ॥ ५२ ॥

न लेशतोऽप्यङ्कुरिता[3]ऽनुतर्षा
भस्त्रायमाणोदर - वक्षसस्तु ।
उन्मुद्रितास्या अपि नैव तृप्तिम्
प्रापुः पुमांसः पवनं पिबन्तः ॥ ५३ ॥

शिलास्तुषारस्य तु शैल - शृङ्गाद्
द्रुतं लुठन्त्यो द्रु-लता दलन्त्यः ।
प्रसार्य पातैः पवि - घोर - घोषान्
उद्वेजयामासुरहो ! दिशोऽपि ॥ ५४ ॥

१. दायादम् = उत्तराधिकारिणम् ।
२. कुल्याः = वंशीयाः ।
३. अनुतर्षः = तृषा ।

प्राकार - हीना अपि शीततायास्
सूच्यस् सुसूक्ष्मा व्यधनं विधाय ।
स्थूलाम्बरैः कञ्चुकितेऽपि काये
मर्म-स्पृशोऽध्वन्य-जनस्य ह्या / ऽऽसन् ॥ ५५ ॥

घूर्णद् - घन - श्यामलिमाऽऽविलानि
प्रकाश - नाशोत्कट - सङ्कटानि ।
प्रासन्न प्रासन् कटकानि किं वा
कालेन कोपात् कवलीकृतानि ॥ ५६ ॥

वल्मीक - शैलादवतारभाजाम्
भुजङ्गमानामिव निर्झराणाम् ।
फूत्कार - फेनास्तु विदूरतोऽपि
[1]वाटे वितेनुर् विपुलं विकम्पम् ॥ ५७ ॥

कृत्वाऽध्व मैत्रीं विततैस्तुषारैर्
विष्वक् शिला - घट्टनया निशाताः ।
वातोर्मयो व्याघ्र - नखा इवाङ्गं
छिन्नं च भिन्नं विदधुश्च खिन्नम् ॥ ५८ ॥

प्राज्याः प्रदेशा गगनं कषन्तः
प्रश्वास - वातं नतरां ददानाः ।
प्राणानपि प्राणवतां विकृष्य
बलाद् बभूवुर् बहिराददानाः ॥ ५९ ॥

प्रत्यग्र - सम्पाति - [2]तुषार - चित्यां
शुद्धेन तूलेन तुलां गतायाम् ।
मोहाच्चितायामिव शीतलायाम्
ममज्जुरेके ऽ पुनरागमाय ॥ ६० ॥

वातोऽभिजातो यम - किङ्कराणां
[3]हुङ्कार - तङ्को हरि - घोर - घोषः ।
दुःस्पर्शन - स्फोटित - गात्र - गर्भात्
प्रास्यन्दयद् मन्दमिहाऽस्र - बिन्दून् ॥ ६१ ॥

---

१. वाटे=पथि । २. तुषार-चित्यां=हिम-राशौ ।
३. हुङ्कार-तङ्कः=हुङ्कार-भयम् ।

क्वाप्येकतोऽभूत् तटिनी गभीरा
विध्वस्त - तीरा परतोऽद्रि - धारा ।
पृष्ठे पुरो गण्डशिलाः पतन्त्यः
पान्थान् भयैः सम्पुटितानकार्षुः ॥ ६२ ॥

नीहार - धाराः परितोऽप्यपारा
नूनं नयन्तो जडिमानमाशाः ।
सङ्कोचयन्तोऽपि तथाऽन्तरङ्ग
व्यदारयन् कस्य न [1]रोम - भूमिम् ॥ ६३ ॥

उत्तस्थुरङ्गेषु न लोम - लेखाः
पुंसां परञ्चार्त्ति - तितिक्षयाऽत्र ।
शैत्यादुरीकृत्य पराजयं स्वम्
उत्तोलिताः पाणय एव नूनम् ॥ ६४ ॥

आदर्श - सादृश्यमुपागतासु
[2]श्लक्ष्णासु हैमीषु पुरः स्थलीषु ।
तीक्ष्णा स्फुरन्ती द्युतिरातपस्य
मार्गं दृशोरेकपदे रुरोध ॥ ६५ ॥

मार्गे पद - स्पर्शमवाप्य मन्ये
जाताऽवमाना कटकाभिलीना ।
धाः ! मानिनीवोन्नमिता हिमानी
दीनाध्वनीनान् स्खलयाम्बभूव ॥ ६६ ॥

वाद्यादि - घाते तुमुले प्रजाते
स्पन्दं च मन्दं गगने प्रयाते ।
क्वचित् कदाचित् प्रलयङ्करोऽभूद्
हिमोपलानां सहसाऽवपातः ॥ ६७ ॥

हैमैः प्रभावैर् जडिमानमाप्ता-
न्यङ्गानि नग्नानि कुतोऽपि घातम् ।
सम्प्राप्य भग्नानि कडत्कराणि
गतिं ययुः काच-शलाक-कल्पाम् ॥ ६८ ॥

---

१. रोमभूमिं=त्वचम् । २. श्लक्ष्णासु=चिक्कणासु ।

[1]श्वैत्यस्य शैत्यस्य पराऽविभाज्ये
प्राज्ये ततस् सर्व - पथीन - राज्ये ।
अधारि वेत्रत्वमधः पतन्त्या
मेघस्य [2]मेहस्य च धारयाऽपि ॥ ६९ ॥

तौषार - वर्षैस् समतामितानि
स्थलानि [3]सात्मीकृत - मूकिमानि ।
आलोक - मान्द्योदित - दिग्भ्रमाणि
कर्त्तव्यमूढान् व्यधुरत्र गन्तून् ॥ ७० ॥

सोऽथ काश्मीर - संस्पर्धिनः शोभया-
ऽनुक्रमं लङ्घयित्वा त्रिगर्त्तान् पुनः ।
किन्नराणां प्रदेशे सदेश - स्थिते
स्वागतीकृत्य सैन्योऽभवद् राजकैः ॥ ७१ ॥

शीतले मण्डले ये वराका नृपाः
शीतिमानं ययुः क्लीव-कल्पा हि ते ।
श्येनवद् येन वेगादुपेते प्रभौ
आञ्जनेये प्रपन्नाः कपोत - व्रतम् ॥ ७२ ॥

रत्न - हारैस्तथाऽन्योपहारैरसौ
पूजितस्तेजसैवाऽति - दूराज्जितैः ।
नीति-रीति-प्रवीणः शरण्योऽधिपः
प्रीति - पूर्वामभीतिं ददौ स्थेयसीम् ॥ ७३ ॥

प्रायशस्तत्र पिण्डेषु पुंसां प्रभा
रोचनी लोचनानां न नैसर्गिकी ।
मानवीनां नवानां शरीरेषु तु
धातृ - लावण्य - कोषो बभौ गोपितः ॥ ७४ ॥

एवमासौ विलासाननुत्कीर्त्तयन्
काव्य - सौभाग्य - संवीक्षणे दीक्षितः ।
कुत्सया कूणिताक्षैः रसज्ञैः कविर्
[4]बद्धमुष्टिर् यथा को भवेदीक्षितः ॥ ७५ ॥

---

१. श्वैत्यस्य=शुक्लतायाः । २. मेहस्य=मूत्रस्य ।
३. स्वाभाविक-मौनानि । ४. बद्धमुष्टिः=कृपणः ।

प्रम्लायिनी मन्मथ - काननस्य
लतेव काचित्तरुणी सलज्जा ।
उन्नाम्य मुग्धे नयने क्षणाय
विक्षोभयामास चिराय लोकम् ॥ ७६ ॥

ग्रामीण - गौरी परिभूषितैर्
श्रौत्पत्तिकैर् मौग्ध्य - मदैर् विलासैः ।
मदेन साकं मदने सा कं
चक्रेऽध्वगं मोहित - मानसं नो ? ॥ ७७ ॥

नेत्रत्वमेवाप्त - मनोभिरन्यौ
धन्यौ कुमारी श्रभिवीक्ष्य पश्चात् ।
चारुत्व - मन्त्रैरभिचार्यमाणाः
शून्या इवाऽन्योन्य - मुखान्यपश्यन् ॥ ७८ ॥

स्मर - [1]स्मयाब्धेर् लहरीव साक्षात्
स्वः - सुन्दरी - सौभग - सार - सृष्टा ।
सङ्कल्प - सम्पत् तरुणीह यूनाम्
अतिष्ठदस्थिष्वपि सम्प्रविष्टा ॥ ७९ ॥

मनोभुवो मूर्त्तिमतीव [2]माया
गौरी गरीयोगुण - गुम्फिताऽन्या ।
अनन्य - सामान्य - शरीर - शोभा
लोभावहाऽभूदपि [3]नैष्ठिकानाम् ॥ ८० ॥

त्रपां नवोढा - सुलभां दधाना
धाराऽधिरूढोन्मद - यौवना स्त्री ।
अस्त्री - कृताऽभून्मदनेन काचिद्
हृल्लुण्ठनायेव हहा ! ऽध्वगानाम् ॥ ८१ ॥

मीनेक्षणा मौक्तिक - दन्तपाली
कपोलपाली - मकराङ्ककान्तिः ।
लावण्य - सिन्धोरधिदेवतेव
ययौ वधूः काचन नेत्रमैत्रीम् ॥ ८२ ॥

---

१. स्मयः—मदः ।
२. दिव्यशक्तिः, इन्द्रजालम् ।
३. आजीवन-ब्रह्मचारिणाम् ।

आलक्ष्य - चञ्चत्कुच - कुम्भ - कण्ठा
रसस्य धाराः परितः किरन्ती ।
सुस्निग्ध - मुग्धेक्षरण - सद्विलासैः
काचित् कृतार्थीकुरुते स्म लोकम् ॥ ८३ ॥

दिव्यात्मिकानन्द - समुद्गमस्य
स्थली सरोजाऽवयवाऽभिरामा ।
अभ्यास - सिद्धेन प्रजासृजाऽसौ
काप्यम्बुज - श्रीरिव कल्पितासीत् ॥ ८४ ॥

वेलेव सा मञ्जिम - सागरस्य
सीमेव साक्षात् त्रिजगन्म्रदिम्नः ।
लीलाऽतिभूमिस् तरुणिम्न आसीद्
उन्मादिनी काचन मार - शक्तिः ॥ ८५ ॥

तस्या समाप्तः पटिमा विधातुर्
निःशेषतो रूप - विशेष - राशिः ।
मारस्य शान्ताऽथ शरान्तरेच्छा
क्लान्ता च माया कवि-कल्पनानाम् ॥ ८६ ॥

क्षणेन तां वीक्ष्य हृदां क्रियाश्च
सद्योऽवरुद्धा गतिरध्वगानाम् ।
ययुर् युवानः कृपणाश्च नेत्र-
निमीलनोन्मीलन - निःस्पृहत्वम् ॥ ८७ ॥

नवे निविष्टा तरुणिम्नि बाला
वक्त्रस्य सौन्दर्य - सुधा - प्रसारैः ।
यतस्ततो वाऽपि च जग्मुषीयम्
विनिर्ममे बिम्बमिवाऽमृतांशोः ॥ ८८ ॥

[1]प्रत्यग्र - सौभाग्य - मदाऽभिषिक्ता
शरीरिणी पञ्चशरस्य [2]शास्तिः ।
प्रस्थातुकामानपि पान्थ - सार्थान्
तस्तम्भ लीलामय - मन्त्रशक्त्या ॥ ८९ ॥

१. प्रत्यग्रं=नवीनम् । २. शासनम्, आज्ञा ।

विस्रस्त - वस्त्रेण च हेम - कुम्भ-
कल्पेन काऽपीह कुच - द्वयेन ।
बालाऽभिषिच्येव हृदिस्थ - मारम्
मायामयीमां वसुधां शशास ॥ ९० ॥

यतो गृहीत्वा नवनीत - सत्त्वं
[1]सितां सुधासूति - समुद्गतां च ।
सौन्दर्य - सारं च सरोजिनीनाम्
विरिञ्चिनाऽसौ व्यरचि प्रयत्नात् ॥ ९१ ॥

सखी - मुखान्नाम निशम्य तस्या
गाढं निमग्नं हृदि वाऽपि लग्नम् ।
सास्मर्यमाणाः सुचिराय चक्रुर्
वार्तासु गोत्र - स्खलनं युवानः ॥ ९२ ॥

साऽभ्यर्च्यमाना नव - यौवनेन
गात्रेषु सौन्दर्य - सुमोपहारैः ।
प्रमिश्रयद् येन गिरं तमेव
सपक्षपातं सुभगं व्यधत्त ॥ ९३ ॥

नीलोत्पल - स्पर्धि - विलोचनाया ;
कटाक्षबाणाः क्वचिदप्यमोघाः ।
स्थूलाम्बरैश्चापि हि वर्मितानाम्
प्रसह्य वेगाद् हृदयेष्वविक्षन् ॥ ९४ ॥

एकाऽतिवेलेन च यौवनेन
मुग्धोच्छलच्चारिम - चर्चनीया ।
भ्रू - दोलिकायां मुकुली - कृताक्षी
प्रेङ्खोलयामास हृदां शतानि ॥ ९५ ॥

नितम्ब - चक्रेण च चारु - चर्या
निरन्तरं चर्वित - शाटिकैका ।
सौन्दर्य - लक्ष्मीः सुम - वाटिकायाः
[2]स्मारीव लीलाऽत्र चलाचलासीत् ॥ ९६ ॥

---

१. सिता=चन्द्रिका । २. स्मारी=काम-सम्बन्धिनी ।

बभार लावण्यमियं प्रवाचाम्
अगोचरं प्रातिभ - चातुरीणाम् ।
दृशा निपीतेऽपि तृषा तु यस्मिन्
धृशायते स्माऽथ कृशायते स्म नो ॥ ९७ ।

लावण्य - लावण्यमहो ! विचित्रं
निषेवणाद् यस्य तनीयसोऽपि ।
एका तृषा हन्त ! तृषान्तरस्य
निरन्तरं कारणतां प्रयाति ॥ ९८ ॥

वपुष्मती मादकता मधूनाम्
एकीकृता कौसुम - कान्तिरेका ।
वाटीमुपेताऽद्य कुतोऽपि बाला
नित्यं कुमारैः प्रतिपाल्यते स्म ॥ ९९ ॥

योऽस्या अपश्यन्मुख[1]मुत्स्मयं स
तामात्मसादेव चकार नूनम् ।
पश्चादपश्यन्नपि यत् पुरस्तात्
पुनः स्फुरन्तीमिव वीक्षते स्म ॥ १०० ॥

तां प्रेक्ष्य काक्षेण हि मार्गयायी
लज्जालु - शीलां रति - रूप - लीलाम् ।
साक्षादपश्यन्नपि कोऽपि मायी
फलेग्रहित्वं स्व - दृशोरमंस्त ॥ १०१ ॥

काऽपीह काष्ठागत - चारुताऽङ्गे
स्मरस्य सर्वस्वमिवादधाना ।
कादम्बरी - मोहन - शक्तिरेव
चिक्रीड मुग्धाऽसुभिरङ्गनानाम् ॥ १०२ ॥

चेलाञ्चले सौम्य - समीरणेन
[2]पोप्लूयमाने हृदयादमुष्याः ।
नूनं बभूवांसि चलाचलानि
चेतांसि पुंसामपि चोदपप्तन् ॥ १०३ ॥

---

१. उत्स्मयम् = सस्मितं; प्रफुल्लम् ।
२. पोप्लूयमाने = पुनः पुनः कूर्दमाने; उड्डीयमाने ।

प्रत्येकमङ्गं प्रतिमान - बाह्यं
दध्रे परा नेत्र - शतेक्षणीयम् ।
आस्वादनेऽस्याः परितो वराकं
पर्याप्तमासीद् द्वितयं दृशोः किम् ? ॥ १०४ ॥

वेलेव लावण्यमयी पयोधेः
प्रसारयन्ती प्रलयं पुरस्तात् ।
अपाङ्ग - पातैः परतोऽत्र यूनी ।
पीयूष - वृष्ट्येव जगत् सिषेच ॥ १०५ ॥

उद्भासिताऽग्रे मुखचन्द्र - कान्त्या
पश्चात् [1]स्तृता केश-[2]तमिस्र-जालैः ।
ज्योत्स्नी तथासीद् युगपत् तमिस्रा
[3]क्षण - प्रदानात् [4]क्षणदैव काचित् ॥ १०६ ॥

विधिर् विधित्सुस् त्रिदिवस्य बालाः
शूर्पेण लावण्यमहो ! पुनानः ।
न्यपातयत् तस्य कणं प्रमादात्
स्यात् तेन जाता भुवि साऽद्वितीया ॥ १०७ ॥

भ्रू - कार्मुकारोपित - कटाक्ष - तीक्ष्ण-
ऽमोघेषुभिः सज्जित - यौवनायाः ।
अस्याः पुरश्चापभृतोऽपि शूरम्-
मन्याः कुरङ्गा इव दैन्यमीयुः ॥ १०८ ॥

वासन्तिकोऽभून्महिमा स्मितेषु
मितेषु [5]माध्वीक - मदो वचस्सु ।
सर्वासु चेष्टासु विलास - वासस्
तस्याश्छवि - स्वाम्यमिवोद्वहन्त्याः ॥ १०९ ॥

---

१. छन्ना ।
२. तमिस्रं=तमः ।
३. क्षणः=उत्सवः ।
४. निशा; सुखदा ।
५. माध्वीकं=सुरा ।

सौन्दर्य - पीयूष - [1]धुनीव रम्भा-
स्तम्भोरुदण्डा स्मर - मोहमाया ।
रम्भा - सवर्णा विदधे ऽध्वनीनान्
समाधि - लीनानिव काऽपि दीनान् ॥ ११० ॥

नवीन - निर्माण - कलेव धातुर्
विजृम्भणं किञ्चन चारुतायाः ।
विलास - मैरेयमदश्चरिष्णुः
काचिच्चकाशे [2]चिलिमीलिकेव ॥ १११ ॥

लोकैक - लावण्य - निधानभूता
सुशीलता - स्वादिम - सौभगाऽन्या ।
विलग्न - मध्या त्रिवली - तरङ्गैः
न वाहयामास मनः किमीयम् ॥ ११२ ॥

गीयेत गीर्गौरवितेन केन
मीयेत वा कल्पन - कौशलेन ।
पीयेत येनापि स मञ्जिमाऽक्ष्णा
जीयेत तस्यैव मनोऽसहायम् ॥ ११३ ॥

सौभाग्य - शीलान् हृदये दधाना
[3]इलातले ताः सुरदार - लीलाः ।
भेजुर् यतोऽतर्क्य - गुणैरुपेता
अन्योन्यमेवोपमितिं [4]महीलाः ॥ ११४ ॥

तं गाहमानोऽपि तथा जितात्मा
कल्लोलितं चारिम - वारिराशिम् ।
[5]ध्रौव्यं दधानो न तु लेशतोऽपि
विलोलिताऽन्तःकरणो बभूव ॥ ११५ ॥

---

१. धुनी=नदी ।
२. चिलिमीलिका=विद्युत् ।
३. इला=भूः ।
४. महिलाः ।
५. स्थिरताम् ।

मारो ऽनिवारोऽपि दृढं तदीयं
वेष्टुं न हृद्देशमलन्तमोऽभूत् ।
[1]मारो यतस्तेन तु देशतोऽपि
निर्वास्यमानस् सुतमां बभूव ॥ ११६ ॥

सर्वेश्वरत्वाप्ति - चिकीर्षितस्य
प्रतिष्ठमानस्य जगज्जयाय ।
तस्याऽरि - षड्वर्ग - जयस्तु तावद्
[2]ओङ्कार आसीत् सुभगम्भविष्णोः ॥ ११७ ॥

चाचल्यमानोऽचल - मण्डलेषु
समुद्धरन् द्वेषण - कण्टकांश्च ।
दुर्वार - वीर्योऽवततार देवस्
सैन्यैरसंख्यैस् सहितस् स्थलेषु ॥ ११८ ॥

अथो तैमिरं राज्यमुन्मूल्य विष्वक्
सरोजावलीमोजसा योजयंश्च ।
विमुच्योदयाद्रि जगद् रोचयन् खे
चकाशेंऽशु-किञ्जल्क-कान्तः [3]पपीः सः ॥ ११९ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-
विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते
'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'प्रवरसेनाऽभ्युदय-वर्णनम्'
इत्याख्य एकविंशः सर्गः समाप्तः ॥



---

१. मारः=हिंसा; स्मरः । २. ओङ्कारः=प्रारम्भः ।
३. सूर्यः ।

# द्वाविंशः सर्गः

परितः पूरयन्नाशा नाशायाऽलन्तमो द्विषाम् ।
[1]सेनाऽन्त - पदवाच्यो यो[2]राजराजो जयत्यसौ ॥ १ ॥

शैलकूटोत्कटैर् हास्तिकैः सोऽग्रतो
भञ्जयन् द्विष्ट-कोटान् जनं रञ्जयन् ।
आञ्जनेयो व्यधाद् वीर्य-शुल्का धरां
[3]हस्त-हार्यां क्रमादात्मशत्रुञ्जयः ॥ २ ॥

पार्श्वतो ब्रह्मवर्तेश्वराऽऽराधितो
ऽबाधितो[4]हास्तिनं लङ्घयित्वा पुरम् ।
केसरी वीक्षमाणोऽहितान् हेलया
खेलयामास तान् सम्परायाऽङ्गणे ॥ ३ ॥

त्राण - सम्प्राप्तये केऽपि भूपा ध्रुवम्
प्राण - नाशाप्तयेऽन्येऽभ्युपेयुश्च तम् ।
घासमास्ये निधायागमन् पाशवीम्
वृत्तिमेके च युद्धाश्वमेधे हताः ॥ ४ ॥

नाममात्रस्य श्रुत्याऽहसीं धावनम्
उत्सवाऽलौकिकोल्लास - सम्भावनम् ।
कंस - विध्वंसिनः केलिभिः पावनम्
एकतोऽसौ मुमोचाऽथ वृन्दावनम् ॥ ५ ॥

शस्त्र-शम्पा-शतैर् दीपयन्ती दिशः
कम्पयन्ती प्रचण्डा धरामण्डलम् ।
[5]क्रम्पिनी [6]कम्पना घस्मरा विद्विषां
दुर्जया वाजि-राजि-प्रवीराऽन्वयात् ॥ ६ ॥

---

१. विष्वक्सेनः ; प्रवरसेनः । २. भगवान् कुबेरः ; चक्रवर्ती ।
३. करग्राह्याम् । ४. हस्तिनापुरम् । ५. कूर्दमाना । ६. सैना ।

क्षुब्धाऽब्धि - वेलामिव दिक्प्रदेशान्
वाचालयन्तीं द्विषतो दलन्तीम् ।
बभूव कस्तां पृतनां निरोद्धुम्
अलन्तमः स्त्रीं विधवां विधित्सुः ॥ ७ ॥

मध्यदेशाऽटवी - पार्श्वं - देशेऽन्यदा
रात्रि - शेषे नरेशो निवेशे स्थितः ।
श्वापदानां सुखं तिष्ठतां तर्जनं
सैंहिकं गर्जनं शुश्रुवानुत्थितः ॥ ८ ॥

रक्षिभिस् सावधानैस् समन्ताच्चमूर्
गोपिता [1]काकतालीयवच्चुक्षुभे ।
मार्जयित्वा [2]प्रहस्तैर् विहस्ता दृशो
न्यस्तमस्त्रादि योधा दधुर् हस्तयोः ॥ ९ ॥

दन्तिनो दुर्दमा वैरि - वृन्देऽदयाः
सर्वदा मृत्युना युध्यमाना हयाः ।
सिंहनादेषु युद्ध - स्थले निर्भयाः
उन्मुखाश्चाऽभवन् [3]सामया ये [4]मयाः ॥ १० ॥

कण्ठ - दामानि केचिद् बलाच्चिच्छिदुः
शृङ्खलान्युच्चकर्षुः पुनश्चेतरे ।
[5]क्षोडमुत्पाट्य भङ्क्त्वाऽपि वा दुद्रुवुः
स्फारिताऽक्षाः परे चाऽऽयतं शश्वसुः ॥ ११ ॥

उत्प्रोथ - कुञ्चत् - स्फुरितोऽग्र - नासा
उच्छ्वास - धाराः स्वनिता वमन्तः ।
आघ्रात - वाता अथ विश्व-दिक्कं
स्थेमानमीयुर् न वृषादिकाश्च ॥ १२ ॥

हेतु - जिज्ञासया प्रेषितैः रक्षकैः
प्रत्युपेत्याऽऽश्वभूद् भूपतिर् ज्ञापितः ।
"हस्तिनः शावकं क्षुल्लकं केसरी
विप्रयुक्तं जनन्या जिघांसत्यसौ ॥ १३ ॥

---

१. सहसा । २. करतलैः । ३. व्याकुलाः ।
४. उष्ट्राः, अश्वतराः । ५. कीलम् ।

ज्ञात - सारा सनाथेभ - यूथेन च
तस्य माता [1]करेणुः कुतोऽप्यागता ।
[2]हास्तिकं वीक्ष्य तद् विघ्नितोपक्रमः
क्ष्वेडतीहैव पञ्चाननः कानने ॥ १४ ॥

इत्युपश्रुत्य सम्राट् कृपा - कोमलो
वज्र - घोरं कठोरं च विभ्रन्मनः ।
दुर्हृदां दोषिणां दण्डने दीक्षितो
दीन - हीनार्त्त - संरक्षणैक - व्रतः ॥ १५ ॥

क्षिप्रमादाय ढालं विशालं तथा
क्रूर - कालं करालं कृपाणं करे ।
मास्म भूच्छावको विक्षतः कर्हिचिद्
इत्यसौ दर्शितं तत् प्रपेदे पदम् ॥ १६ ॥

पूर्वमेवाऽत्र धीरा धनुर्धारिणो
बाण - मोक्षाऽवकाश - प्रतीक्षा - पराः ।
गुल्म - गूढं हरिं गर्जनोत्तर्जनं
हन्तु - कामा अभूवन्नदूरे स्थिताः ॥ १७ ॥

तान् नमस्कारिणोऽनीकिनी - नायकान्
सर्वथाऽमोघ - लक्ष्यापतत्सायकान् ।
ईषदाक्रोश - रोषाप्लुताक्षः शनैः
संरुरोधाऽथ मन्द - स्मितोऽबूबुधत् ॥ १८ ॥

"विश्वतो विश्रुता वीर-वर्या भटाः !
वेद्मि सर्वे भवन्तोऽत्र वीर्योत्कटाः ।
साहसे सिंह - संस्पर्धिनः सर्वथा
किन्तु शस्यो विधिर् नैष पन्थास्तथा ॥ १९ ॥

शौर्य - शौण्डीर्य - शाली रणे श्लाघितो
मन्यमानो मनागेव मानी [3]मृतिम् ।
कातरात्मेव कुर्वन् प्रहारं [4]स्तृतः
को नु गर्हामनर्हां वृणोत्वल्पधीः ॥ २० ॥

१. हस्तिनी । २. गर्जति । ३. मृत्युम् । ४. प्रच्छन्नः ।

अस्त्रिणश्चेन्निरस्त्रं हरिं कुर्वते
बाण – मोक्षैर् – गत – प्राणमन्तर्हिताः ।
क्रूरता स्याद् ध्रुवं प्रौढतापूरिता
दूरतां यास्यतीतस्तथा शूरता ॥ २१ ॥

वीर्यवद् – धैर्यकार्यार्य – मर्यादिनो
[1]युत्सु संशप्तकाः सिंह – संवादिनः ।
व्याजवद् – व्याधवृत्ति विदध्युर् यदि
क्लीवता [2]पीवरी [3]जित्वरी च त्रपा" ॥ २२ ॥

इत्युदीर्याऽञ्जसा राजसिंहः स्वयं
मर्दयन् नर्दनैः कुञ्जरारेर् मदम् ।
पातयित्वैकदेशे कृपाणं तथा
रिक्त-पाणिः समागात् तमास्कन्दिनम् ॥ २३ ॥

व्यात्त – वक्त्रस्ततः प्राणभृद् – भक्षणः
कुञ्चिताङ्गो रुषा रक्त – रूक्षेक्षणः ।
उत्थितो दण्डवच्चाततोद्यन्नखः
केसरी तं जिघत्सुर् झटित्याक्रमीत् ॥ २४ ॥

[4]प्रेतखातोपमं [5]पञ्चतां व्यञ्जयद्
विस्तृतं पूति – गन्धं वमत् पार्श्वतः ।
प्रेक्ष्य पञ्चाननस्याननं सैनिकाः
सम्भ्रमं विस्मयं च प्रपन्ना भयम् ॥ २५ ॥

मध्यतस् सोऽग्रपादौ हरेः पार्थिवो
वज्रकल्पोग्र – पाणि – द्वयेनाऽग्रहीत् ।
ताडयामास तेनैव तीव्रं बलाज्-
जिह्म – जिह्वं क्रमेणाऽथ तस्याननम् ॥ २६ ॥

भूतलस्थौ च सिंहस्य पादौ दृढं
सोऽथ पद्भ्यां पुनः पार्थिवोऽपीपिडत् ।
येन [6]रोरूयमाणः क्षणात् प्राग् हरिस्-
सन्ततं हन्त ! रोरुद्यमानो बभौ ॥ २७ ॥

---

१. रणेषु । २. स्थूला । ३. विजेत्री ।
४. शवगर्तः; म्र० कब्र । ५. मृत्युम् । ६. गर्जन् ।

मूक - नादं च भग्नाऽग्रपादं हरिं
श्रान्तमन्तर्नितान्तं स शान्तौजसम् ।
वेपमानं द्विधाकारमास्यत् परां
वूयमानेऽस्य देहे दयां दर्शयन् ॥ २८ ॥

राजसिंहेन तं सिंहराजं हतम् .
वीक्षमाणाः क्षमा - नायकस्याद्भुतम् ।
साहसं स्पर्धनीयं तथाऽलं बलं
सम्प्रहृष्टा समे सन्निकृष्टा भटाः ॥ २९ ॥

त्रास - वासा बभूवुश्च दासास्तु ये
ते प्रजाताः समुल्लास - लासास्तदा ।
केऽपि [1]विस्मित्य दिव्यात्म-शक्तेः प्रभोर्
वन्दिनो [2]वाऽत्र वीर्याऽवदानं जगुः ॥ ३० ॥

एवमाशासु संक्रान्त - कीर्तिः क्रमाद्
योजमानां शतं सोऽनिरुद्धोऽक्रमीत् ।
सेवयन् सज्जनान् सान्त्वयन् स्नेहिनो
देवयन् द्वेषणानां क्वचिज्जीवनीः ॥ ३१ ॥

[3]वैतसीं वृत्तिमस्याऽग्रतो ये ययुर्
मृत्यु - भीता मुखे वा तृणं ये न्यधुः ।
ते परोक्षाऽऽपदः सम्पदास्वादकाः
पुण्य - लक्ष्म्या वृतास्तेन चात्मीकृताः ॥ ३२ ॥

येऽपि सन्धित्सयाऽऽदाय हारान् करे-
षूपहारांस्तथा श्रद्धया भूभुजः ।
चक्रिरे पादयोस्तस्य चात्मार्पणं
ते व्यधुः स्वीय-सौभाग्य-सन्तर्पणम् ॥ ३३ ॥

विग्रहाऽऽराधने येऽभवन् साग्रहास्-
ते हताशा गताः काल - पाशान्तरे ।
ये निरस्तायुधा ऊर्ध्व - हस्तास्तथा
ते स-मस्ता प्रातिष्ठन् समस्ता द्विषः ॥ ३४ ॥

---

१. चकिता भूत्वा । २. इव । ३. वैतसीं वृत्तिम् — नम्रताम् ।

[1]मारवा लङ्घितास् तेन देशा भृशं
[2]मृष्ट-मार्गाः क्वचिद् घूर्णयन्तो दृशम् ।
वेगि-वात्या-छलादुच्छ्वसन्तस् स्वयं
पांसु-पूर-भ्रमैर् लोपिताऽऽशाऽम्बराः ॥ ३५ ॥

व्योममात्राऽऽवृताऽभाव - चित्रोपमाः
भावयन्तो भियं धूनयन्तो धियम् ।
दक्षिणेनोज्झितास्तेन केचित् ततः
शून्यता-बान्धवः सैकताः सिन्धवः ॥ ३६ ॥

[3]अम्मयाः केऽपि देशा जलौकादिभिः
क्लेशदा गाढ-जम्बाल - जालाकुलाः ।
आपदां चामयानां गृहाः स्थास्नवस्
तेन तीर्णाश्च कीर्णा मशैर् दंशकैः ॥ ३७ ॥

श्वापदानां शरण्यान्यरण्यान्यसौ
मध्यतोऽनन्तया सेनया सन्ततम् ।
पाटयन् हिंस्र - जन्तूंस्तथोच्चाटयन्
निर्भयानि स्थलानीव कुर्वन् ययौ ॥ ३८ ॥

जन्तवस्ते सरीसृप्यमाणा इह
[4]गन्तवः प्रायशो यैररुध्यन्त हा ! ।
जृम्भयैव ग्रसन्तोऽप्यसून् प्राणिनाम् !
[5]पिच्चितास्तस्य नागैः पुरोगामिभिः ॥ ३९ ॥

सैन्य - सङ्घेन साकं स सर्वेश्वरस्
तत्र कान्तार - भूमेर् व्रजन् प्रान्ततः ।
आलुलोके चरद् निर्भयं [6]धैनुकम्
[7]वात्सकं [8]चौक्षकं विश्वतोऽ[9]जाविकम् ॥ ४० ॥

---

१. मरु-सम्बन्धिनः । २. लुप्त-पथाः । ३. जलमयाः ।
४. पथिकाः । ५. पिष्टाः, पीडिताः । ६. गोसमूहम् ।
७. वत्स-समूहम् । ८. बलद-समूहम् ।
९. बर्कर-भेड-समूहम् ।

मालिनी रूपधन्याऽत्र कन्या स्थिता
शीतला संचरिष्णुर् दवोल्केव या ।
कौसुमी काऽपि कान्तार-कान्तिर् यथा
वल्लरी-सौरभस्याऽधिदेवी बभौ ।। ४१ ।।

काम-कल्पद्रुमस्याऽऽदिम - प्रोल्लसत्-
पल्लवेनेव किं निर्मितेनाऽभवत् ।
साऽधरेणाऽधिकं धैर्य - विध्वंसिनी
संस्कृता सर्वशस् सौभगेनाऽपि च ।। ४२ ।।

मोहयन्तीव मिश्रीभवच्चक्षुषो
यां दिशं प्रेरयामास सा स्वाननम् ।
मानसेषु प्रसुप्तो मुनीनामपि
साङ्गभङ्गं जजृम्भे ततो मन्मथः ।। ४३ ।।

हन्त ! निर्मथ्य लावण्य - दुग्धोदधिं
तस्य सारेण धात्रा ध्रुवं निर्मिता ।
नेत्रयोः पारणार्थं पृथङ् निह्नुतं
सा दधारोपहार-द्वयं वक्षसि ।। ४४ ।।

साऽधर - स्पर्श - संवर्धित - स्वादुतां
गीतिकायाः स्वर-स्फीतता-माधुरीम् ।
स्यन्दयन्ती, दिशः स्पन्दयन्ती 'मधु'
नाम नूनं वनस्याऽस्य चक्रे ऽर्थवत् ।। ४५ ।।

कोऽपि सङ्गी तदीयस्तथा [1]वांशिको
भाग्यभाजां धुरीणः प्रवीणो युवा ।
वाद्य - फूत्कार - दम्भेन दूरेऽपि सन्
हन्त ! सन्धुक्षयामास माराऽनलम् ।। ४६ ।।

मार - वीरस्य शस्त्री चरिष्णुर् ध्रुवम्
भूतलं जेतुमेकैव साऽलन्तमा ।
दिग्विजिगीषुं भटं वा [2]जिताक्षं प्रभुं
नाऽशतोऽप्याचकर्षाऽसकौ कुण्ठिता ।। ४७ ।।

---

१. वंशी-वादकः ।
२. जितेन्द्रियम् ।

पुष्करिण्या जले निर्मलेऽत्रैव च
कण्ठ - दघ्ने कलालाप - केलि - क्रियाः।
[1]पानहेतोरिवाऽस्ताः स्मरेणेषवो
मिश्रिता मीन - मालासु बाला बभुः ॥ ४८ ॥

जानुमात्रे जले यौवनोन्मादिनी
काऽपि तुङ्ग - स्तनी तोलयन्ती तनूम्।
पाणि-पादं पुनः प्रेरयन्ती तथा
तुम्ब-युग्मे तरन्तीव तोयेऽलसत् ॥ ४९ ॥

मार-दाहेन तातप्यमानां ध्रुवं
स्वर्ण-सृष्टामिवाऽऽभासमानां सखीम्।
वारयन्तीं मृषाऽऽवर्तिताङ्गीं च ताम्
अञ्जलि - क्षिप्तधाराऽपरा प्रासिचत् ॥ ५० ॥

मा स धाक्षीदमुष्या हृदिस्थं स्मरम्
इत्यहो! चिन्तयन्ती स्व-सख्याः स्तनम्।
पूजयामास रुद्रस्य पिण्डं यथा
पाणिना पात्यमानैः पयोभिः परा ॥ ५१ ॥

वीचि - विक्षोभिते जानु - दघ्ने जले
वीक्ष्य बिम्बं वराकी स्व-वक्षोजयोः।
तर्कयित्वेव कूर्म - द्वयीं सन्निधौ
[2]व्यंशुका ऽन्या निषण्णोत्पपाताऽञ्जसा ॥ ५२ ॥

चाटकैराश्च गोराटिका - वायसान्
तत्र डीनान् रुतं मारुते तन्वतः।
वीक्ष्य वैरल्यमाप्तांश्च लूनान् द्रुमान्
सोऽनुमेने पुरस्तात् प्रपन्नां पुरीम् ॥ ५३ ॥

तत्र चाऽदूरतः स क्रमेण व्रजन्
विश्रमं संविधास्यन् निवेशेऽभवत्।
प्रत्युपेतेन [3]दायैः समेतेन च
तत्प्रदेशाऽवनीशेन सम्मानितः ॥ ५४ ॥

१. उष्णीकृतस्य शस्त्रादेः शीते जले प्रक्षिप्य कठिनत्वापादनम् "पानम्" इत्युच्यते—To temper. २. नग्ना। ३. उपहारैः।

[1]वैतसीं वृत्तिमभ्येत्य च श्रद्धया
स्प्रष्टुकामं तदीयं पदाऽब्ज-द्वयम् ।
तं तदाऽऽगन्तुकं पूर्वमेवोत्थितः
स्निग्धवत् सोऽनुकम्पी दृढं सस्वजे ॥ ५५ ॥

तं प्रदत्तेऽथ चाऽऽसन्न एवासने
सन्निपण्णं प्रसन्नं गिरा मिष्टया ।
पृष्टवानाञ्जनेयः कुलाऽनामयम्
पाणिनाऽऽदाय पाणिं च चक्रेऽभयम् ॥ ५६ ॥

गौरवं किञ्चिदौत्सर्गिकं मानसे
धारयन्तस्तथा साधवः सौम्यताम् ।
मान-भङ्गं चरित्वा विनीतात्मनां
नाऽऽत्मनो जातु वाञ्छन्ति मानोन्नतिम् ॥ ५७ ॥

नो दयित्वा पर खेदयित्वाऽपरं
[3]नाऽश्यते शर्म नो वा शमः कर्हिचित् ।
नोदयित्वा विले मानिना दुर्बलं
नाश्यते स्वोदयो निर्दयेन ध्रुवः ॥ ५८ ॥

दूर-दृष्टचा प्रजा-मङ्गलं वाञ्छता
तेन भूपेन भूयोऽथ सम्प्रार्थितः ।
राजधानीं गतोऽन्वीयमानो भटैः
प्रत्युपेतैः स पौरैरभूत् पूजितः ॥ ५९ ॥

[4]मेदयद्भिर् भृशं मारुतं सौरभैः
पार्श्वयोर् वर्त्मनां मालिकैर् वीजितैः ।
सर्वदा पुष्पितैः पादपैः सर्वतः
सेव्यमानेव साऽभूत् पुरी सन्ततम् ॥ ६० ॥

हैम-कूटाभ-हर्म्यैः कषन्तीव खं
चन्द्रशालासु वादित्र-वाचालिता ।
मेदिनी-मौलि-मालायमाना ध्रुवं
स्पर्धनायाऽऽह्वताऽसौ सुराणां पुरीम् ॥ ६१ ॥

---

१. नम्रताम् ।
२. स्वाभाविकम् ।
३. न प्राप्यते ।
४. गाढं कुर्वाणैः ।

उन्नतैः केतनैर् हर्म्य - शीर्ष - स्थितैः
सर्वकालं समीरेण चान्दोलितैः ।
[1]व्योमसद्भिर् गृहीतैर् ध्रुवं [2]वीजनैः
पट्ट - राज्ञीव सा सेव्यमाना बभौ ।। ६२ ॥

सर्वतोऽगाध - कुल्याभ - खाताऽऽवृता
रेखया कीलितेवाऽरि-रक्षो-भयात् ।
सर्वदा तस्य देशस्य सा भूतये
तस्थुषी प्रत्यभाद् हन्त / बद्ध्वा कटिम् ॥ ६३ ॥

[3]"आञ्जनेयो धरित्रीं समानां शतं
शास्तु धर्म्यां विजेता धुरं धारयन्" ।
[4]एवमाम्रेडयन्तः प्रसन्ना जनास्
तं प्रसूनैरनूनैस् ततोऽवाकिरन् ॥ ६४ ॥

तूर्णमुद्घाटितं रक्षिभिर् गोपुरम्
वक्त्रमासीन्नगर्या [5]विमुद्री - कृतम् ।
सा चलत्केतु - शब्दच्छलात् तत्र च
स्वामिनं तं प्रवेष्टुं ययाचे मुहुः ॥ ६५ ॥

विक्रमाऽऽक्रान्त - [6]विश्वम्भरा - मण्डलं
तं निशम्याव्रजन्तं [7]धराऽऽखण्डलम् ।
शोक - मूकाऽधुना तेन दत्ताऽभया
सोल्लासेव विष्वक् पुरी शोभया ॥ ६६ ॥

तत्र वातोर्मिभिर् धूयमान - ध्वजाः
स्वागतोन्नादिता मन्दिर - श्रेण्यः ।
नूनमद्य प्रसादादुदञ्चत्करा
नर्तनं तेनिरे पार्थिवेऽभ्यागते ॥ ६७ ॥

सम्प्रविष्टं महाराजमेनं जना
यत्र तत्राऽपि [8]निष्पन्न - नीराजनाः ।
हारि - हारोपहाराऽर्पणस्य च्छलात्
श्रद्धया बाहु - पाशे न्यबध्नन् किमु ? ॥ ६८ ॥

१. खेचरैः, देवैः । २. व्यजनैः । ३ अञ्जनापुत्रः 'प्रवरः' ।
४. मुहुर् भाषमाणाः । ५. उद्घाटितम् ६. भू-मण्डलम् ।
७. भू-महेन्द्रम् । ८. कृतारात्रिकाः ।

चत्वरैश् चारुभिर् दीर्घ - [1]शृङ्गाटकैर्
विश्वतो वेष्टिता पुष्पवाटी - शतैः ।
सच्चरित्रैः पवित्रैस्तथा सुव्रतैर्
हृष्ट - पुष्टैश्च तुष्टैश्च जुष्टा जनैः ॥ ६९ ॥

राजधानी महामङ्गलालिङ्गिता
निर्जराणां नगर्याः कनिष्ठा स्वसा ।
नित्य - नृत्योल्लसत् - प्रीति - गीतोत्सवा
मण्डिता मुख्य-मागण मध्येऽभवत् ॥ ७० ॥

म्लानिरास्येषु पुंसां न वा दीनता
ग्लानिरालोक्यत क्वाऽपि नो हीनता ।
जीवनं स्मेरतोल्लास - लीलामयम्
[2]वर्णयामास तत्र प्रजाऽनामयम् ॥ ७१ ॥

सौभगं किं च रम्भाविलासाऽऽहृतम्,
क्वाऽप्यदृष्टा वशीकार-माया दृशोः ।
यौवनोद्दामता चाऽत्र [3]दोरन्तरे
मार - [4]साचिव्यमातेनिरे योषिताम् ॥ ७२ ॥

वृन्दशो वेश्म-वातायनादौ स्थिता
दूरतोऽभ्यर्चितस्येव नेत्राऽम्बुजैः ।
तस्य तारुण्य - कारुण्य - कीर्त्यर्चितं
श्रोत्र - पेयं च [5]गेयं रमण्यो जगुः ॥ ७३ ॥

तं वरेण्यं शरण्यं विपण्याः प्रभुं
निष्पतन्तं च निर्वर्णयन्तोऽन्यतः ।
[6]गृह्यमुत्सृज्य कर्माऽऽगता मानवा
मेनिरे विघ्न-कल्पान् निमेषान् दृशोः ॥ ७४ ॥

तारतम्येन यान्तो मिथस् तुङ्गतां
नेत्रवत्त्वं नयन्तो नराः सार्थताम् ।
तावदैक्षन्त रुद्धेन्द्रिय - [7]व्यापृतिं
यावदत्यैत् स तेषां दृशोर् दूरतः ॥ ७५ ॥

---

१. शृङ्गाटकैः=चतुष्पथैः । २. प्रकटीचकार । ३. वक्षसि ।
४. साचिव्यं=साह्यम् । ५. गीतम् । ६. गृह-सम्बन्धि ।
७. व्यापृतिं=व्यापारम् ।

गात्र - लावण्य - लक्ष्म्या रति - स्पर्धना
मार - रूपं तथाऽमार - रूपं स्त्रियः ।
पुष्प - वृष्ट्याऽऽद्रियन्ते स्म सर्वेश्वरं
लीलया ताडयन्ति स्म यद्वा सुमैः ॥ ७६ ॥

कल्पनातीत - लावण्य - वारांनिधिः
सोऽत्र पेपीयमानोऽप्यहो ! [1]तर्षितैः ।
कान्त - कर्णान्त - विश्रान्त - नेत्रैरभूद्
नागरीणां न चाऽलन्तमस् तृप्तये ॥ ७७ ॥

[2]द्वित्रमात्राऽवकाशाय वीथ्यग्रतो
जग्मिवांसं क्षमानाथमेनं स्त्रियः ।
वीक्षमाणा दृशोर् द्राघिमाणं विदुश्
चारितार्थ्यं गतं स्वं तथा जीवनम् ॥ ७८ ॥

यौवनोद्दाम - लीलाः किशोर्यस्तु तं
निर्निमेषं रहः [3]काक्ष-मालाऽर्पणैः ।
स्वामिनं शील - शालीनता - शोभनं
लोभनं क्षोभणं चेतसां वव्रिरे ॥ ७९ ॥

प्रोच्छलद् - रूप - लावण्य - लक्ष्मीमयं
दूरतः प्रस्फुरद् निस्तुलं प्राभृतम् ।
ताभिरन्योन्यतो गोपयित्वा मतिं
पूर्वमेवोपनीतं तदा सस्मितम् ॥ ८० ॥

हेलयाऽऽसां तदा खेलयन् जीवनं
तत्र सोऽभूद् दवीयान् दविष्ठो यथा ।
स्पर्धया धावमानानि चेतांस्यपि
दास्यमाप्तानि तासां तथैवाऽन्वयुः ॥ ८१ ॥

पार्श्वयोः श्रेणि - बद्धाश्च सौधा अपि
मारुतान्दोलितैर् वैजयन्ती - करैः ।
मूकिमानं वहन्तोऽपि किं स्वामिने
लोक-वाचालिताः स्वागतं व्याहरन् ? ॥ ८२ ॥

---

१. तृषितैः । २. मात्राः=क्षणाः । ३. काक्षः=कटाक्षः ।

क्वापि वीथ्यश्चतुष्कोण - कृत्तैर् ध्वजैस्
सूत्र-नद्धैस् त्रिकोणैः क्वचिद् वेष्टिताः ।
मेखला - मण्डिता वध्व एवाभ्रभुर्
वाद्य-नादोल्लसत्-किङ्किणी-शिञ्जिताः ॥ ८३ ॥

विप्रयुक्तेव नाथेऽभ्युपेते चिराद्
अद्य सर्वेश्वरे सा पुरी वस्तुतः ।
राजि-राजच्चतुष्कोण - केतुच्छलाद्
व्यक्त-दन्ता प्रहृष्टाऽभवद् हासिनी ॥ ८४ ॥

न त्रिकोण - ध्वजानामियं राजिका
[1]दन्त - वीथ्येव [2]शाणस्य संसूचिता ।
मार - दुर्वृत्तता – दानवं छेत्स्यते
[3]वर्धकिः पुण्य - रूपः प्रजानामिति ॥ ८५ ॥

कण्ठ - आरोपित - स्रक् पुरी - पूरुषैः
अद्धर्यकैर् द्रढिम्ना धृतः पादयोः ।
सादरं यन्त्रितो बाहु - युग्मे परैर्
[4]विप्रकृष्टैः परं पाशितः प्रीतिभिः ॥ ८६ ॥

सार्वभौमो भविष्यन् क्रमेणाऽवनीम्
वश्यतामानयंश्चाऽपि सौम्य - स्मितः ।
प्रीणिताभिः प्रजाभिर् मनः – पञ्जरे
यत्र तत्राऽप्यरोरुध्यतेव स्वयम् ॥ ८७ ॥

दैविकानां गुणानां शरण्यः प्रभुः
सर्व-सौभाग्य-लक्ष्म्या वृतोऽसौ तथा ।
अत्र वा तत्र विस्फारितैर् लोचनैः
पीयमानोऽभवद् गीयमानो जनैः ॥ ८८ ॥

येन देश-द्विषो दण्डनीया जिता
येन जाता तथा मेदिनी राजिता ।
ऐश्वरं धर्ममुद्घोषयन् किं न्वसौ
वर्णनीयो न चाऽऽकर्णनीयोऽपरैः ? ॥ ८९ ॥

१. दन्त-पङ्क्तिः-एव । २. क्रकचस्य । ३. तक्षा । ४. दूरस्थैः ।

मोचयन् दुर्ह्दामुद्धतानां मदं
रोचयन् सच्चरित्रं दिशां मण्डले ।
पापिनश्च प्रजा - तापिनः शोचयन्
तत्वरे [1]मार-वृत्तिं स सङ्कोचयन् ॥ ९० ॥

तेन पुण्यात्मना शोधिताः वैरिणस्
साधु-शीलं तथा बोधिताः [2]स्वैरिणः ।
तस्य काऽपीदृशी नो बभूव क्रिया
श्रेयसेऽभून्न या च प्रजानां प्रिया ॥ ९१ ॥

काश्चित् काल-कलाश्चाऽथ पुर [3]उद्वेल - कौतुके ।
तस्थुषस्तस्य सम्पूज्य वाचोऽध्यासीत् पुरी - पतिः ॥ ९२ ॥

प्रणयस्य परां भूमिं तं चारोप्य महा - मनाः ।
प्रविवेश बलैः साकं [4]निवेशं प्रवरेश्वरः ॥ ९३ ॥

युग्मकम्

प्रशान्तं पदशः प्रबोध - जनित - प्रातस्त्य - पुण्यक्रियो,
नीडस्थैर् विहगैः कल-स्वर-मिषात् प्राग् व्याहृत-स्वागतः ।
दिग्देवैरनिशं पुरो विनिहिताऽवश्याय - पाद्याञ्जलिर्,
हासोल्लासधरैर् लता-द्रु-निकरैर् गन्धाऽर्पणैः पूजितः ॥

स्मेराऽम्भोज - सरःस्थलीषु महयन् मत्ताऽलिमालोत्सवम्,
विष्वक् पुष्पित - वाटिकासु सरघा-गोष्ठीः समायोजयन् ।
कोक - द्वन्द्व - कृतं कुतोऽपि करुणाक्रन्दं क्रमान् मन्दयन्,
लुम्पन् सन्तमसं चचाल . पुरतः पूषा दिशो नन्दयन् ॥ ९४-९५ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-
विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण
प्रणीते 'त्रिवेणी' इत्याख्ये महाकाव्ये, 'प्राची-विजय-प्रस्थान-
वर्णनम्' इत्याख्यो द्वाविंशः सर्गः पर्यवसितः ॥



---

१. हिंसा-कर्म । २. स्वेच्छाचाराः । ३. प्रवृद्ध-हर्षे । ४. कटकम् ।

# त्रयोविंशः सर्गः

वाञ्छन्ति मायोन्मुख - मानसास्ते
शङ्खं च पद्मं यदि वाऽपि पद्माम् ।
दयानिधे ! देहि चतुर्भुज ! त्वं
स्व - पादपद्म - प्रणयं परं मे ॥ १ ॥

विजित्य वङ्गान् स ततः कलिङ्गान्
विनीय चैतस्ततिकान् प्रदेशान् ।
अलङ्घ्य - कान्तार - नदाननूपान्
चकार वश्यानथ कामरूपान् ॥ २ ॥

धाराधराः खे प्रलयङ्करास् ते
प्रायो जगर्जुर् [1]विषयेषु तेषु ।
उन्नम्य शुण्डाश्च गजाश्चमूनाम्
बवृंहिरे नूनममृष्यमाणाः ॥ ३ ॥

दिनेऽपि घोराऽत्र च कालरात्रिर्
घनौघ - जाता गगने जजृम्भे ।
कालीव साक्षात् प्रवरस्य काली
तस्तार भूमिं च घटा द्विपानाम् ॥ ४ ॥

[2]अद्वितीयं शौर्य - यशो दिशासु
प्रतिष्ठितं वैरि - वरूथिनीनाम् ।
स कालिमा तस्य गज - व्रजानाम्
मलीमसं तत्र चकार नूनम् ॥ ५ ॥

देश - द्विषां पार्थिव - दानवानां
दीन - प्रजोत्तापकरं प्रतापम् ।
शमं निनायाऽत्र च दान - वारि
सर्वेश्वरस्योन्मद - वारणानाम् ॥ ६ ॥

---

१. देशेषु ।
२. अनुपमम् ; अतुलनीयम् ।

अरिंदमस्याऽस्य गजेन्द्र - यूथैर्
आरोहकैस्तेषु तथा [1]वरूथैः ।
क्लिष्टा अशिष्टाश्च विरोधि - योधाः
जयाऽभिलाषैः सममेव पिष्टाः ॥ ७ ॥

मदोत्कटा जङ्गम - [2]कोट - कल्पाः
मतङ्गजा वाऽञ्जन - शैल - कूटाः ।
प्राग्ज्योतिषाऽधीश्वर - धैर्य - [3]वप्रान्
व्यध्वंसयन् वारण - गामिनोऽस्य ॥ ८ ॥

तैर् [4]हास्तिकैस्तस्य जगज्जिगीषोर्
वित्रासिता दूरतः एव दीनाः ।
भटाः स - [5]भेरुण्ड - घटा रिपूणाम्
वनान्यहम्पूर्विकया न्यविक्षन् ॥ ९ ॥

वन्यांश्च धन्यानभिभूय भूयो
भूपान् स - दर्पानथ हेलयैव ।
यथा स भूपः पुरतश्चचाल
तथा तथा भूरपि नामिताऽभूत् ॥ १० ॥

लावण्य - लिप्ताऽम्बु - विलम्बि - वेगैः
कर्णे जपद्भिर् बहुशश्च किञ्चित् ।
आगामुकैर् दूरत एव वातैर्
मेने महीपोऽम्बुनिधिं समीपे ॥ ११ ॥

श्रेणि - क्रमेण [6]क्रमुकाश्च नारी-
केलाश्च ताला गगनं कषन्तः ।
तस्थुस्ततः स्तब्धतयोपकूलम्
प्रदित्सवः पत्र - फलोपहारान् ॥ १२ ॥

तालास्तटान्ते तत - पत्र - जाला
वातस्य वेगेन विधूयमानाः ।
अन्तः - स्थितस्य स्व - रसासवस्य
मत्ता मदेनेव शिरांस्यधुन्वन् ॥ १३ ॥

---

१. सैन्यैः २. कोटः=दुर्गः । ३. वप्रः=प्राकारः ।
४. गजसमूहैः । ५. भेरुण्डाः=पक्षिणः । ६. पूगद्रुमाः ।

वातोर्मिभिर् धूत - शिखा विशाला
यद्वाऽत्र ताला रसपान - लुब्धान् ।
"हालाहलं तद् मधुरा न 'हाले''-
त्यवारयंस्तानभिधित्समानाः ॥ १४ ॥

प्राक्रमापयन् देश - दिशः: प्रतापैस्
स्वं गापयंश्चाऽत्र यशो महात्मा ।
[2]वीक्षोन्नमत् - तुङ्ग - तरङ्ग - कण्ठम्
प्राची – पयोधिं प्रवरः प्रपेदे ॥ १५ ॥

उत्पद्यमानांश्च [3]विपद्यमानान्
हिण्डीर - हासांश्च तरङ्ग-लासान् ।
स आलुलोकेऽथ पुरो विधातुर्
वपुष्मतीं पेशलतामनन्ताम् ॥ १६ ॥

दृष्ट्वा स तुङ्गानिह फेनिलोर्मीस्-
तुषार - संवीत - धराधराऽऽभान् ।
मत्सीध्वथो देश्य - वधू - विलासान्
सस्मार काश्मीर - वसुन्धरायाः ॥ १७ ॥

प्राप्तं प्रतीरे करुणालयं तम्
उद्वेलितो वा विततोर्मि - बाहुः ।
हिण्डीर - हासो [4]वरुणालयस्तु
प्रत्युज्जगामेव [5]सतीर्थ्यं - कल्पम् ॥ १८ ॥

कारुण्य - सिन्धौ प्रवरेऽभ्युपेते
प्रसारित - प्रांशु - तरङ्ग - [6]बाहुः ।
सिन्धुः सतीर्थस्य सभाजनार्थं
नदंन्नकार्षीज् जयघोषमेव ॥ १९ ॥

उत्कण्ठिताः पार्थिव - दर्शनार्थं
न श्रद्धयाऽऽपो नितरां बभूवुः ।
परं पयोधेरतिथि - प्रियस्य
प्रायो हृदुल्लोल - मिषाल्ललास ॥ २० ॥

१. मद्यम् । २. वीक्षायै=दर्शनार्थम् । ३. विनश्यतः ।
४. समुद्रः । ५. सतीर्थ्यः=सहपाठी । ६. बाहुः=भुजः ।

इतो व्रजन्त्यस् तत आव्रजन्त्यस्
संघट्टनं या ययुरूर्मयोऽत्र ।
राजाधिराजागमनोत्सवे ताः
कण्ठे लगन्ति स्म मिथः प्रसादात् ॥ २१ ॥

स्वस्तीति वाचा स ततोऽपि शस्तः
शास्ता समस्तैरपि सत्कृतोऽभूत् ।
महानिनादस्य मिषादुदन्वान्
तदेव तावत् पुनरन्वकार्षीत् ॥ २२ ॥

अधित्यकायामुदयस्य दूरे
स्थितं तनूजं लघु वाऽभ्युपेतुम् ।
दोधूयमानोच्च - तरङ्गहस्तः
[1]कल्लोलमालीन्दुमिवाऽऽजुहाव ॥ २३ ॥

हुङ्कार - गर्जान् प्रथयन् प्रचण्डान्
विखण्डयन्नुद्धत - [2]कूपदण्डान् ।
[3]उत्तम्भयन् क्वापि पयांस्यधीरः
प्रधूत - तीरः प्रववौ समीरः ॥ २४ ॥

वातो विलासीव पुनः प्रतीरात्
पश्चात् तरङ्गान् प्रणुदन् प्रवेगात् ।
किमङ्कात् [4]सागरमेखलायाः
धाष्ट्र्येन लज्जापटमुच्चकर्ष ॥ २५ ॥

ततोऽधिपाऽऽदिष्ट - पदे निविष्टे
सैन्ये स्वनैस्तर्जित - सिन्धु - घोषे ।
स्वच्छन्द - वाजिव्रज - ह्रेषितानि
दिगन्तरं मेदुरतामनैषुः ॥ २६ ॥

दोला - चला[5]ऽऽलानित - वारणानाम्
विस्तीर्णया श्यामिकया विचित्रः ।
आ दृष्टिपातात् सहसाऽऽविरासीत्
[6]तरङ्गमालीव परः प्रतीरे ॥ २७ ॥

---

१. सागरः । २. कूपदण्डान् = गुणवृक्षान् । ३. उत्पातयन् ।
४. भूमेः । ५. आलानिताः = बद्धाः । ६. सिन्धुः ।

स्थिते निवेशेऽथ वसुन्धरेशम्
बम्भ्रम्यमाणं मुदयोपकूलम् ।
निरीक्ष्य तत्कान्ति - कृताऽभिचारा
मन्येऽनिमेषा अधुनाऽपि मीनाः ॥ २८ ॥

विष्वग् जगत्यां प्रथितौ गभीरौ
पती प्रसिद्धावपि वाहिनीनाम् ।
सम्प्राप्नुतां सम्प्रति तुल्य - कक्षाम्
प्राप्तो महीपः स तथा [1]तरीपः ॥ २९ ॥

शुक्त्यादिकान्यत्र तटीषु सूर्य-
सुधांशु - भासा सुतमां [2]लसन्ति ।
अब्ध्यम्बराया धरणी - रमण्याः
शाट्यञ्चले स्युर् मणयः पिनद्धाः ॥ ३० ॥

[3]पाथोधि - वङ्कोत्तरणाशयेषु
पोतास्तरण्यश्च महातरङ्गैः ।
उत्थाप्य भूयश्च निपात्यमानाः
प्रेङ्खोल्यमाना इव रेजिरेऽत्र ॥ ३१ ॥

क्षेत्रेषु तत्रोपतटं समन्तात्
सज्जीकृतं तल्लवणं स्वजं वा ।
सिन्धूपरोधाद् यश एव मूर्त्तम्
पुञ्जीकृतं भूमिभृतो बभूव ॥ ३२ ॥

कालाऽनुकूलाऽम्बुधि - वङ्ककूले
तदैव दैवाद् ववृतेऽथ मेला ।
या रोचनी काचिदनन्यपूर्वा
व्यक्तिस्ततोऽभाद् विधि - चातुरीणाम् ॥ ३३ ॥

मेला न साऽऽसीत् प्रलयाम्बुवेला
वातावली वाऽपि भुवि भ्रमन्ती ।
घूर्णायमाना स्वयमेव वाऽहो !
बभूव वापी मदिरोदराऽसौ ॥ ३४ ॥

---

१. समुद्रः । २. द्योतमानानि ।
३. पाथोधि-वङ्कः=हिं० खाड़ी ; उत्तरणाशयः=हिं० बन्दरगाह ।

दिदृक्षया सर्वजितः किमेता
मत्स्यो महाब्धेर् बहिरभ्युपेताः ? ।
सौरभ्य - सूत्रैर् हृदयं हरन्ती
काऽप्यास्त चित्रोत्कुसुभा वनी वा ।। ३५ ।।

विभिन्न - वर्णा च विभिन्न - रूपा
भिन्नाऽङ्गसंस्थाऽप्यथ भिन्न - सज्जा ।
प्रत्येकमासीत् तरुणीह धन्या-
ऽनन्या तडिद्वा प्रलयस्य मूर्त्तिः ।। ३६ ।।

लावण्य - वार्धेर् लहरीव लोला
लीला - लतायाः कलिकेव काचित् ।
कन्दर्प - कल्पद्रुम - वल्लरीव
बाला विलासोल्लसिताऽसिरासीत् ।। ३७ ।।

सा सीकरैः सिन्धु - समीर - लातैर्
लिप्तेव लावण्यधराऽद्वितीया ।
कन्दर्प - सेनाधिपतेः पदेऽद्य
कृताऽभिषेका वरुणेन रेजे ।। ३८ ।।

निपीय तां वाटकिनः कुमारास्
तयैव सायुज्यमिवाऽभ्युपेयुः ।
कुतोऽन्यथैक्षन्त समन्ततस्ते
स्वप्नेषु तामेव च जागरेषु ।। ३९ ।।

काऽपीह नीलिम्नि निलीन - मूर्त्तिर्
वर्णान्तर - स्त्री - जयिनी विरेजे ।
को नाम वर्णोऽभिभवाय कृष्णस्या-
ऽलन्तमस्तावदिलातले स्यात् ।। ४० ।।

न श्यामिकां नीरनिधेः समीर-
संसर्गतोऽधात् सुभगे शरीरे ।
युवाऽक्षि - बाण - व्यध - वारणाय
बभार साऽयस्मय - [1]वारबाणम् ।। ४१ ।।

---

१. वारबाणम्=कवचम् ।

सा सैन्य - साम्या स्मर - सङ्गराय
सदाऽपि सन्नद्ध - समस्त - मूर्त्तिः ।
तारुण्य - लाम्पट्य - जुषां कटाक्ष-
[1]शरव्यतामैत् सहजैर् विलासैः ॥ ४२ ॥

कस्तूरिका - चर्चित - गात्र - यष्टिः
श्यामाऽपरा चारिम - चर्चनीया ।
मनोभुवो मूर्तिमतीव माया
प्रसह्य कं नो मुखरीचकार ॥ ४३ ॥

अन्याऽत्र धन्या हृदि मन्मथाऽग्नि-
शिखा - शतानीव बभार बाला ।
तद् - धूमधूम्नैव हि तच्छरीरे
मलीमसी श्यामलताऽऽविरासीत् ॥ ४४ ॥

दोला - स्थिता काऽपि नतोन्नतेन
नितम्ब - बिम्बेन नवा वधूटी ।
जङ्गम्यमानोर्ध्वमधो दिवाऽपि
चकार लीलां पुरुषायितस्य ॥ ४५ ॥

एकाऽक्षता[2] चारु - चकोर - चक्षुर्
वल्लीव चो[3]-द्यत्तरुणाऽवलम्बा
परैरुपालभ्य पुनः स्व - दैवं
दण्डायमानोच्छ्वसितैर् व्यलोकि ॥ ४६ ॥

विविक्षतोऽसौ नव - यौवनस्य
प्रसाधिता [4]वन्दन - मालिकेव ।
अनक्षरं रूपमदं ब्रुवाणा
चरिष्णुराज्ञेव बभौ स्मरस्य ॥ ४७ ॥

वैदेशिकी काऽपि च लक्तकाद्यैर्
बाला मृषा कल्पित - काय - कान्तिः ।
मुग्धान् ध्रुवं वञ्चयितुं कुमारान्
अनूप - देशेऽपि [5]मरीचिकाऽऽसीत् ॥ ४८ ॥

---

१. लक्ष्यताम् । २. कुमारीत्यर्थः ।
३. उदीयमान-युवक-कृताऽवलम्बा; उत्थितेन तरुणा=वृक्षेणाऽवलम्बिता ।
४. तोरण-मालेव । ५. मृगतृष्णा ।

घन - स्तनी कापि जनी दधाना
सौन्दर्य - सन्दोहमिवेह देहम् ।
काशिष्ण्ु - वातोल्लसदंशुकस्य
कन्दर्पकेतोस्तनुते स्म लीलाम् ॥ ४९ ॥

साऽऽचार इत्येव कृताङ्गभूषा
सौन्दर्य - सारोल्लसिताऽसिताङ्गी ।
मायामयी मन्मथ - [1]पिच्छिकेव
तारुण्य - साम्राज्यमहो ! शशास ॥ ५० ॥

काचित् किशोरी सुविषक्त - गात्र-
संस्था तथात्मीकृत - रूपभङ्गी
कण्डूतिमन्तःकरणे विधात्री
साक्षाज्जयश्रीः स्मर - भूभृतोऽभूत् ॥ ५१ ॥

पौष्पीं दधानोरसि काऽपि मालां
बाला स्मरान्दोलन - वल्लरीं वा ।
[2]पुम्भावमान्दोलयति स्म दृष्टा
रागैक - मूर्त्तिः स्फुटमेकिकैव ॥ ५२ ॥

मिलिन्द - माला - भ्रुकुटी - विलासा
[3]वृन्दार - बाला - वदनारबिन्दा ।
नीलोत्पलाक्षी नवमल्लिकाङ्गी
सुनिश्चितं सा स्मर - सम्पदासीत् ॥ ५३ ॥

काचिद् विधातुः प्रतिमा पटिम्नः
स्त्री - सर्ग - साम्राज्य - पदेऽभिषिक्ता ।
अव्याज - रम्यं वदनं वहन्ती
फलेग्रहित्वं नयने निनाय ॥ ५४ ॥

मारेण साक्षादनुशासिता याः
लीलाः सहोदर्य इवाऽदसीयाः ।
[4]पारम्परीणं द्रविणं च रूपं
लज्जा सखीभूयमिता तथाऽऽसीत् ॥ ५५ ॥

---

१. पिच्छिका=ऐन्द्रजालिकस्य मयूरपक्षगुच्छः । २. पुरुषत्वम् ।
३. वृन्दार-बाला=देव-बाला । ४ कुलपरम्परया प्राप्तम् ।

करण्ति - विश्रान्त - दृशोऽपरायाः
गत्वोपकर्णं जपतः स्म नेत्रे ।
"अव्याज - लावण्य - धरा धरायां
काऽप्येति नो तन्वि ! तुलां तवे"ति ॥ ५६ ॥

उद्दाम - तारुण्य - तरङ्गितायास्
तस्या मुखेन्दोः स्मित - चन्द्रिका च ।
विक्षोभ्य चेतोऽम्बुधिमध्वगानाम्
बलाद् वराकं विदधेऽतिवेलम् ॥ ५७ ॥

काऽप्यु[1]द्द्युतामम्बर - भूषणानाम्
प्रभा - प्रतानैस्तरला तडिद् वा ।
अन्धीकृतान् वै तरुणानकार्षीत्
पुरो यियासूनपि रुद्ध - पादान् ॥ ५८ ॥

साऽध्वन्य - दृक् - खञ्जन - वागुरेव
सीमा विधेः शिल्प - कला - पटिम्नः ।
बभूव चित्रा चरमेव रेखा
चारुत्व - चित्रस्य चमत्कृतिर् वा ॥ ५९ ॥

उपर्युरोजाऽद्रि - युगं च नीचैस्
तस्या दधानं जघनं घनं च ।
मध्येऽत्र मध्यं परिपीडितं सद्
ईर्ष्या - वशाद् वा कृशिमानमापत् ॥ ६० ॥

मनोरथानामपि काऽप्यगम्या
बभूव धारा मधुनः किशोरी ।
[2]नेत्र - त्रिभागेण निपीयमाना
या तृप्तयेऽकल्पत नैव यूनाम् ॥ ६१ ॥

स्तब्धैश्चिरं कर्णपुटैः कुमारा
आतृप्ति तत्कान्ति - रसं निपीय ।
ते रोद्धुमानन्दममन्दमन्तर्
न्यमीलयन् नेत्र - कपाट - युग्मम् ॥ ६२ ॥

---

१. द्योतमानानाम् ।    २. कटाक्षेण ।

तां पश्यतां पार्वण - चन्द्र - कान्त्ये-
[1]वोद्वर्तितां वाचि सुधां दधानाम् ।
नेत्राणि यूनां नितरां प्रसादाद्
उन्मुद्रितानीन्दु - मणी - बभूवुः ॥ ६३ ॥

कैवर्त - कान्ता रुचिरं दधाना
वस्त्राऽऽस्तृते वर्ष्मणि गौरिमाणम् ।
लावण्य - धीरैरथ वा समीरैर्
हृताऽङ्ग - लावण्य - विभा बभूवुः । ६४ ॥

लिप्तेव नीलोत्पलिनी - परागैः
रागैक - मूर्त्तिः सुषमा चरिष्णुः ।
कैवर्त - बालाऽत्र च काऽपि कूले
चेतः किमीयं न चलं चकार ? ॥ ६५ ॥

निष्कासिता नीरनिधेर् निजार्थम्
मत्स्येव [2]मत्सीक्षण - वेश - वासा ।
सा मीनकेतोः रुरुचे विलोला
नूनं त्रिलोकी - जय - वैजयन्ती ॥ ६६ ॥

स्तम्भाविवोरू नियतं तदीयौ
जगज्जिगीषोर् मदन - द्विपस्य ।
बभूवतुर् मन्दिर - मन्दुराऽग्रे
पुरश्च पश्चात् किमु बन्धनाय ॥ ६७ ॥

मरन्द - माधुर्य - धराऽधरेऽस्या
मुखारबिन्दे भ्रमराऽलकाली ।
आलम्बमाना मधुपान - लीलाम्
मदाऽऽधुता सन्ततमभ्यनैषीत् ॥ ६८ ॥

मुखेन राकारमणं जयन्ती
विष्टम्भयन्त्यप्यपरा तटस्थान् ।
उद्वेलयामास दिवाऽपि चाऽब्धिं
कल्लोल - मालाऽऽकुलितं विलोला ॥ ६९ ॥

---

१. उद्वर्तिता=लिप्तामित्यर्थः । २. मत्सी-तुल्य-नेत्र-वस्त्र-युता ।

तरङ्गितैर् नीरनिधेः समीरैः
सूक्ष्माऽम्बरैरावृत - गात्र - यष्टिः ।
सा कल्पना काऽपि कवीश्वराणाम्
वेलेव लावण्यमयी पराऽऽसीत् ॥ ७० ॥

सेर्ष्यं मिथो मञ्जिम - यौवनाभ्यां
तस्या वृतायाः सहसोपरिष्टात् ।
न कैर् गुणज्ञैः रस - मार्मिकैर् वा
वार्याणि वासन्तिक - वैभवानि ॥ ७१ ॥

समार्पिपत् काक्षमसौ रहो यं
नूनं स यूनो हृदय - क्रयाय ।
स्यात् प्राक्तरां प्रेम्ण इहाऽद्य [1]सत्यङ्-
कारो मदाप्लावित - यौवनायाः ॥ ७२ ॥

[2]अनाशितम्भवं रूपं तत्राऽऽ[3]सेचनकं दृशोः ।
किशोरी बिभ्रती कापि चक्रे यूनस्तपस्विनः ॥ ७३ ॥

कूलेषु कैवर्त - कुलैरिहाऽल्पाः
मीना वराकाः परिशोष्यमाणाः ।
दूराददृश्यन्त दयार्द्र - दृग्भिः
पान्थैर् दृढं मुद्रित - वक्त्रनासैः ॥ ७४ ॥

प्रास्तानि जालानि निषाद - वृन्दैः
स्थले स्फुरन्मीन - समाप्लुतानि ।
विरक्त - मुक्तानि गुणात्म - माया-
जालान्यभासन्त सवासनानि ॥ ७५ ॥

उत्कूर्दतां चोल्लुठतां झषाणां
शापैश्च हिंसा - जनितोग्र - पापैः ।
ते धीवराः श्यामल - लोहदेहाः
कालस्य [4]कैङ्कर्यमिवाऽत्र चक्रुः ॥ ७६ ॥

---

१. प्राग्दत्तं मूल्यम्, हिं० साई, फा० पेशगी । २. अतृप्तिकरमित्यर्थः ।
३. मोहकम् । ४. सेवकत्वम् ।

निपीय लावण्य - मधूनि मत्तश्-
चिराय कैवर्तक - कामिनीनाम् ।
शनैः शनैः स्याद् रसिकः [1]सरस्वान्
स्वयं स लावण्यमयत्वमाप्तः ॥ ७७ ॥

फेनायमानोऽजगरो यथाऽब्धिः
फूत्कार - घोषैः प्रथयन् भयानि ।
स्वाच्छन्द्य - रोद्धूनभितस्तटाद्रीन्
ग्राः / घस्मरोऽसौ निजगाल शश्वत् ॥ ७८ ॥

नावो निबद्धा अपि कूल - कीलैः
पूरेऽनुवारं प्लवन - प्रवृत्ताः ।
स्वैरं समुद्रे तरणाय तीव्रो—
त्कण्ठा [2]वराटान् बलवच्चकर्षुः ॥ ७९ ॥

पताकिनः पोत - वरा विदूरे
कल्लोल - पूरे खमिवोपयाताः ।
अधिष्ठितोत्तुङ्ग - धराधराणां
लीलाममुष्णन् सुर - मन्दिराणाम् ॥ ८० ॥

द्वंधं नयन्तस् सलिलानि पोता
द्वीपान्तरं दूरत एव यान्तः ।
[3]मत्स्याङ्गनानामतिदुर्लभानां
सञ्चारि - सद्म - भ्रममत्र चक्रुः ॥ ८१ ॥

तन्व्यस् तरण्यः सहसाऽधिरूढास्
तरङ्ग - दोलासु चलाचलासु ।
उत्प्लुत्य दूरं पतयालवो द्राग्
आन्दोलयन् कस्य भयान्न चेतः ? ॥ ८२ ॥

[4]अरित्र - पातैस् सह गीतिकानां
रोहाऽवरोह - स्वर - माधुरीभिः ।
स्वयं तरन्तो मुदिता निषादा
न्यमज्जयन् श्रोतृ - गणान् सुधाऽब्धौ ॥ ८३ ॥

---

१. सागरः । २. रज्जूः ।
३. मत्स्यपत्नी, इं० Mermaid. ४. अरित्रं = नौदण्डः, हिं० चप्पू ।

गीतानि तेषां मधुसात्कृतानि
प्रवासिनी - प्रीति - परिप्लुतानि ।
निपीय दीर्घं - स्वर - सौभगानि
शिरोऽधुनोत् किं स तरङ्गमाली ? ॥ ८४ ॥

सौरस्य - सौम्य - स्वर - गीतधाराः
सविभ्रमं दिक्ष्य उपेत्य कुल्याः ।
प्रकाशयन्त्यः प्रणय - प्रकर्षम्
पतिं पयोधिं परितश्चुचुम्बुः ॥ ८५ ॥

[1]काशिष्णु - काया लघवोऽत्र मीनाः
खमुत्पतन्तो मुदितास् तमीषु ।
ज्वाला - करालस्य तले स्थितस्य
रेजुः स्फुलिङ्गा इव वाडवस्य ॥ ८६ ॥

उद्दाम - वेगा गगनं लिहन्तस्
तुङ्गानि तीराणि च ताडयन्तः ।
रौद्राट्टहासास् तुमुलास्तरङ्गाः
क्वाऽप्युद्धतं ताण्डवमन्वकार्षुः ॥ ८७ ॥

गभीर - नीरे [2]तिमयस् तरन्त
आसारमुच्चैः श्वसितैः क्षिपन्तः ।
धारागृहाणीव विकल्पयन्तो
वार्धिं क्वचिद् वारिदतामनैषुः ॥ ८८ ॥

ज्योत्स्नीषु बिम्बोऽत्र सुधाकरस्य
स्वच्छे कुतश्चित् सलिले निविष्टः ।
विहारिभिस् तत्र मुदोपकूलं
दृष्टः सुधा - कुम्भ इव द्वितीयः ॥ ८९ ॥

तोये स्थिरे तारकिताम्बरस्य
रत्नाकरोऽसावुपलभ्य बिम्बम् ।
सुव्यक्त - मुक्तामणि - मञ्जिमाढ्यो
विलोभयामास न दर्शकं कम् ? ॥ ९० ॥

---

१. काशिष्णुः = उज्ज्वलः । २. बृहन्मीनाः, Whales.

पूर्णेन्दु - बिम्बं प्रतिपद्य चाऽयं
हृतं पुरा कौस्तुभमेव भूयः।
कल्लोलमाली समवाप्य गर्जन्
सोल्लास - लासं भृशमाततान ॥ ९१ ॥

खरैः करैरस्य जलेचरा मे
सन्तापिता मा स्म भवन्नितीव।
बभौ स [1]छायामयमुष्णरश्मिं
निष्कासयन्नूर्मि - परम्पराभिः ॥ ९२ ॥

नीरं नदैर् दृप्ततया वितीर्णम्
वेलोर्मिभिः प्रत्यददात् तदब्धिः।
एवं प्रदाने विनिमीयमाने
स्यात् कोऽधमर्णश्च क उत्तमर्णः ? ॥ ९३ ॥

तत्रैव चोत्तुङ्ग - लसत्तरङ्गा
वराङ्गनाऽऽस्तीर्ण - पयोधराङ्गा।
पयोधिना वेगवताऽऽप्तसङ्गा
साऽऽलिङ्गिताङ्गीव विभाति गङ्गा ॥ ९४ ॥

दीनाऽबलानां [2]करदः स्वयं सन्-
अनुक्रमेणाऽथ पदे पदेऽपि।
विक्रम्य [3]दृप्रान् दमयन् महीपान्
दयाकरोऽसौ करदीचकार ॥ ९५ ॥

पृष्ठं प्रदर्श्य प्रधनात् पलायिताः
पातारमप्राप्य परत्र पीडिताः।
प्रत्येत्य पृथ्वीपति - पाद - पातिनः
प्रादर्शयन् पृष्ठमहो ! पुनः परे ॥ ९६ ॥

तच्चाप - मुक्तोरग - कल्प - बाण -
फूत्कार - वातैः समरे रिपूणाम्।
प्रताप - दीपाः ककुभो दहन्तो
निर्वाणतामेकपदेऽभ्युपेताः ॥ ९७ ॥

१. प्रतिबिम्बितम्। २. हस्त-दाता, सहायक इत्यर्थः। ३. गर्वितान्।

सुहृद् बभूवानपि सोऽखिलानाम् ।
लोकाऽहितानामसु - हृद् बभूव ।
प्रजा - हितानां न हि रक्षणाय
योऽलन्तमः किं नु स [1]लोकपालः ? ॥ ९८ ॥

धीरो धरां धर्म - धरां विधाय
प्रदक्षिणीं - कर्तुमिवाऽभिकाङ्क्षी ।
स वामतो वार्धिमथो विमुञ्चन्
व्यावर्तयामास वलान्यवाचीम् ॥ ९९ ॥

असोढ - तत्तीव्रतम - प्रतापा
भीत्यैव विष्वग् विसरद् - विलापा ।
वासेषु वीरैरकृत - प्रणाशा
पराजिताऽजायत दक्षिणाशा ॥ १०० ॥

द्विषोऽत्र सर्वेश्वर - [2]कम्पनाया
निस्त्रिंश - [3]शम्पा - लसितैः सकम्पाः ।
आतङ्किताः शङ्कित - जीवनाश्च
वैवश्य - हेतोर् विविशुर् वनानि ॥ १०१ ॥

ये चातुरीं स्वामथ [4]चक्रिकाभिः
प्रादर्शयंस्तान् प्रतिरोध - कारान् ।
कारासु गुप्तान् विषयाद् विलुप्तान्
[5]चक्राणि चक्रुः प्रवरस्य भर्तुः ॥ १०२ ॥

पराजयोऽरेर् न तु तच्चमूनाम्
परिक्षयस् तस्य बभूव लक्ष्यम् ।
स्निग्ध - स्वभावैरिह पुण्य - पक्ष्यं
यत् प्राणिनां स्याद् हितमेव रक्ष्यम् ॥ १०३ ॥

जित्वा जनानां हृदयानि चाऽत्र
दयानिधिः स्वार्थमपास्य दूरे ।
मित्रैरमित्रैरपि चाऽविभाज्यं
संस्थापयामास स धर्म - राज्यम् ॥ १०४ ॥

---

१. भूपः । २. कम्पना=सेना । ३. शम्पा=विद्युत् ।
४. उपजापैः । ५. सैन्यानि

दानाऽम्भसा तस्य बभूव सिक्ता
वसुन्धरा वारण - गामिनोऽत्र ।
दानाऽम्भसा चाऽथ मतङ्गजाना-
मभ्युक्षिताऽभूद् धरणी रणस्य ॥ १०५ ॥

क्रोडीकृतं वीक्ष्य जयश्रिया तं
निरन्तरं विश्वजनीन - वृत्तिम् ।
सापत्न्य - पीडामनुमाय कीर्त्ती
रुषाऽन्वितेवाऽभ्यगमद् दिगन्तम् ॥ १०६ ॥

इत्थं स तत्राऽपि च चक्रवर्ती
चक्रे स्व - सेना - रथचक्र - रेखाम् ।
रक्षा - निमित्ताद् वसुधा - तलस्य
याऽऽसीत् कृता मन्त्रविदेव लेखा ॥ १०७ ॥

तं दाक्षिणं दक्षिणतः प्रदेशम्
पश्चात् परित्यज्य दिनैः कियद्भिः ।
धन्यैर् धरेशैरकृतोपरोधः
प्रापद् विपश्चित् स च पश्चिमाशाम् ॥ १०८ ॥

अमुष्य बाधा विनिवारयन्तस्
ते वारणा एव यथार्थ - संज्ञाः ।
तदेक[1]दन्तस्य शुभङ्करत्वम्
मार्गेऽन्वकुर्वन् [2]प्रभविष्णुतां च ॥ १०९ ॥

गतायुषस् सीम्नि ततोऽप्यकाण्डे
बुभूषवः प्राघुणिका यमस्य ।
कस्याऽपि मत्तस्य नृपस्य योधाः
[3]वीर्याऽस्मिमन्तो रुरुधुर् बलं तत् ॥ ११० ॥

शौर्योन्मदा वेपित - दिक् - प्रदेशास्
तत्पत्तयो मूर्त्त - विपत्तयो वा ।
कालस्य साचिव्यमिवाऽभ्युपेता
अकाल - हीनं रिपुमभ्यधावन् ॥ १११ ॥

---

१. गणेशस्य । २. प्रभुतामित्यर्थः । ३. बलाभिमानाः ।

[1]शौण्डीरतैषामथ शूरतायाः
कथं नु कथ्येत मितैर् वचोभिः ।
जिगीषुताया अपि पूर्वमेव
ये जिष्णवो वैरि - पुरेष्वगर्जन् ॥ ११२ ॥

कातर्य - हीने सह - युध्व - वर्गे
वीरोचितं लोकमितेऽवशिष्टैः ।
पलायमानैः परिपन्थि - सार्थैर्
व्यरच्यतैभ्यः पर - राज्यमार्गः ॥ ११३ ॥

शस्त्रास्त्र - धारा - स्रवदस्र - धारे
रणाङ्गणे वैरि - गणा निमग्नाः ।
तदङ्गनानां च विलापिनीनां
दृशोऽस्र - धारासु गृहाङ्गनेषु ॥ ११४ ॥

चक्रैस्तदीयैर् [2]द्रुत - चक्रवातैः
[3]प्रस्तावनाभिः प्रलयस्य वा तैः ।
उद्धूलयद्भिः ककुभोऽरयोऽन्ये
पलायितुं चाऽपि कृता अनीशाः ॥ ११५ ॥

ये वैतसीं वृत्तिमुपेयिवांसो
न पातितास्ते प्रणिपात - नम्राः ।
उत्कन्धरा दर्पधरा धरेशा
नीताश्च नाकं तृण - तूल - तुल्याः ॥ ११६ ॥

[4]गाजं च माङ्गल्य - मुखं चमूनाम्
मुखे व्रजद् [5]बृंहित - भव्य - गीतम् ।
व्यलोकि चाऽश्रावि विरोधि - योधैः
कृतान्त - सन्देशमिव ब्रुवाणम् ॥ ११७ ॥

अवार्य - वीर्यैर् वर - वीर - वृन्दैर्
[6]आम्रेडितान् स्वामि - जयस्य घोषान् ।
[7]उद्गूर्ण - शुण्डैः कृत - गर्जितानि
ध्रुवं धमन्ति स्म गज - व्रजानि ॥ ११८ ॥

---

१. गर्वः । २. वेगवद्-वातावर्तैः । ३. प्रारम्भैः । ४. गज-समूहः ।
५. बृंहितम्=करि-गर्जितम् । ६. पुनरुक्तान् । ७. उत्थापित-करैः ।

संचारि - दुर्ग - प्रतिमान - भाजां
दन्तावलानां गज - गामिनोऽस्य ।
भ्रमान्ति गात्रेषु बलानि दान-
रूपेण निर्भिद्य कटान् निरीयुः ॥ ११९ ॥

राज्ञां प्रजा - शोषण - पेशलानाम्
उत्साह - भङ्गाय बभूवुरस्य ।
वाता मदस्रावि - मतङ्गजानां
गन्धान् समादाय पुरश्चरन्तः ॥ १२० ॥

कालायस - स्तम्भ - पदाऽभिघातैः
सुखेन पिष्ट्वोद्धृत - कण्टकांश्च ।
मार्गाः शिला - दन्तुरिता गजैस्तैर्
नम्रीकृताः कापथ - गामिनोऽपि ॥ १२१ ॥

प्राशा। कृता यैरधमैरधीनाः
प्रजा रुदत्यो विवशाश्च दीनाः ।
प्राशाभिरेतेऽप्यभवन् विहीना।
प्राप्ता यदा प्रावर - सांयुगीना। ॥ १२२ ॥

हया हसन्तः खर - हेषयाऽरीन्
खलीन - संरुद्ध - मुखत्व - हेतोः ।
[1]द्रावोच्छ्रिताभुग्न - खुराग्र - दन्तैः
पुरो रिपूणां न्यगिलन्निवोर्वीम् ॥ १२३ ॥

ये स्वैरिणः पार्थिवताऽवलेपाश्
चार्वाक - चर्या इव भिन्न - शीलाः ।
ते जङ्गमैर् लोह - नगैस्तु नागैः
पिष्टा ययुः [2]पार्थिव - रूपमेव ॥ १२४ ॥

प्रशान्ति - दानैर् विजयाऽवदानैः
शौण्डीर्य - शौर्याण्यपि मण्डयन्तः ।
दुष्टाऽघपुष्टान् लघु दण्डयन्तः
वे डीयमाना बभुरश्ववाराः ॥ १२५ ॥

---

१. द्रावः = द्रुतगतिः ।    २. मृत्तिका-रूपम् ।

झञ्झायमानेऽमित - शौर्यमाने
विधूनिताऽनन्त - दिगन्त - देशे ।
प्रतिष्ठमाने प्रवरस्य सैन्ये
तेनुर् द्विषः पत्र - पलाल - लीलाम् ॥ १२६ ॥

[1]चक्री भविष्णुः करुणांक - धर्म-
साम्राज्य - नेता जनता विनेता ।
तान् दुर्विनीता[2]नुदतिष्ठिपत् स
ये मार - मोहेन तदा प्रसुप्ताः ॥ १२७ ॥

एवं क्षितीशः क्षितिजान्त - दृश्यैस्
तैर् वाधि - वेलामिव वर्धमानैः ।
कटाक्षितः सन् विजय - श्रियाऽऽशां
स [3]वारुणीमाशु वलैर् विवेश ॥ १२८ ॥

चण्डरश्मौ प्रतीचीं प्रयाते तदा-
ऽनुक्रमं. साऽथ दन्दह्यमानेव दिक् ।
शोणिमानं ततः श्यामलत्वं गता
मूकिमाऽमोचि घूकैस्तथाऽन्तर्हितैः ॥ १२९ ॥

समस्त - सैनिक - प्रियः
समाप्त - दैनिक - क्रियः ।
[4]न्यविक्षताऽथ सन्मतिः
स विश्रमाय भूपतिः ॥ १३० ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि-विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा पाराशरेण प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये, 'प्रवर-दिग्वजय-वर्णनम्' इत्याख्यः त्रयोविंशः सर्गः परिणतः ॥



---

१. चक्रवर्ती । २. उत्थापयामास; उदबोधयत् ।
३. पश्चिमाम् । ४. कटकं प्राविशत् ।

# चतुर्विंशः सर्गः

तमांसि तिरयेस् तारे ! त्विकं तापस्य तीरयेः ।
दुर्धर्षान् द्विषतो दोषान् देवि ! दारय दूरय ॥ १ ॥

प्राच्या। प्रदेशेषु च दक्षिणस्याः
क्रमात् परिक्रामत एव नित्यम् ।
तटेषु नद्यब्धि - नगाऽवटेषु
तस्याऽथ केचित् [1]समया व्यतीयुः ॥ २ ॥

प्रालेय - पात - प्रलय - प्रभीता
मौक्यं गता प्रागथ शैशिरी श्रीः ।
इतोऽमुतो [2]विष्किर - काकलीनाम्
मिषेण मन्ये मुखरी - बभूव ॥ ३ ॥

वरो विवाहेऽपर - यात्रिकाणाम्
पुरस् सुमंस् सज्जित एति यद्वत् ।
ऋत्वग्र - यायी [3]सुरभिस् तथैव
शनैः प्रकृत्यङ्गनमाविवेश ॥ ४ ॥

प्रत्यग्र - जातैर् मृदु - शाद्वलैश्चा-
ऽऽश्लिष्टा तुषारोपचितैर् धरित्री ।
रोमाञ्चिता स्वेद - कणैश्च कीर्णा
प्रसेदुषीवाऽतितमां विरेजे ॥ ५ ॥

लताद्यमुत्कोरकतामयासीद्
उत्पुण्डरीकत्वमिता। सरस्यः ।
विलासिनं वीक्ष्य वसन्त - बालम्
भूः साङ्कुरा चोत्पुलकत्वमाप ॥ ६ ॥

---

१. ऋतवः । २. विष्किरः=पक्षी । ३. वसन्तः ।

मरन्द - मैरेय - मदेन मत्तैर्
मिलिन्द - वृन्दैर् लतिका वनीषु ।
झङ्कार - वक्रोक्तिभिरीर्यमाणा
मृदु स्मयन्ते स्म मधूत्सवेऽस्मिन् ॥ ७ ॥

दिगन्तरे कोमल - काकलीभिर्
विकीर्य माध्वीक - सुधा - मधूनि ।
समुल्लसन्तो विहगा वनीषु
वितेनिरे स्वागत - गीतकानि ॥ ८ ॥

शीतेन कोर्मी स्थितिमभ्युपेतं
गात्रं स्पृशन्नप्रखरैर् मयूखैः ।
द्यु - मेखलामध्यमणीयमानस्
सौम्य - स्वभावस् स्वदते स्म सूर्यः ॥ ९ ॥

आश्लिष्यमाणा मलयानिलेन
कम्पाकुला कण्टकिता च भूयः ।
मरन्द - सौगन्ध्य - भरोन्मदिष्णुः
वनस्थली प्रीति - रतिं व्यतानीत् ॥ १० ॥

'मारो वराकः प्रवरेण दूरम्
विद्राव्यतेऽसौ परितः प्रदेशम् ।
इत्येव चेतः - कुहरेषु यूनाम्
'मारोऽपरः स्वैरतयोल्ललास ॥ ११ ॥

जिष्णुर् जगत्या मदनो यथार्थं
त्रिनेत्र - भीतोऽपि वराङ्गनानाम् ।
हार - प्रपात - स्तनशैल - दुर्गे
हृदि स्थितस् सम्प्रति वीत - शङ्कः ॥ १२ ॥

पराग - सौरभ्य - सखस् समीरस्
सन्धुक्षयन् सुप्त - विलास - वह्निम् ।
चेतांसि चक्रे जरतामपीषत्
तारुण्य - तारल्य - तरङ्गितानि ॥ १३ ॥

---

४. हिंसा ; कामः ।

पिकाः स्वनोदञ्चित - पञ्चमाश्च
मूकाश्चिरात् सम्प्रति वावदूकाः ।
सेकैः सुधायाः समजीवयन् किम्
पञ्चेषुमै[1]शाऽनल - भस्म - शेषम् ? ॥ १४ ॥

मन्द - स्मिता मञ्जरिता व्रतत्य
उन्मादयन्ति स्म मधु - प्रदानैः ।
प्रीत्या पुनश्चुम्बन - लम्पटानि
लोलानि [2]रोलम्ब - कदम्बकानि ॥ १५ ॥

यथा यथा मालतिका - निकुञ्जे
प्रचक्रमे [3]सौमनसो विकासः ।
तथैव मानस् तिलशः क्रमेण
मम्लौ महीयानपि मानिनीनाम् ॥ १६ ॥

साङ्गत्यमाप्ताः सरघा - समूहा
आसार - झङ्कार - झरी - प्रसारैः ।
अबूबुधन् काम - कलत्रमत्र
"कान्तस्तवाऽद्यापि स जीवती"-ति ॥ १७ ॥

खमुत्पतन्तः पुनरापतन्तो
जेगीयमाना मृदु वाटिकासु ।
उत्पुच्छयन्तो मदनस्य दूताः
स्थेमानमीयुर् न खगाः कुतोऽपि ॥ १८ ॥

कर्णेषु झङ्कार - मिषाद् मिलिन्दा
मन्ये मुहुः किञ्चन मन्त्रयित्वा ।
दीनाऽध्वगान् [4]कन्दलिताऽभिलाषान्
क्वाऽप्युत्कयन्ति स्म तरस्वि - पादान् ॥ १९ ॥

म्लानान् द्रुमान् श्रीविरहाद् विलोक्य
कृपालु - शीलः किल कोकिलो द्राक्
मौखर्यमाप्याऽऽह्वयदभ्युपेतुम्
वसन्तमन्यत्र चिराद् वसन्तम् ॥ २० ॥

---

१. ऐशः=शिवसम्बन्धी ।
२. रोलम्बाः=भ्रमराः ।
३. पौष्पः ।
४. अङ्कुरितेच्छान् ।

"ताम्यन्त एवं नितरां युवानः
प्रीतिं मिथो रे! विनिमाय गूढाम्।
शरीर - लाभश्चरितार्थनीयः"
'कुहूः' पिकानामिति घोषणाऽऽसीत् ॥ २१ ॥

वाचालिताः कोकिल - काकलीनां
छलेन यत्राऽथ रसाल - मालाः।
क्षिप्रं यियासूनपि पान्थ - सार्थान्
फलाशनायाऽऽजुहुवुर् यथार्थम् ॥ २२ ॥

जनेषु वल्लीषु बहिस्तथाऽन्तर्
वनेषु पल्लीषु च पत्तनेषु।
स्फुरत् - समुल्लास - विलास - शाली
समुत्सवोऽजायत सार्वभौमः ॥ २३ ॥

एवं प्रसन्ने पथि राज - सिंहं
सिषेविरे तं सततं समीराः।
प्रसून - पुञ्जैः परिरब्ध - पूर्वाः
सौम्याः सुवासाः प्रसरत्परागाः ॥ २४ ॥

जयोन्मदाऽति - हर्षिणी
महाऽस्त्र - सङ्घ - वर्षिणी।
अराति - दुर्ग - दाहिनी
मदाच्चचाल वाहिनी ॥ २५ ॥

नभोऽपि वेपयन्त उच्चकैर् मुहुः स्व - बृंहितैर्
दिशोऽपि वेधनाय दीर्घ - दन्तशूल - सज्जिताः।
विपक्ष - नित्य - [1]हारि - मोद - नृत्यदुच्छ्रित - ध्वजाः
द्विषद् - दल - प्रमाथिनः प्रचेलुरग्रतो गजाः ॥ २६ ॥

प्रयुद्ध - तूर्य - तुल्य - नाद - तिर्यगुन्नमत्कराः
क्षयङ्करा भयङ्कराः शिवङ्कराश्च कुञ्जराः।
इमे जयश्रियं द्रुतं पदे पदेऽभ्युपेयुषीम्
[2]उपाचरन्निवाऽऽतत - प्रकम्पि - कर्ण - [3]बीजनैः ॥ २७ ॥

---

१. हारिः=पराजयः। २. असेवन्त। ३. बीजनैः=कम्पनैः।

उदस्त - हस्त - वक्ररूप - कल्पि"तोम्" - शुभाक्षरैर्
गणाधिपैर् ध्रुवं गजैर् विरोधि - दानवाऽरिभिः ।
नृशंस - राज - तापितः स भोग्य - भाग्य - हापितः
प्रदेश इष्ट - पुष्टये न्यषेचि दान - वारिभिः ॥ २८ ॥

करीन्द्र - पाद - यूप - घात - पांसवो दिगन्तरे
विवव्रुं बाष्प - सन्तति द्विषत्कलत्र - नेत्रयोः ।
नभोलिहो बभुः कुराज - नाश - लाघवाद् भुवः
प्रसाद - सूचकाः खमुत्थिता मुखानिला इव ॥ २९ ॥

तिरोहितेऽम्बरे रजोभरैर् बभौ विभाकरः
[1]उपप्लुतोऽथ भूतिपिण्ड - खात - कण्ठपोपमः ।
अनिच्छतेव तत्र भावि - भीम - युद्धमीक्षितुम्
मुखं परन्तु तेन पट्ट - वाससाऽपवारितम् ॥ ३० ॥

निवारितोऽपि वारि - तोऽत्र कोऽपि वारणो बलाद्
मदोत्कटो विशन् सरित् - सरोवरेषु वर्त्मनि ।
रणेषु वैरि - वीर - मर्दनोत्थ - पाप - पङ्किला-
मशूशुधत् तनूं मुहुस् तपस्वि - तुल्यतां गतः ॥ ३१ ॥

द्विषत्पदाऽपवित्रिता मलीमसा विहाय गां
गताः स्वरापगां ध्रुवं निमज्जनाय रेणवः ।
जगाम वासरश्च [2]वासुरात्वमन्धकारितो
दिशोऽपि मोहिताः स्वयं विलिल्यिरे नभस्तले ॥ ३२ ॥

यथा गजेन्द्र - राजयोऽशनैः शिला इलाचलान्
अचूर्णयन् मनोरथांस्तथैव ता विरोधिनाम् ।
यथा च ताः पदे पदे दृढान् द्रुमाननीनमन्
तथा तथा हठाशयान् शठांश्च शूर - मानिनः ॥ ३३ ॥

इभा इमे चरिष्णवोऽचला घनौघ - सन्निभाः
कपोल - निर्गलन्मदाम्बु - सिक्त - धूलिजालकान् ।
समीकृतान् नतोन्नताऽसमान - मेदिनी - पथान्
भट - क्रमाय चक्रिरे पुरोगमाः सुखाकरान् ॥ ३४ ॥

---

१. ग्रस्तः छन्नः । २. निशात्वम् ।

चलाः शिला इवाऽञ्जनस्य बालका गिरेरिव
महागजा इमे तमाल - साल - ताल - जालकान् ।
व्यदारयन् न्यवारयन् न्यकोचयन् धरां पदैः
व्यसारयंश्च बृंहितान्यरोचयन् दिशो मदैः ॥ ३५ ॥

ततश्च वैनतेयवद् विसर्पिणो विहायसि
धरातले च धूलिपात - मात्रदृश्य - विग्रहाः ।
प्रदुद्रुवुर् मनोजवाः समीरणे विसारिणस्
तुरङ्गमास् तरङ्गिते जलाशये यथा [1]ग्रहाः ॥ ३६ ॥

प्रचण्ड - ताण्डवाऽनुकारि - चारचञ्चलाश्च ते
स्थले विमानतां गता विडम्बिताऽर्क - वाजिनः ।
द्रुताऽनिलेन चोच्चकर्ण - वर्णिताऽरि - सम्भ्रमाः
[2]खलीन - संयता अपि द्विषां जिघत्सवो बभुः ॥ ३७ ॥

मही - महेश्वरस्य वाजि - राजयः पदे पदे
[3]द्रुते च रेचिते च धोरिते च वल्गिते गते ।
[4]उदञ्चितैः खरैः खुरैर् धरातले ध्रुवं जय-
प्रशस्तिमेव शौर्य - शक्ति - शंसिनीमलेखिषुः ॥ ३८ ॥

विलोल - पुच्छ - चामरैश् चिराय दण्डवत् स्थितैः
खलीन - तिग्म - दन्तजात - वेदनाऽवधीरणैः ।
उदस्य चाऽऽस्यमस्य वल्गु - वल्गनैस् तुरङ्गमैर्
जय - प्रमोद - नोदितैरकारि किं न ताण्डवम् ? ॥ ३९ ॥

शिला - स्थलीषु कूर्दतां तरस्विनामिहा[5]ऽर्वतां
[6]खुरत्र - घात - जात - तीव्र - विस्फुलिङ्ग - राजयः ।
धराऽधिशायिनामहो ! गतायुषां महीभृतां
दधुः क्वचिद् विदल्यमान - मौलिरत्न - विभ्रमम् ॥ ४० ॥

ककुप्सु कालदण्ड - भीम - भल्लपात - पेशलैर्
अमोघ - सायकच्छटैरधिष्ठिता महाभटैः ।
वितेनिरे न चीत्कृतीर् दृढास्[7]तरस्विनो रथाः
परं विरोधि - बन्धु - चीत्कृतानि तेऽनुचक्रिरे ॥ ४१ ॥

---

१. मकराः । २. हिं० लगाम । ३. गति-विशेषे । ४. उत्थापितैः ।
५. अश्वानाम् । ६. पुं० खुरीः नाल । ७. वेगवन्तः ।

मृगेन्द्र - शौर्य - गर्जनैश्च भीरुताऽभितर्जनै:
पराजितैर् न कर्हिचिद् रणोत्कटत्व - राजितैः ।
महारथैर् जनाऽभिनीत - गीत - वीरता - कथैर्
इह स्थितैर् जितेन्दिरा समाश्रिताऽरि - मन्दिरा ॥ ४२ ॥

रथोच्चयस्य मज्जतो भरादिवाऽध्व - धूलिषु
मुहुः स्खलन्निषक्त - नेमिचक्र - पाद - युग्मकम् ।
"विमोचिताऽस्म्यधर्म - शासनादहं त्वये"त्यहो !
तदा मद - प्रमोदिनी ध्रुवं चुचुम्ब मेदिनी ॥ ४३ ॥

[1]शताङ्ग - चक्र - चक्रमुल्लसद् द्रवत् ततो ययौ
परन्तु चक्रवर्तिनो यशः - प्रतापयोर् द्वयम् ।
तथा पथा न वेद्मि केन संसरन्निरन्तरं
दिगन्तरे ततान [2]जाङ्घिकत्वमप्रतोऽप्रतः ॥ ४४ ॥

असंख्य - [3]संख्य - शस्त्रचिह्न - भूषणैक - भूतयो
पुराण - कालतो जगत्प्रसिद्ध - वीर - जातयः ।
नृशंसता[4]ऽभियातयो परस्य न त्वरातयः
ककुप् - तटान्त - सन्ततास् ततोऽचलन् पदातयः ॥ ४५ ॥

महाभुजा महौजसो महीमहेन्द्र - पत्तयः
त एत एव ये रणे विपक्षिणां विपत्तयः ।
तनुक्षयो जयोऽपि वा सदा बभूव यत्पणः[5]
विपक्ष - नाश - चक्षण - क्षणस् तथा च य[6]त्क्षणः ॥ ४६ ॥

पदातिकैः पुरः पतत्पदैरपास्त - पातकैर्
वशीभवन्त्यमीयतेव वैरिणां वसुन्धरा ।
परन्न धर्मरोधिनां पुरेष्वहो ! विरोधिनाम्
वधूभिरन्वमीयत स्व - सौभग - क्षणाऽवधिः ॥ ४७ ॥

---

१. शताङ्गः=रथः । २. द्रुत-पदत्वम् । ३. संख्यम्=युद्धम् ।
४. घातकः । ५. पणः (शर्तं) । ६. उत्सवः ।

तरङ्गितेव सा पद-क्रमेषु पत्ति-[1]वाहिनी
[2]महीभृतो महोत्कटान् व्यपाटयन् निरोधिनः ।
दिने दिनेऽभितापिता धरा[3]मशस्यतामिता
चिराच्च शोषितां करैः खरैश् चकार पोषिताम् ॥ ४८ ॥

अपूर्व-चक्रवर्तिनो जय-ध्वजा इवोन्नता
[4]वरूथिनी-पदोद्धताः खचुम्बिनो न पांसवः ।
विधर्म-नाश-तोदिता बभूव [5]सागराम्बरा
कृतज्ञता-प्रकाशनाय धातृ-सन्निधौ गता ॥ ४९ ॥

चमू-स्वनैः खगा द्रुमान् विहाय दिक्प्रयायिणः
प्रणाश-पूर्वलक्षणैः रुतैरपूरयन् न खम् ।
"पलायतां न चापलं च तायताम्" इतीव ते
परं रिपून् रणोद्यतान् मदोद्धतानबूबुधन् ॥ ५० ॥

कूर्चकल्पैः करैरर्कः कर्कशैर् वेगवत्तरः ।
चक्रमे च क्रमेणाऽलम् मार्जयन् मेचकं मलम् ॥

लुप्तं यद्वाऽपि गुप्तं तद् आविर्भूयोज्ज्वलं पुनः
चिरत्नं रत्न-जातं खे तारा-रूपं विदिद्युते ॥ ५१-५२ ॥

इति श्री-वसन्तराम-पाराशर-तनुजनुषा, कविरत्नादि-विविध-विरुदभाजा, डॉ० श्यामदेव-शास्त्रिणा-पाराशरेण प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'मधुमास-पृतना-प्रस्थानम्' इत्याख्यः चतुर्विंशः सर्गः समाप्तः ॥



---

१. सेना; नदी । २. नृपान्; पर्वतान् । ३. अप्रशंसनीयताम्; सस्य-हीनताम् । ४. वरूथिनी=सेना । ५. भूः ।

# पञ्चविंशः सर्गः

उपासकस्य खेदनैः स - वेदनैर् निवेदनैर्
प्रलात - मोचनोग्र - लोचनाऽरुणीभवद्दिशः ।
नृसिंह - रूप - रक्त - यूप - दारणोऽरि - वारणो
जयत्यसौ शिवाय यश्चकार रौधिरीं धराम् ॥ १ ॥

अत्रान्तरे मुग्धमना अधन्यस्
सौराष्ट्र - देशीय - [1]महीभृदेतत् ।
वेलायमानं बलमभ्युपेत्य
दर्पान्धितस् सन् सहसा रुरोध ॥ २ ॥

पाशेन दूरादवपाशितोऽसौ
यथा गतायुः पुरतो जगाम ।
तथा [2]कृतान्तोऽपि च तारतम्याद्
व्यात्तं विशालं वदनं व्यधत्त ॥ ३ ॥

चण्ड - प्रतापार्ऽचिषि भूप - भर्त्तुः
क्षोणीं क्षणाद् दग्धुमलन्तमस्य ।
विवेद नाऽसौ शलभी - भवन्तम्
आत्मानमासन्नतराऽवसानम् ॥ ४ ॥

अन्येऽपि साचिव्य - कराश्च सत्वरा
द्विषास् स्व-सैन्यैस् सह सत्त्व-राजिताः ।
कालेन कांक्षेण निरीक्षिता ध्रुवं
[3]संजग्मिरे तत्र महीक्षितो मदात् ॥ ५ ॥

ज्ञात्वा[4]ऽऽजि - वृत्तं प्रवराऽऽयुधीय-
मुखैः प्रसादात् सहसोत्पलायितम्[5] ।
द्विष्टस्य सैन्यैरथ जात - दैन्यैर्
नैकैः शनैर् [6]वञ्चनयोत्पलायितम् ॥ ६ ॥

---

१. महीभृत्=राजा । २. यमः । ३. मिलिताः ।
४. आजिः=रणः । ५. कमलायितम् । ६. छलेन ।

सुराष्ट्र - सैन्यान् समराय सज्जान्
संश्रुत्य सम्प्रीत - हृदां च तेषाम् ।
गात्रेषु लोमावलि - वेष्टितेषु
बभुर् गतार्था इव [1]वारबाणाः ॥ ७ ॥

तेषां द्विषो दृष्टि - पथं प्रयाता
यावत् कृतान्तेन तदैव तूर्णम् ।
संग्राम - भूमिं प्रति जग्मुषाऽसौ
सज्जी - कृतः पाणि - पुटे स्वःपाशः ॥ ८ ॥

प्रत्यर्थि - योधानिव पेष्टुकामः
प्रामीमृदत् कोऽपि करं करेण ।
परः पुनः पाणि - पुटेन बाहुम्
आस्फाल्य तानाह्वयतेव मानी ॥ ९ ॥

सुराष्ट्र - सेनाऽसित - मेघमाला
विडम्बयन्ती पुरतः प्रतस्थे ।
अक्षौहिणी सर्वजितः प्रभोश्च
कल्पान्त - वात्या - जवना विरेजे ॥ १० ॥

प्रतीक्षमाणाः सुचिरात् कुमार्यः
कराऽऽत्त - मालाः सुरलोक - बालाः ।
कृतोत्सवा इष्ट - वराय युद्ध-
स्थलीमहम्पूर्विकयाऽभ्युपेयुः ॥ ११ ॥

चमू - पदोत्पातित - पांसु - पूरैस्
तिरोदधे लुप्तदिगन्तरिक्षम् ।
प्रसोढ - भूभर्तृ - महाप्रतापो
मन्ये खरांशुर् मुखमावृणोत् स्वम् ॥ १२ ॥

प्रेङ्खत् - पटावेगवशात् पताका
रथेश्वरीणां समबोधयंस्तान्— ।
"रे ! मा रणं मुग्ध - धियः कुरुध्वं
तद् मारणं वो ध्रुवमञ्जसे"ति ॥ १३ ॥

---

१. कवचाः । २. अञ्जसा = झटिति ।

ततः स धर्मात्त - नयोऽधिराज।
आध्माय शङ्खं तनयोऽञ्जनायाः।
दुष्कर्म - विद्रावण - पूर्वचिन्हं
युद्धाऽध्वरोङ्कारमिवोच्चचार ॥ १४ ॥

[1]नासीर - वीरैश्च विधीयमानस्
[2]तौर्यो ध्वनिः श्रोत्रपुटे प्रविष्टः।
उद्बोधयन् हृत्सु भयं परेषां
कालस्य जृम्भा - रवमन्वकार्षीत् ॥ १५ ॥

धरां धरांश्चापि विमोहयन्तस्
सौख्यं तथा सख्यमपोहयन्तः।
शङ्खा असङ्ख्यास् तुमुलाऽनुनादैर्
व्यधुश्च मूकानपि वावदूकान् ॥ १६ ॥

वरूथिनीनां पटह - प्रणादाः
कर्णेषु कण्डूति - कराऽवसादाः।
भयानि विभ्रञ्चि विसारयन्तो
जजृम्भिरे व्योम - विदारयन्तः ॥ १७ ॥

प्रागेव तत्राऽवहितैर् हि तैश्च
सैन्यैः प्रभोर् विश्वजितोऽहितानाम्।
कल्पान्त - सादृश्य - विनाश - दृश्यम्
प्रावर्तताऽदृष्टचरं प्रयुद्धम् ॥ १८ ॥

ऊर्जस्वलैर् युद्ध्वनिर्वर्तिभिस्तैर्
द्विषोऽथ धैर्यं च दिशो दलद्भिः।
आक्रम्यमाणेऽरि - बलेऽस्त्र - घोषैर्
भूरासमुद्रं च नभश्चकम्पे ॥ १९ ॥

रण - स्थली - [3]पुष्करिणी - प्रविष्टैर्
प्रवारणीयैः प्रवरस्य नागैः।
उत्पादितान्यम्बुज - सन्निभानि
द्विषां रथाऽऽधातप - वारणानि ॥ २० ॥

---

१. नासीरम्=सेनाग्रम्। २. तूर्य-सम्बन्धी। ३. पुष्करणी=सरसी।

तैश्चण्ड - शुण्डा - पद - दण्ड - घातैर्,
विखण्डितानां द्विषतां रथानाम् ।
क्षिप्तानि चक्राणि दिगन्तराले
चक्राऽस्त्र - लीला तुलयाम्बभूवुः ॥ २१ ॥

उच्चाटयन्तः प्रतिरोधि - दर्पम्
विपाटयन्तो हयिनस्तथाऽश्वान् ।
उद्घाटयन्तो जयलाभ - मार्गं
ते नाटयन्तो [1]विलयं विचेरुः ॥ २२ ॥

सैन्धवान् वाल्हिकान् पारसीकान् हयान्
वात - वेगानभीकांश्च काम्बोजकान् ।
अभ्यमित्रं हि [2]चिक्रंसया प्रैरयन्
मादिनः सादिनः सिंह - सन्नादिनः ॥ २३ ॥

भूरिणा माऽङ्घ्रि - भारेण भूद् भूरियम्
[3]पिच्चिता वा न पाताल-लोके पतेत् ।
इत्यहो ! वाजिनोऽकम्पिनो [4]झम्पिनो
नाऽस्पृशन् भूतलं भूयसा खेचराः ॥ २४ ॥

वैरि - वीर्यस्य दिक्षु प्ररूढं यशो-
घासमेते जिघत्सन्त एव ध्रुवम् ।
सन्तत - स्यन्दि - लाला-मिषात् [5]सप्तयो
लालसामुत्कटां देहिनां व्याञ्जयन् ॥ २५ ॥

त्वरिताः पवन - प्रतिमेय - जवाः
भरिता सहसाऽरि - वनान्त - दवाः ।
जयिनः सततं भय - रूपधराः
हयिनः प्रवरस्य बभुः प्रवराः ॥ २६ ॥

मदिनोऽनुपमेय - बला समरे
[7]रदिनोऽपि मदं दमयन्त इमे ।
[8]गदिनः प्रवरस्य भटा व्यदधुर्
[8]गदिनः प्रतिपक्षि-गणान् व्रणितान् ॥ २७ ॥

---

१. प्रलयम्, विनाशम् । २. आक्रमणेच्छया । ३. पिष्टा; पीडिता ।
४. कूर्दन्तः । ५. अश्वाः । ६. बलेन ।
७. गजाः । ८. गदा[illegible] ।

पूर्वं क्षणाद् ये पुरुषा बभूवुः
साधु - स्वभावाः सुकुमार - चित्ताः ।
त एव तावत् क्षत - वीरपाना
एकान्ततो हा ! पशुतामुपाऽयुः ॥ २८ ॥

पीताऽरि - रक्तैरिव पूर्वमेव
नेत्रै रुषाक्तैरनलं वमन्त। ।
निष्पिष्य पाणीनथ पाणिषु प्राग्
द्विषन्तपास्तेऽरि - बलेष्वविक्षन् ॥ २९ ॥

जिगीषवः क्ष्मामथ वीर्य - शुल्काम्
उदायुधाः प्राज्य - पुरञ्जयास् ते ।
कृतान्त - काक्षैरिव चोद्यमानान्
प्राणैर् विना - भावमरीननैषुः ॥ ३० ॥

उदग्र - वीर्याः प्रवरस्य योधाः
सिंहा इवाऽद्याप्यविसोढ - रोधाः ।
आकाशमस्त्रैर् विगताऽवकाशं
चक्रुर् दिनं तच्च निशा - निकाशम् ॥ ३१ ॥

क्रुद्धोद्धतैर् योद्धृभिरीर्यमाणैर्
बाणैः रणे घट्टन - घोर - घोषैः ।
उद्वेलितस्य प्रलयाऽम्बुराशेः
क्षुब्ध - प्रवाहेण तुलामयासीत् ॥ ३२ ॥

ते व्यक्तयन्तः प्रवरस्य वीराः
स्वं पौरुषं सातिरुषं तदानीम् ।
बाणावलीभिः परिविद्ध - गात्रान्
शत्रून् व्यधुः [१]संयति [२]शल्य-तुल्यान् ॥ ३३ ॥

लूनानि खेऽस्त्रैर् यम - जिह्विकोग्रैर्
नूनं यियासून्यचिरेण नाकम् ।
उल्लास्यमानैः पवनेन पत्रैः
शीर्षाण्यरीणां प्रतिमानमीयुः ॥ ३४ ॥

१. संयति—युद्धे । २. शल्यः—सेधा ।

हुङ्कार - हूत्युत्कट - मन्त्र - पूजने
प्रदास्यमानाऽर्घ्यं - कबन्ध - शोणिते ।
युद्धाऽध्वरे वीर - भटाः पशूकृतान्
प्राणैर् द्विषद् - विक्रमिणो व्ययूयुजन् ॥ ३५ ॥

विद्रावित - व्याकुल - वैरि - वृन्दा
वीरा विरूढ - व्रण - बद्ध - पट्टाः ।
भटास्तदीया विकटा जयिष्णवः
[1]किणाऽङ्कभूषा अनटन् मदिष्णवः ॥ ३६ ॥

श्रैष्ठ्यं तदेषामिह शूरतायाः
निर्वर्ण्य - चित्तं रण - नैपुणं च ।
अपूपुजंस्तान् रिपवोऽपि साधु-
साध्वित्युदारादर - गर्भ - वाचा ॥ ३७ ॥

युद्धोत्कटान् वीक्ष्य पटून् भटांस्तान्
क्रुद्धान् युगान्ताऽनलवद् दिधक्षून् ।
त्रासोऽपि चाऽप्राप्य बहिः शरण्यं
द्विषद् - बलानां हृदयं प्रपन्नः ॥ ३८ ॥

शल्यायमाना हृदि ये जनानाम्
[2]अरुन्तुदत्वं नितरां वितेनुः ।
क्षिप्तानि सर्वेश्वर - वीर - वर्यैः
शल्यानि तेषां हृदयेष्वविक्षन् ॥ ३९ ॥

क्षिति - क्षितः शौर्य - यशः - प्रतापैर्
देशे द्विषां मेदुरिते समन्तात् ।
भयाकुलानीति पुरः प्रयातुम्
प्रपेदिरे प्रस्खलनं पदानि ॥ ४० ॥

शराहतेभ्यः करिणां रदेभ्यष्
टङ्कार - पूर्वा य इमे निरीयुः ।
न ते स्फुलिङ्गाः परमत्र मूर्त्ताः
तेषां प्रकोपा मुखरा बभूवुः ॥ ४१ ॥

---

१. किणः=व्रणचिह्नम् । २. पीडा-प्रदत्वम् ।

## युग्मकम्

येऽमान - मानाश्च विकत्थमाना
द्विष्टाः प्रविष्टाः प्रधनं बभूवुः ।
ते लूयमाना अभिभूयमाना
विदूयमाना भय - धूयमानाः ॥

[1]उपांश्वहम्पूर्विकयाऽऽजिभूमेर्
यियासवो ध्वस्त - निरस्त - शस्त्राः ।
भिन्नाशया भिन्न - मनोरथाश्च
मिथोऽत्र लज्जा - विवशा अतिष्ठन् ॥ ४२-४३ ॥

विलोक्य वक्त्र - मण्डलं धराभुजो [2]भयान्वितम्
बभूव वैरि - मण्डलं विदूरतो [2]भयाऽन्वितम् ।
तदीय - सैनिकाश्च सिंह - नादिनो दुराशया
द्रुता द्रुतं रणाजिरात् समं विभग्नयाऽऽशया ॥ ४४ ॥

यः शौर्य - गर्वश् चिर - सञ्चितोऽभूद्
द्विषां, प्रवीर - प्रवरं पुरःस्थे ।
व्यलोकि तेषां स गलंस्तनूभ्यो
रणाङ्गने स्वेद - जलच्छलेन ॥ ४५ ॥

पति - ध्रुवं राजकमत्र भूमेर्
यथार्थं - [3]नापत्य - कलङ्कभूतम् ।
तच्चक्रवातेन विकम्पमानं
प्रणन्नमीति स्म निरस्तमानम् ॥ ४६ ॥

नोदयामास सेनां स सम्राट् स्वकां
क्षोदयामास चामूलमाशा द्विषाम् ।
तोदयामास युद्धाजिर - स्थायिनो
रोदयामास तेषां वधू - बान्धवान् ॥ ४७ ॥

१. गुप्तरूपेण ।
२. प्रभया युक्तम्; भय + अन्वितम् ।
३. नापत्यम् = नृपत्वम् ।

सोऽस्त्र - शस्त्राद्यमासाद्य नागोत्तमे
तस्थिवान् वाऽपि तुङ्गे तुरङ्गे प्रभुः ।
अग्रतस्तत्र [1]चञ्चूर्यमाणो रणे
सिंहनादैरभूत् सैनिकोत्साहकः ॥ ४८ ॥

हुङ्कारिणाऽऽजौ हरिणाऽस्त्र तेन
ज्या - घोषमाकर्ण्य कृतं द्विषन्तः ।
दोदूयमाना हरिणा इवैके
रजोऽनुमेयैक - दिशो बभूवुः ॥ ४९ ॥

प्रदीपयन्तः ककुभोऽपि तप्त-
नाराच - पुञ्जा प्रवर - व्युदस्ताः ।
कालाऽग्नि - कुण्डात् पतयालवः खे
चकासिरे प्रज्वलदुल्मुकाभाः ॥ ५० ॥

विकीर्ण - पुष्पाः प्रवरस्य देवा
विलोक्य तावच्छर - लाघवानि ।
तत्कौतुक - स्तब्ध - दृशोऽधुनाऽपि
वश्या इवैतेऽनिमिषा भवन्ति ॥ ५१ ॥

मतङ्गे मतङ्गे शताङ्गे शताङ्गे
तुरङ्गे तुरङ्गेऽथ सङ्गे च रङ्गे ।
विहस्ताः समस्ता अरक्षा विपक्षास्
तमेवाऽभ्यपश्यन् सचापं [2]प्रजापम् ॥ ५२ ॥

पतन्ति विद्युतो यथा द्युतोऽत्र मूर्ध्नि भूभृतः ।
तथाऽस्य शक्तयोऽपतन् परस्य मूर्ध्नि [3]भूभृतः ॥ ५३ ॥

तस्याऽसि - पातेन रिपोस्त[4]नुत्राद्
उद्भाविता अग्नि - कणा रणाऽग्रे ।
मानस्य शत्रोरथ तेजसो वै
विध्वस्यमानस्य दलान्यभूवन् ॥ ५४ ॥

---

१. द्रुतं भ्रमन् । २. नृपम् ।
३. [illegible]; नृपस्य । ४. कवचात् ।

तदा[1]ऽर्धचन्द्रैः प्रवरस्य तीक्ष्णैर्
दत्ताऽर्धचन्द्रैर् द्विषतां शिरांसि ।
उच्छिद्य नीतान्यनुचक्रिरे खे
लीलां ग्रह - ग्रस्त - विधु - व्रजानाम् ॥ ५५ ॥

उत्पत निपतेत्युच्चैर् नादाः
श्रोत्र - युगलमाविक्षन् निष्वक् ।
उत्पतन - निपाताश् छिन्नानां
कौतुक - जनकाश्चासन् मूर्ध्नाम् ॥ ५६ ॥

प्रजाप - चापेन विमुच्यमानाः
शूत्कारिणो नैव शरा बभूवुः ।
किं तर्हि वैरि - ध्वजिनी - भटेभ्यः
कालस्य दूता युधि वावदूकाः ॥ ५७ ॥

तच्छिञ्जिनी - शिञ्जितमेव दूराद्
उदात्तमाह्वान - निभं निशम्य ।
प्राणा रिपूणां बहिरभ्युपेता
बाण - व्रणोऽभूत् पुनरुक्त - कल्पः ॥ ५८ ॥

कोदण्ड - यष्टिः प्रवरस्य चण्डा
भ्रूभङ्ग - लीलां युधि दण्ड - पाणेः ।
श्रेणी शराणां कुटिलान् कटाक्षान्
अमोघ - पाताऽरिषु चाऽन्वकार्षीत् ॥ ५९ ॥

यस्याऽपि कस्याऽपि शरस्य पृष्ठे
[2]पत्रं पिनद्धं द्विषि पातितस्य ।
[3]अकाल - हीनं ध्रुवमागमाय
स्वर्गाङ्गनाऽऽमन्त्रण - पत्रमासीत् ॥ ६० ॥

लोके यथा सूचयतीह चिह्नम्
बाणस्य दिग् - देश - विशेष - मार्गम् ।
एकैक एवं प्रवरेण [4]पत्री
[5]प्रास्तो रिपौ मृत्यु - पथं दिदेश ॥ ६१ ॥

१. बाणविशेषैः । २. पक्षः । ३. अविलम्बम् ।
४. बाणः । ५. क्षिप्तः ।

आदान - सन्धान - निपातनाद्यं
क्षिप्रं न कर्मैक्ष्यत तच्छरस्य ।
परं प्रहारेण रिपोर् मुमूर्षोर्
हाकार आचष्ट महाऽवदानम् ॥ ६२ ॥

इतो विमुक्ताः प्रवरेण बाणास्
ततो वियुक्ता द्विषतां च प्राणाः ।
पूर्णश्च तच्चेतसि युद्ध - भावो
रिक्तोऽभवच्चाऽरि - बलाऽग्रदेशः ॥ ६३ ॥

आलोक्य तच्चाप - लतां नमन्तीम्
उन्मुक्त - चापल्य - मदा द्विषोऽन्ये ।
न्यस्ताऽस्त्र - भारा द्रुत - धावनार्थं
रणाय चक्रुश्चरमं प्रणामम् ॥ ६४ ॥

उपानयद्भिर् युधि काल - रात्रिम्
बाणैस्तदीयैः पिहितेऽर्क - बिम्बे ।
पुरा प्रफुल्लानि मुखाम्बुजानि
निमीलितत्वं द्विषतां गतानि ॥ ६५ ॥

बाणाः फणाकार - फला[1]विषास्याः
फूत्कारिणः काल - मुखाः प्रचण्डाः ।
प्रक्षिप्यमाणा प्रवरेश्वरेण
पपुर् द्विषां प्राण - समीरणं द्राक् ॥ ६६ ॥

तेनाऽरि - योधांस्तृण - पूल - तुल्यान्
आलक्ष्य मुक्ता विशिखाः प्रदीप्ताः ।
तत् - कोप - वह्नेर् बभुरुल्लसन्तो
ज्वालाः कराला इव मूर्त्तिमन्तः ॥ ६७ ॥

रोषार्चिषा तस्य विदह्यमानम्
आराष्ट्रं यथाऽद्याऽप्यखिलं सुराष्ट्रम् ।
नार्यो न निर्वापयितुं रिपूणाम्
अलन्तमा नेत्र - जलैर् बभूवुः ॥ ६८ ॥

१. सर्पा; विषमुखाः ।

शरा निरीयुः प्रवरस्य चापाद्<br>
भ्रुवश्च [1]भुग्नाः विकटाः कटाक्षाः ।<br>
बभूवुरग्रे जड - जीव - नाशा<br>
द्विषां कुतः सम्प्रति जीवनाऽऽशा ॥ ६९ ॥

बाणा बभुर् व्योम्नि जिताऽखिलारेस्<br>
तरङ्ग - भङ्गाः प्रलयाम्बुराशेः ।<br>
आप्लावितानां द्विषतां च यत्र<br>
शरण्य एकः समभूत् स [2]पाशी ॥ ७० ॥

ज्वाला - मुखैस्तस्य शरैररीणाम्<br>
पुरेषु सौभाग्य - चिताः प्रदीप्ताः ।<br>
यद् - धूम - लेखाभिरिव प्रसूताः<br>
अपूरयन्नम्बुधिमश्रु - धाराः ॥ ७१ ॥

खे तच्छरा[3]हेतिभिराहतानाम्<br>
वीर्योद्धतानामभितोऽहितानाम् ।<br>
रणाङ्गनान्नाक - पथोन्मुखानि,<br>
दिव्यानि देहान्यपि चाऽजिघांसन् ॥ ७२ ॥

सहाऽरि - शस्त्रैः प्रवरस्य खड्गा-<br>
ऽऽघातात् प्रजाताः शतशस् स्फुलिङ्गाः ।<br>
असूचयन् कोप - कृशानुमस्य<br>
दिधक्षया वै बहिरभ्युपेतम् ॥ ७३ ॥

जिजीविषद्भिस्त्वरिभिः शिरांसि<br>
पदाब्जयोस्तस्य निपातितानि ।<br>
मुमूर्षतां तानि परं परेषां<br>
शस्त्रास्त्र - लूनान्यपतन् नियुद्धे ॥ ७४ ॥

क्षतिः क्षितीशैः प्रवरस्य शक्या-<br>
ऽहङ्कारिभिः काऽरिभिरत्र युद्धे ।<br>
क्षुपा द्रुमाः संहतिमभ्युपेता<br>
दवानलाय स्युरलम्बलाः किम् ? ॥ ७५ ॥

---

१. कुटिलीभूताः । २. यमः । ३. शस्त्रैः ।

प्रैषयत् तावतोऽरीन् स याम्यां सभां
तत्र येषामभूत् स्कन्ध - संघट्टनम् ।
चित्रगुप्तोऽपि चित्रीयमाणश्चिरात्
"तिष्ठ तिष्ठाऽलमि"-त्यञ्जसाऽऽम्रेडयत् ॥ ७६ ॥

एवं [1]क्षमाधार इमां धरां स
विधर्म - बाधा - विधुरां विधित्सुः ।
युद्धे प्रमथ्याऽपि विरोधि - वृन्दं
चक्रेऽमर - स्त्री - परिरम्भ - पात्रम् ॥ ७७ ॥

तेनाऽस्त्र - शस्त्रैर् विहित - व्रणानां
त्यक्त्वा रणानां धरणीं द्रुतानाम् ।
अलेखि नूनं द्विषतां तनूषु
स्थास्नुः स्व - हस्तेन जय - प्रशस्तिः ॥ ७८ ॥

ये नर्दना: सङ्गरमभ्युपेताः
ते पर्दनाः शेष - भटैस् समेताः ।
संज्ञापयन्तोऽङ्गुलिभिर् मिथोऽयुः
विद्वेषिणः स्वैर - पदा वनेषु ॥ ७९ ॥

पपात शस्त्रार्दित - भाल - पट्ट-
प्रस्यन्दि रक्तं वदनेषु येषाम् ।
तैर् देवभूयं गमनादपि प्राग्
प्रापायि मन्ये समरे सुधैव ॥ ८० ॥

मर्माहताः केऽप्यहिताः स्खलन्तो
हा ! हेति कारुण्य - करं रुवन्तः ।
विहाय हेतीः कृपणा न्यपप्तन्
किं [2]मातुरङ्के शरणैषिणस्ते ॥ ८१ ॥

केचित् क्षतोरः - स्थल - कन्धरांसैर्
जयश्रियेवार्पित - कण्ठ - माल्यैः ।
चुम्बिष्यमाणैः सुर - सुन्दरीभिः
पराजितैश्चापि जितं द्विषद्भिः ॥ ८२ ॥

---

१. भूपः ; सहनशीलः । २. भूमेः ; जनन्याः ।

विस्तार्य वक्षश्च निवार्य भीतिं
यैर् द्विड् - विरुद्धं विहितं नियुद्धम्।
उपेयुषी सम्मुखतो जयश्रीर्
अतूतुषत् तान् परिरम्भ - 'दानैः॥ ८३॥

वैमुख्यमाप्ता अथ भीरवो ये
संग्राम - देव्या चरणाहतास्ते।
हेति - क्षतैर् - लाञ्छित - पृष्ठ - देशा
रक्तोक्षित - क्ष्मा निरये निपेतुः॥ ८४॥

व्यक्तयन्तो द्विषः केऽपि दैन्यं दरात्
कुड्मलीकृत्य चङ्कम्प्यमानान् करान्।
मेदिनी - मूल - धूली - मिलन्मौलयो
धूलि - धूम्रं शिरश्च व्यधुः स्वं यशः॥ ८५॥

रणाङ्गने वैरि - बलस्य नूनं
स्वर्गाशया मोद - मदं प्रपन्नाः।
संसार - पाशादिव मुक्त - बन्धाः
नैके नितान्तं ननृतुः कबन्धाः॥ ८६॥

रणे विलूनानि शिरांस्यरीणां
नाकोत्सुकानीव तदा नितान्तम्।
उत्फेलुरभ्रे कुतुकेन किं वा
दिदृक्षमाणानि कबन्ध - नृत्यम्॥ ८७॥

सैन्यस्य पन्नस्य भुवि क्षतत्वात्
कस्यापि रोषाच्छ्वसतोऽतिदीर्घम्।
हृदुत्पतन्नूनमिदं तमाह—
"उत्तिष्ठ शूरा! ऽरि-कुलं जहो"-ति॥ ८८॥

विन्यस्त - शस्त्राः शिथिलं श्वसन्तः
शूराः शरानन्तरितान् शरीरे।
निष्कास्य नूनं स्वयमेव चक्रुः
प्राण - प्रयाणाय विविक्त - मार्गम्॥ ८९॥

१. दानैः = उपहारैः।

[1]आजि - स्थलेऽजायत बाण - वृष्टिस्
तारापथान्नन्दन - पुष्प - वृष्टिः ।
द्विषां तनूभ्यो रुधिरस्य वृष्टिर्
देशेऽत्र गेहेषु च बाष्प - वृष्टिः ॥ ९० ॥

भग्नाः केचिद् भूयो भीताः
मग्नाः सिन्धावन्ये [2]व्रीताः ।
दीना नैके नद्धा नीताः
लीना रेणौ गर्व - स्फीताः ॥ ९१ ॥

भ्रष्टं भूमौ तं शौण्डीरम्
प्रेक्षध्वं क्रोशन्तं वीरम् ।
[3]अस्रैः सिञ्चन्तं स्वं चीरं
घोरं याचन्तं हा ! नीरम् ॥ ९२ ॥

पश्यैद् हा ! यः शौर्यं मे ते
तस्थौ कालो यत्सङ्केते ।
मन्दोऽस्पन्दो भूमौ शेते -
स्माऽयं योद्धा सत्त्वेऽपेते ॥ ९३ ॥

लक्ष्योद्भेदे सैन्यैर् मान्यः
सम्मील्यैकं नेत्रं ह्यऽन्यः ।
चाप - न्यस्ताऽलोलद् - बाणः
स्तब्ध - प्राणो जातः काणः ॥ ९४ ॥

[4]सूची - चूलैर् विद्धाः शूलैः
साऽस्र - स्कन्धा जाता अन्धाः ।
कूजत्कर्णा म्लायद् - वर्णा
अन्ये [5]पन्ना जन्ये सन्नाः ॥ ९५ ॥

मुद्य[6]द्रङ्गा नैके लङ्गाः
खड्गाघातैः प्रायो व्यङ्गाः ।
अस्त्रैः प्लुष्टा [8]द्विष्टा भ्रष्टा
दुष्टा भूमौ शिष्टा नष्टाः ॥ ९६ ॥

---

१. युद्ध-भूमौ । २. लज्जिताः । ३. रक्तैः । ४. तीक्ष्णमुखैः ।
५. पतिताः । ६. मृताः श्रान्ताः । ७. [illegible] । ८. रिपवः ।

उल्का - कल्पैर् बाणैर् नाऽल्पैर्
एवं राष्ट्रे भूते प्राष्ट्रे ।
तेजोहीना [1]द्वेष्या दीना:
धृष्टा धान्य - [2]प्रख्या भृष्टा: ॥ ९७ ॥

क्लान्तास्तान्ता [3]दान्ता भ्रान्ता
हस्तास् त्रस्तैस् तैश्चोदस्ता:[4] ।
आशा ध्वान्ताऽऽक्रान्ताकाशा:
पूर्णा नाशा: पूर्णा नाशा: ॥ ९८ ॥

द्विषो द्रवन्तोऽपि तथाऽत्र वीरम्—
मन्या: पुरस्तात् त्रपयाऽवरुद्धा: ।
भयैश्च पश्चादभिहन्यमाना
द्वैधं गता नैव ययुर् न तस्थु: ॥ ९९ ॥

[5]सृगालिका युद्ध - भुवो भजन्त:
पुरश्च पश्चात् पुनरीक्षमाणा: ।
अकीर्ति - कूपे पतनादपि प्राक्
ते मार्ग - गर्तेष्वपतन् वराका: ॥ १०० ॥

ते दृष्ट - नष्टा इव वैयनीका
न प्राभवन् भीषयितुं महीन्द्रम् ।
विनर्दिनश्चाऽपि वृषा हि दान्ता:
किं संहताश्चापि विधातुमिशा: ? ॥ १०१ ॥

युग्मकम्

शस्त्राशस्त्रि दण्डादण्डि ।
हस्ताहस्ति मुष्टामुष्टि ॥
जातं शौर्य - क्रौर्य - क्रान्तम् ।
बीभत्सान्तं युद्धं शान्तम् ॥ १०२ ॥

---

१. शत्रव: । २. प्रख्या:=तुल्या: । ३. दमिता: ।
४. उत्थापिता: । ५. पलायनम् ।

अहिना अथ जीव - दया - रहिता
अतया हठिनः प्रथिताऽविनयाः ।
विवशा इव ते रणभू - पतिता
मुमुचे न च यैरिह भूपति - ता ॥ १०३ ॥

परे हुतात्मान इहात्मनिष्ठाः
अनर्गल - स्वर्गमभिप्रविष्टाः ।
[1]अनेनसो ये शरणं प्रपन्ना
अनेन संरक्षणमभ्युपेयुः ॥ १०४ ॥

गुणैरगण्यैः प्रवरस्य मन्ये
वशीकृतानामिह पूर्वमेव ।
बन्दी - कृतानां समरे रिपूणां
निरर्थकोऽजायत दाम-बन्धः ॥ १०५ ॥

बलोत्सेका मदोद्रेका अविवेका विपक्षिणः ।
प्रविवीरन् गृहे ये ते, दीना डीना हि पक्षिणः ॥ १०६ ॥

अनुद्रुताः परे भल्ल - योधिनो मल्ल - तल्लजाः ।
गुहा-गुल्म-गतास् तस्थुर् वराका काक-शङ्किनः ॥ १०७ ॥

क्षता उद्विजन्ते स्म तीव्र - व्यथाः
तता वाजिनः क्वापि भग्ना रथाः ।
हता वैरिणो हन्त ! शिष्टा कथा
गताः साभिमाना [2]युधानास्तथा ॥ १०८ ॥

इत्थं प्रवृद्धं परितोऽपि पापं
शत्रुंजयोऽसौ [3]दवयन् धरायाम् ।
स्वामीह पुण्याचरणाय राज्ञो
स्वामीरयामास दृढां तदाऽऽज्ञाम् ॥ १०९ ॥

बाणैर् महाशक्ति - विशेषितात्मा
वज्रायमाणैर् हि मही - महेन्द्रः ।
जाड्योद्धतानाशु स धूलिसात् तान्
सुराष्ट्रजान् भूमिभृतश् चकार ॥ ११० ॥

---

१. निर्दोषः । २. योधाः । ३. दूरीकुर्वन् ।

सञ्छादिता एवमिमे प्रभूताः
सौराष्ट्र-भूपाः समरेऽभिभूताः ।
छत्रैर् विहीना इति हन्त ! दीना
विच्छायतामभ्यगमन्ननीशाः ॥ १११ ॥

स धर्म - साम्राज्य - धुरं दधानस्
तूर्य - प्रणादैर् वधिरी - कृताशः ।
पार्थान् प्रजार्थैर् मद - मोद - मग्नान्
अयूयुधत् काल-वशं प्रपन्नान् ॥ ११२ ॥

विकत्थना वीर - वर - ब्रुवाश्च ते
रंरम्यमाणा अथ पाप - पण्डिताः ।
स्त्री - लम्पटा दुर्नयमात्र - मण्डिताः
विखण्डितास् तेन नृपाश्च दण्डिताः ॥ ११३ ॥

कुर्वाणं कटु कर्कशं च कृपणं[1] विश्वत्र काका-रवं
[2]काकं वत्राप्यतिदैन्य-दून-वदनं लीनं [3]कुलायेषु तत् ।
म्लानिं चात्र मृणालिनी - कुलमगादस्तोक - शोकाकुलं
याते भास्वति, चाऽरुणिम्नि ददृशे मग्नाऽन्तरिक्ष-स्थली ॥ ११४ ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - त्रिविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'सौराष्ट्र-समर-समाराधनम्' इत्याख्यः पञ्चविंशः सर्गः परिणतः ॥



१. सर्वत्र । २. काक-समूहः । ३. नीडेषु ।

## षड्विंशः सर्गः

प्रतिक्रमं ध्वस्त - जगत्सहस्रं
यन्नव्य - भव्योदय - हेत्वजस्रम् ।
विधूय तद् वो दुरितानि [1]भूति
त्रैयम्बकं ताण्डवमातनोतु ॥ १ ॥

युग्मकम्

स्वामि - हत्या - व्यथा - वह्नि - धूमैरिवा
ऽजस्रमस्रावलीं स्रावयन्त्याश्चिरात् ।
रेणुकाया मुहुस्ताडयन्त्या उरो
निर्भरोच्छ्वास - धाराभिरुद्दीपिताः ॥

यस्य रोषार्चिषोऽनुक्रमं दुस्सहाः
क्षत्रियाणां प्रजोत्तापिनां पापिनाम् ।
अभ्युपेताश् चिता-रूपतां भूतले
जामदग्न्यं स्तुवीमः सुखार्थाय तम् ॥ २-३ ॥

आहूतिभिर् वा यम - दूतिभिर् वा
व्याप्ता च शस्त्र-ध्वनिभिः समन्तात् ।
बभूव या वीर - कथा - स्थली सा
जाता वराकी करुणैक - मूर्त्तिः ॥ ४ ॥

हताऽरिभिः कैश्चिदहो ! धरित्रीं
जित्वा कृता हस्तगता मृदेव ।
परैः परेतैस् त्रिदिवं विजित्य
कृतः करे कोऽपि सुधा-[2]कटोरः ॥ ५ ॥

क्षोणी - तनुः शोणित - शोणिमाऽभूद्
धूल्याऽम्बरं धूसरिमोपलिप्तम् ।
कालं मुखं विग्रह - विद्रुतानां
गताऽवसानं कलहस्य होली ॥ ६ ॥

---

१. मङ्गलम् । २. पात्रविशेषः ।

अज्ञा ननन्दुर् विजयोपलम्भैर्
अज्ञासिषुर् हन्त ! न सत्यतां यत् ।
मांसाऽस्र - पङ्कैश्च शिरश्शिलाभिः
पुंसां क्रियन्ते जय - कीर्ति - यूपाः ॥ ७ ॥

क्रीडितं जीवितैः शूरता - शोभिनाम्
व्रीडितं जीवितैर् नैव कैरप्यहो ! ।
भूभृतोऽत्राऽपरेषां हि [1]चित्याऽनलैर्
नैजमेव प्रकम्पं पराकुर्वते ॥ ८ ॥

स्वान् निवेशान् निवृत्ताः समे सैनिकाः
कीर्त्तयन्तो नियुद्धे निजां नैपुणीम् ।
ते त्वभूवन् यथार्थं धरा - स्वामिनः
शेरते स्माऽऽहता येऽत्र युद्ध - स्थले ॥ ६ ॥

खे डीयमानाः पिशिताऽशनार्थं
नाऽत्राऽभवन् मण्डलिनो विहङ्गाः ।
कायानपीतोऽप्सरसो वृतानां
नूनं निनीषन्त्य इमाः सदेहाः ॥ १० ॥

लोलाभिरोष्ठानथ लेलिहाना
वेताल - वाला न न ते शृगालाः ।
साऽस्त्रान् शवान् वीक्ष्य [2]झटिष्वतिष्ठन्
साऽऽतङ्क - शङ्का रण - भू - सकाशे ॥ ११ ॥

पल्यङ्क - पीठेष्वखराऽऽस्तरेषु
प्राक् सेव्यमानान् शिखि-पिच्छिकाभिः ।
रुक्षे स्थले हा ! पतितान् परेतान्
अवीजयन् सम्प्रति गृध्र - पक्षाः ॥ १२ ॥

स तस्थिवान् सादिन एव पार्श्वे
हा ! ह्रेषमाणः प्रभु - भक्ति - बद्धः ।
आरोहणायाऽर्थयते स्म वाजी ।
न नाकमारूढमिमं विवेद ॥ १३ ॥

[1]. चिताग्निभिः । [2]. गुल्मेषु ।

मुण्डा यमेनेव मनाङ् निगीर्णा
रुण्डाश्च पुंसां लुलुठुर् विदीर्णाः ।
तुण्डावली क्वाऽप्यभवद् विशीर्णा
शुण्डाश्च लूना व्यलुठन् विकीर्णाः ॥ १४ ॥

देहान्यभूवन्निह [1]प्रासिकानाम्
भू - रेणु - रूक्षाणि तथाऽऽ[2]सिकानाम् ।
अस्तीह मृल्लोष्ट - समश्च शस्त्री
[3]चर्मी विपन्नः परतश्च [4]वर्मी ॥ १५ ॥

पुराऽनिशं दुर्बल - दुर्गतानां
नाथा अभूवन्नथ ये विपन्नाः
ते साम्प्रतं जात - तनु - प्रमाथाः
भूता अनाथा न न शेष - गाथाः ॥ १६ ॥

[5]स्फारं समन्तात् समवेक्ष्य मारं
दृश्यं तथा कल्पनयाऽप्यमृश्यम् ।
जुगुप्सया भीषितया च वक्त्रं
[6]रक्ताऽम्बरेण स्थगितं भुवा स्यात् ॥ १७ ॥

यैर् दर्शितं मान-धनैर् न पृष्ठम्
उत्पृष्ठ - देहैः प्रधने [7]प्रमीतैः ।
मन्येऽधुनाऽसोढ - पराजयैस्तैर्
मुखानि वीरैः स्युरधः कृतानि ॥ १८ ॥

तूणीर - चापाऽसि - धराश्च धीराः
शौटीर - शीलाः समरे [8]प्रवीराः ।
आसाद्य सद्यो [9]मरिमाणमद्य
भूता अहो ! भूति - लुठच्छरीराः ॥ १९ ॥

---

१. शूलधारिणाम् । २. खड्ग-धारिणाम् । ३. ढालधारी ।
४. कवची । ५. अधिकम् । ६. रक्तम् = रुधिरं; रक्तवर्णम् ।
७. मृतैः । ८. गर्विताः । ९. मृत्युम् ।

कश्चिद् विशन् कालमुखं व्रणार्तो
[1]मां वाऽपि [2]वापं सहजं सुतं वा ।
स्मरन् स्खलद्वाग् यदि वा सखायं
पुनः पुनः [3]पूत्कुरुते स्म योधः ॥ २० ॥

विवर्जितो बन्धु - वधू - वयस्यैः
बाणैर् बभूवानपि विद्ध - [4]वर्मा ।
सौभाग्यवान् कोऽपि च वीर - वर्यंस्
सास्मर्यंते स्म स्मयमान ईशम् ॥ २१ ॥

विवर्तमाना व्रण - वान्त - रक्ताः
ओष्ठौ लिहन्तः शयिताश्च केचित् ।
उद्बाहवो हा ! [5]परिरिप्सयेव
प्राणेश्वरीमाजुहुवुर् नवोढाम् ॥ २२ ॥

आकर्ण्य तेषां वचनानि भूयो
विलाप - सन्ताप - समाप्लुप्तानि ।
अरोदयन् हा ! सह - युध्वनोऽपि
कालेन सम्प्रत्यपि युध्यमानान् ॥ २३ ॥

अत्रान्तरे केचन सैनिकानां
सम्बन्धिनोऽभ्येत्य रणाहतानाम् ।
देहान्यनैषुः पतदश्रुधारा
आश्वासयन्तोऽपि मिथो रुदन्तः ॥ २४ ॥

बाष्पाऽम्बु - सिक्त - व्रणबद्ध - पट्टान्
अपाययन् केऽपि पयः कदुष्णम् ।
[6]प्रोक्षन्त एके सलिलैः सुशीतैः
प्रोञ्छन् विशीर्णान् विकलान् विसंज्ञान् ॥ २५ ॥

तावदेव विदूरतोऽप्यनुरोदयन्त्युपलानपि
स्वामि - गतिमाकर्ण्य हा ! दीनाऽश्रुभिर्मलिनानना ।
रुद्ध-कण्ठविलापिनी विचलत्पदा लुलिताऽलका
हन्त ! काऽपि कुलाङ्गना बालेन सार्धमिहागता ॥ २६ ॥

---

१. मातरम् । २. पितरम् । ३. हिं० पुकार रहा था ।
४. वर्मा कवचः । ५. आलिङ्गनेच्छया । ६. सिञ्चतः ।

क्रन्दनं चाऽस्या अमन्दं हाऽश्रु - बिन्दून् स्यन्दिनः
शुश्रुवानथ ददृशिवांस्तार - स्वरेण स नन्दनः ।
दिग्वधूरपि रोरुदाभिश्चीत्कृतैश्चोन्नादिताः
स्पन्दयन्नस्तोक - शोकं जीवलोकमिमं व्यधात् ।। २७ ।।

पतिशरीरस्योपरीयं पतितवत्यपि हा ! ऽबला
बाण - विद्धं विषममेतत् प्राभवन्नालिङ्गितुम् ।
वातुलत्वमिवागता शव - रूपिणं बहुशो धवं
कर - कपोल - ललाटपट्टैरस्पृशच्च चुचुम्ब सा ।। २८ ।।

वर्णयन्ती प्रिय-वरगुणान् वारशो विललाप सा
कीर्त्तयन्ती क्रूरतां कालस्य तं च शशाप हा !—।
'दुष्ट ! रे ! मम पुण्य-गाथं प्राणनाथ [1]निह्नुषा
कालता नूनं त्वया पापात्मना व्यक्तीकृता ।। २९ ।।

सौभगं सौभाग्यमथ दग्धं त्वया नः साम्प्रतं
साऽचिराच्च चिताऽऽवयोश्चुल्लीव ते संतप्स्यति ।
किन्तु तद्धूमैर् मलिनितं काल ! तत् सम्पत्स्यते
जीव - [2]जक्षण - लोभ - सदनं लाञ्छित वदनं तव" ।। ३० ।।

इत्युदीर्य पुनः पतिं सोपालभत शोकाकुला—
'किमिति रूक्षहृदा प्रिय ! स्नेहस्त्वया सहसोज्झितः ।
हा ! विहाय सधर्म्मिणीमसहायकां प्राणेश्वरीं
क्वाऽपरिचिताऽध्वन्यवद् नाथा ! ऽधुना गतवानसि ? ।। ३१ ।।

एकलेन हि सुप्यते प्राणेश ! हा ! समर - स्थले,
किङ्कृते वासोविहीने लोष्ट-कण्टक-सङ्कुले ।
त्वां प्रतीक्षन्तेऽमृतः सुकुमारता - प्रतिमूर्त्तयः
शाल्मली - तूलैर् दुकूलैरास्तृतास् तल्पाः कुले ।। ३२ ।।

बाहु - युगलं प्रिय ! विसार्य रहः करीन्द्र - करोपमं
किंनिमित्तमचेतना प्रत्यक्षतः क्षतजोक्षिता ।
भुक्तपूर्वा चारिभिः [3]परिचारिभिर् व्यभिचारिभिः
नैकपतिकाऽद्य क्षितिश्च रजस्वला परिरभ्यते ।। ३३ ।।

---

१. नयुतेत्यर्थः । २. जक्षण = भक्षणम् । ३. सेवकैः ।

बन्धनं वैवाहिकं हे जीवितेश ! कुतो गतं
तदपि वैरि-विमुक्त-बाणैः किं विलूनं नाथ ! नो ।
पीडितं पाणि प्रियायाः परिणये झटितीह किं
हन्त ! हित्वा क्लेश-कूपे तां निपातितवानसि ? ॥ ३४ ॥

कस्य हस्ते मां च सुकुमारं कुमारं साम्प्रतं
हा ? समर्प्य कुतोऽद्ययोऽपुनरागमाय गतो भवान् ।
कोऽद्य मे देशे तमोऽन्धे वद दिशामुपदेशकः
वत्सलो मृदु - पाणिना को वत्समेनं स्प्रक्ष्यति ? ॥ ३५ ॥

मर्म - नर्म - विविक्त - ललितालापलीला - लोलुपो
मुद्रित - मुखस् स्मेरता त्वं किं नु विस्मृतवानसि ? ।
ते यथापूर्वं मयीरय रोचने प्रिय ! लोचने
मुञ्च [1]जडिमानं च माऽऽनन्दय तथेमं नन्दनम् ॥ ३६ ॥

लोकलज्जा - विवश इव किं सह मया नाभाषसे ?
क्षम्यतां यदि मेऽपराधः कोऽपि पूर्वतनो भवेत् ।
मधुमयीमिव वाचमाचमितुं सदा मे लालसा
किमिति शेषे वृत्त - शेषे शून्य-देशे हा ! ऽलसः ! ॥ ३७ ॥

किं नु कान्तां कीर्तिमथ कमलां विसृज्य धरातले
स्नेह-दिव्यसुखं च मुग्धमुखं [2]विलङ्घ्य [3]तनूजनिम् ।
अप्सरोभिरनर्गलोन्मद - यौवनाभिरुपाश्रितं
लाभ-लोलुभ इव गतो हा ! वल्लभ ! भवान् सुरपुरम् ॥ ३८ ॥

किन्तु पण्येऽस्मिंस्त्वया किमुपार्जितं किमु वा जितं
युगपदेव गताऽस्मि वैधव्यं सुतोऽयमनाश्रयः ।
वञ्चितो तनयेन पितरौ भुज - विहीनाः सोदराः
शौर्य - शेखर - शालिना शून्या तथा जाता धरा ॥ ३९ ॥

नित्य - कृत्ये जागरूकः किं नु शेषे तत्स्थले
शातितं शेते त्वया [4]शात्रव - शतं यत्राऽधुना ।
शल्य - शीर्णं ते शरीरं वीक्ष्य चाऽपि शिलाऽचलम्
प्रशमसारं हृद् ध्रुवं शतधा यदद्य न मे गतम् ॥ ४० ॥

१. जडताम् । २. उपेक्ष्य । ३. पुत्रम् । ४. शत्रुशतम् ।

यत्सुधाभो राजती वसुधा सुधौता राजते
नाथ ! तां मधुमास-महिमामोद-[1]पिशुनां मधुमयीम् ।
कोकिलानां काकलीं कः किल करिष्यति कर्णयोः ?
कौमुदी कुमुदाकरे मद - मोददा कृपणाऽद्य का ? ॥ ४१ ॥

आः ! मिलिन्दैः स्तूयमानं कौसुमासन - संस्थितैर्
वारुणीमद - विह्वलीकृत - नग - निकुञ्जं दोलनैः ।
परिमलैः परिमिलितमथ धीरं समीरं कोऽधुना
त्वयि निविष्टे नन्दने गत-सौभग [2]रसयिष्यति ? ॥ ४२ ॥

आवयोर् विभ्रम - विहाराणां पुराणाः साक्षिणः
मालती-मिलिता निकुञ्जा गुल्फ-दघ्न-सुमास्तराः ।
मधुकाराणां गुञ्जतां भ्रमतां मिषेण च विश्वतः,
आह्वयन्ति च मार्गयन्ति त्वां [3]यथार्थाऽवेदिनः ॥ ४३ ॥

[4]मदकलत्वमिवेक्षमाणा कल्पयिष्यति मे दृशोः
को दयित ! कादम्बरी - चषकद्वय - प्रतिमल्लताम् ।
को रमा - पदमुषित - पाटलिमानि तामरसानि च
मम मुखाङ्घ्रि-करादिकाऽङ्गैः साम्प्रतं तुलयिष्यति ? ॥ ४४ ॥

कान्त ! सौन्दर्यस्य साम्राज्ये करिष्यति सम्प्रति
प्रतिनिधित्वं पञ्चबाणस्याऽत्र कः गिरमीरयेः ।
वीर ! [5]तान्ता वीरता शान्ता सह श्वासैस्तव
रत्नसूर् याऽभूत् त्वया सा भाति वन्ध्या मेदिनी ॥ ४५ ॥

चन्द्रशालायां स्थितो[6]त्कलिका कुलाऽनिमिषेक्षणा
[7]पार्ष्णि-युगमुत्थाप्य का कस्याऽधुनाऽध्वानं मुहुः ।
प्रेक्षमाणा चोपविष्टा प्राक् क्षणात् पुनरुत्थिता
दोल्यमानेवाशया वेला वराकी नेष्यति ? ॥ ४६ ॥

---

१. पिशुना=सूचका । २. आस्वादयिष्यति ।
३. यथार्थतामजानन्तः । ४. मदविह्वलताम् ।
५. श्रान्ता; खिन्ना । ६. उत्कलिका=उत्कण्ठा ।
७. [illegible] एड़ी ।

कौमुदी-खेलासु वा मधुमास-मेलासु प्रिय !
होलिका-हेलासु वा कृत्रिम-कलह-वेलासु वा ।
साऽधुना का केन [1]साप्तपदीनमाप्ता साधुना
मोदितुं वा रोदितुं वा कस्य हेतोः स्थास्यति ? ॥ ४७ ॥

मल्लिका - मुकुलन - महोत्सव - नायकः संपत्स्यते
को नु राकारमण-राज्ये प्रिय ! चकोरायिष्यते ? ।
लम्पटः को मदन - नगरी - वैभवं लुण्टिष्यति ?
कोऽथ कापोतीं च केलिं सह कयाऽनुकरिष्यति ? ॥ ४८ ॥

पक्षपातिनि सद्गुणानां सरस-हृदये सम्प्रति
त्वयि दयित ! हा सम्प्रविष्टे नाक-नगरी-जवनिकाम् ।
सारमिव संसार-सिन्धोर् लवणिमानं सर्वतः ।
जल्प जीवित-कल्प ! को वाऽऽस्वादयिष्यति काऽपि वा ?" ॥ ४९ ॥

एवं धवं हन्त ! शवं चिरं सा-
ऽनाथा जगद् - विश्रुत - शोक - गाथा ।
क्रीडा - सहायाऽद्य मुखे स्पृशन्ती
लालप्यते स्माऽविरताश्रुवारा ॥ ५० ॥

तुषाराप्लुत - कञ्जाभे नेत्रे क्षेत्रे शुचां ततः ।
प्रोञ्छन्ती पुत्रकं साऽऽह परिष्वज्य पुनः पुनः ॥ ५१ ॥

"वत्स ! दुर्लभ - दर्शनं सम्पत्स्यमानं [2]जन्मदं
साम्प्रतं [3]चरमं प्रणामं कुरु पदे स्पृश मौलिना ।
निर्भरं च विमुद्रिते परितर्पय त्वमपीक्षणे
शिथिलितादादत्स्व हस्तादस्य च स्वयमाशिषम्" ॥ ५२ ॥

किङ्कृते वीरोऽत्र जामाता जनैरन्विष्यते
हन्त ! नैयत्येन योऽद्यश्वीन - भावि - तनुक्षयः ।
वेत्ति देहं तृणमिव स्नेहं च गेहं निष्कृपः
काल-[4]हरि-पुच्छे विजानन्नपि निधत्ते यः पदम् ॥ ५३ ॥

१. मैत्रीम् । २. पितरम् । ३. अन्तिमम् ।
४. हरिः=सिंहः ।

व्यक्त-मानस-वेदनैस् तस्याः पुनः परिदेवनैर्
विश्वतो वन-वल्लि-कुञ्जा विटपि-पुञ्जा बाधिताः।
प्रतिरव-मिषाद् दश दिशोऽपि सहानुभूत्याऽऽपूरिताः
"हा! ऽस्तमेष गतोऽद्य सूर" इतीव भूयश्चुक्रुशुः ॥ ५४ ॥

क्रन्दनैरस्याः [1]क्षतानपि रोदयन्त्याश् चाऽनिशम्
मूर्ध - मुख - वक्षः - प्रताडन - तत्पराया हा! तदा।
[2]अस्र - धारैरेव सह [3]सैमन्तिकं चाऽलक्तकम्
प्लावितं पति - रक्त - धारेऽभूच्च यौवन - सौभगम् ॥ ५५ ॥

रण - धरणि - रेणु - क्षरत् - क्षतजोक्षितं हृदयेश्वरं
हा! ऽस्रधार - सहस्रकैस् तं स्नापयन्ती सन्ततम्।
काच - कटक - क्षेम - कौतुक - भेदन - व्याजेन च
साऽप्यु[4]दात्त-विलापिनी चिच्छेद परिणय-बन्धनम् ॥ ५६ ॥

[5]इदंतया सा रण - रङ्गभूमिर्
दुःखान्त - दृश्या स्रवदस्र - सारा।
कृतान्त - लीलाऽभिनय - स्थलीव
भीमा प्रलापैकमयी च जज्ञे ॥ ५७ ॥

ततोऽविदूरे रण - चत्वरस्य
प्रान्ते श्मशानाऽच्छ - सरोवरस्य।
ऐक्ष्यन्त दीप्ताश् चितिकास्तदाऽपि
कृतान्त - कोपाऽग्नय एव साक्षात् ॥ ५८ ॥

सरोजलेऽभासत वेपमानं
चिताऽर्चिषां न प्रतिबिम्बमेतत्
स्पर्शाच्छवानामपवित्रितोऽग्निर्
निमज्जनोन्मज्जनमत्र चक्रे ॥ ५९ ॥

ज्वाला विशाला प्रतिबिम्बितैका
वातेरितेतस्तत आपतन्ती।
बालाऽर्ध्य - वेषाश्रित - पाद - ताला-
ऽऽदर्शाऽग्रतो नृत्य - रतेव रेजे ॥ ६० ॥

---

१. व्रणितान्। २. अश्रु-धाराभिः। ३. सिन्दूरम्।
४. उदात्तः = उच्चैः स्वरः। ५. इत्थम्।

दिगन्तरे चण्ड - चिता - चयेन
व्याप्ते च तद् - बिम्ब - शतेन तोये ।
ज्वालामुखी - संवृतमद्य सद्यः
श्मशानतामेव सरोऽप्यतानीत् ॥ ६१ ॥

चित्याऽग्नि - बिम्बं सलिले किमासीद्
अस्तोक - शोकानिह वीक्ष्य लोकान् ।
जडात्मनोऽप्याः ! [1]सह - दुःखिनो वा
देदीप्यमानं हृदयं ह्रदस्य ॥ ६२ ॥

छायात्मरूपेण जले चिताया
ज्वालः स्फुरन्नुच्चतमोऽत्र कश्चित् ।
स्व - दाह - दुखाद् विलुठन् शमाय
तत्र प्रविष्टो दहनो बभासे ॥ ६३ ॥

चटत्कृति - प्रोत्कट - गीतिकाभिश्
चञ्चच्चिता - चुल्लिषु डाकिनीभिः ।
[2]दिष्टङ्गतानां समरे भटानाम्
[3]भटित्रमापाद्यत यत्र तत्र ॥ ६४ ॥

धूमस्य धाराः पवनाभिघातै-
रासन् गताः कुण्डल - कुञ्चितत्वम् ।
किं कुन्तलाः कौणप - कामिनीनां
कालस्य वा केसरिणो नखाः किम् ? ॥ ६५ ॥

क्रव्याद - वान्तैः शव - पूति - गन्धैर्
दिक् - चक्रवालं सहसा[4]ऽश्नुवानैः ।
धूमाऽम्बरेणाऽम्बर - देवताऽपि
दृढं मुखं स्वं स्थगयाम्बभूव ॥ ६६ ॥

विदूर - देशे चितिका - प्रकाशाः,
प्रेतान् प्रवीरांस्त्रिदिवं हि नेतुम् ।
संप्रेषिता निर्जर - कन्यकाभिर्,
बभुर् विमाना वसुधाऽवतीर्णाः ॥ ६७ ॥

---

१. समानदुःखभाजः ।
२. मृतानाम् ।
३. पुं० भड्था (शूलपाकः) ।
४. व्याप्नुवानैः ।

उद्गीर्यमाणश् चितिकोलमुकाग्रैः
शीत्कार - शब्दो मिलिताऽम्बु - फेनः ।
अद्यापि शस्त्र - व्रण - वेदनाभिर्
नियन् स्वरोऽभूद् नियतं मृतानाम् ॥ ६८ ॥

वसाऽशनैर् मेदुरतामुपेताश्
चित्या - शिखाः काश्चन खं स्पृशन्त्यः ।
सविग्रहाः संसृति - घस्मरस्य
कालस्य [1]लोला व्यलसन् विलोलाः ॥ ६९ ॥

चिता - 'चटच्' - छब्द - विबोध्यमाना
मज्जा - वसाचान्ति - सुखा इवाऽत्र ।
ज्वालाः कराला न बभुः परं ताः
बेताल - बाला ननृतुः प्रचण्डाः ॥ ७० ॥

विष्वग् द्रुतायाः [2]करिणका वसायाश्
चित्याऽभितापाद् बहुशः पतन्त्यः ।
दुःखेन देहान् दहतो भटानाम्
वैश्वानरस्याऽश्रु [3]कला इवासन् ॥ ७१ ॥

विलाप - वाग् - वैदिकमन्त्र - घोषैर्
एवं ध्वनद् - दूर - दिगन्त - देशः ।
चिताग्नि - कुण्डाहित - वीर - गात्रो
गतोऽवसानं नर - मेध एषः ॥ ७२ ॥

देशे चितानां भसितस्य तत्र
पदे पदे याश्चितयो बभूवुः ।
आमन्त्रितस्य स्वयमेव साक्षात्
सारा बभुः सङ्कलिता रणस्य ॥ ७३ ॥

उड्डीयमानः पवनोर्मिभिः खे
ततश्चिता - भूतिभरः सुराष्ट्रे ।
तद् - वासिनां मुग्ध - धियां शिरस्सु
पपात सन्ताप - परिप्लुतानाम् ॥ ७४ ॥

---

१. जिह्वा । २. बिन्दवः । ३. कलाः = कणाः ।

उद्वेलितस्योच्छ्वसन - प्रवातैः
क्लेशाम्बुराशेः सकले प्रदेशे ।
चित्याऽस्थि - पुञ्जाः परितः प्रकीर्णास्
तौल्यं ययुः शुक्ति - कपर्द - 'घोङ्घैः ॥ ७५ ॥

कुल - प्रदीपा इव धीर - वीराः
प्रचण्ड - वात - प्रधने प्रशान्ताः ।
ध्मातो नृणामुच्छ्वसितैः शुचाऽग्निर्
परं गृहेषूग्रतया दिदीपे ॥ ७६ ॥

युग्मकम्

भूपाल - भूभुक् - क्षितिभृत् - क्षितीश-
महीपतीत्यादि - पदान्यवाप्य ।
स्व - कल्पितैस्तैर् मद - मोद - भाजो
मर्त्या मुधैव प्रभवन्ति मुग्धाः ॥

नाऽहं परं क्वाऽपि कदाऽपि कस्या-
ऽपीतीव मत्वा धरणी किलैषा ।
चिताऽस्थि - रूप - स्फुट - दन्त - पङ्क्तिर्
अपाहसत् तत्र वृथा कृताजीन् ॥ ७७-७८ ॥

तद् - धर्मयुद्धं प्रवरो जितारिर्
अमङ्गलोदर्कमलं विदित्वा ।
दुःखासिका - व्याकुलितो बभूवान्
सुशील - शाली सुचिरं शुशोच ॥ ७९ ॥

कृत्वाऽरिजातं जित - लज्जितं तु
सपाशितं चाऽप्यचिरान्मुमोच ।
परं प्रजाः प्राप्त - पर - प्रसादाः
स्नेहस्य गूढैर् निगडैर् न्यबध्नात् ॥ ८० ॥

अभून्निवेशे जय - तूर्य - घोषः
प्रापि प्रथीयान् प्रतिपक्षि - कोषः ।
न चेतसस् तस्य तथाऽपि तोषः
परं प्रजातः प्रशम - प्रमोषः ॥ ८१ ॥

---

१. घोङ्घः = शुद्रशङ्खः ।

[1]वित्तेन वित्तेन ततः स तेन
लोकान् सशोकान् [2]करुणावतोऽत्र ।
सम्पोष्य सन्तोष्य तथाऽनुकम्पी
प्रह्लादिताऽन्तःकरणानकार्षीत् ॥ ८२ ॥

सौम्यः सुधा - [3]सारघ - सोदराभिर्
वात्सल्य - वाग्भिर् विकिरन् सुमानि ।
स सान्त्वयामास समान् स्मितैश्च
क्षतिं क्षतानां क्षपयन् [4]क्षितिक्षित् ॥ ८३ ॥

स्वाम्यं धरायां सुख - धर्मवृद्धै
क्षमी चतुर्दिक्क्रमसौ दिदृक्षुः ।
द्वेषाऽन्धया नाऽपि धिया बलस्य
[5]क्षप्त्यै च चक्राम धराधिराजः ॥ ८४ ॥

विनीय नैकाननुनीय चाऽन्यान्
व्रणान् विरोप्याऽथ स जन्य - जन्यान् ।
योऽभूद् विरोधी वर - वीर - योधी
जातः प्रजानां स्वक एव तातः ॥ ८५ ॥

जनैः स एवं विहिताऽनुरञ्जनैः
प्रियः समन्तादुपपन्न - सत्क्रियः ।
ततोऽधिराजो विनमत्समाजो
निवर्तनायाऽऽदिशति स्म सैन्यम् ॥ ८६ ॥

आदिक् - तटात् सागरमेखलां स
प्रदक्षिणीकृत्य वशित्वमाप्ताम् ।
धर्मं नियोज्याऽत्र च शासनाय
पैत्रं प्रदेशं प्रति सम्प्रतस्थे ॥ ८७ ॥

धराऽधमाऽधार्मिक - धर्षणाय
धर्माऽवना धर्म - विवृद्धयेऽयं ।
धर्मिष्ठ - धानुष्क - धुरन्धरेण
धार्मो ध्रुवं तेन जयो व्यधायि ॥ ८८ ॥

---

१. प्राप्तेन; धनेन । २. दयनीयान् । ३. सारघं=माक्षिकम् ।
४. भूपः । ५. प्रकटनाय ।

जितेषु राज्ञा भय - वर्जितेषु
देशेषु सौभाग्य - विराजितेषु ।
द्वेषोऽथवा कोऽपि मिथो विशेषो
न क्लेश - लेशोऽपि पदं चकार ॥ ८९ ॥

स विक्रमादित्य - सुतः "प्रताप-
शीलस्" तदाऽरातिभिरात्त - राज्यः ।
पित्र्याऽऽसनेऽस्थाप्यत तेन भूयः
काश्मेरेण दृष्टा अथ जग्मुषा[1] ते ॥ ९० ॥

सिंहासनं दिव्यतया प्रसिद्धम्
पराऽऽहृतं प्रागथ पूर्वजानाम् ।
आदाय पूज्यं पुनरुज्जयिन्याः
मानी स नैजीं नगरीं निनाय ॥ ९१ ॥

ततः ससैन्यः सुकृती स सम्राट्
[2]प्रह्वैः प्रजापैः पथि पूज्यमानः ।
[3]प्रत्यैत् प्रसन्नो विबुधाऽधिवासं
काश्मीर-देशं त्रिदिवं धरायाः ॥ ९२ ॥

'भोटा'ऽन्तिके 'मुम्मुनि' - भूमिपालम्
पराजितं चाऽपि स सप्त-वारान् ।
अलीक - वाचा विहिताऽपदेशम्
बद्ध्वाऽपि धृष्टं कृपया मुमोच ॥ ९३ ॥

वारेऽष्टमे तं त्रपया निरस्तम्
आख्यातु - कामं पुनरन्य - हेतुम् ।
"धिग् वध्यतामेष पशुर् दुरात्मे"-
त्यमर्षणा शस्त्रिणमादिदेश ॥ ९४ ॥

"वध्यः पशुत्वान्न भवामि वीरे !"
त्युक्त्वा स भूयः सभयः सभायाम् ।
केकाऽनुकारी कुशलः कलायाम्
मायूर - लास्यं रुचिरं चकार ॥ ९५ ॥

---

१. प्रतापशीलाऽऽख्यातम् इत्यर्थः । २. नम्रैः । ३. प्रतिन्यवर्तत ।

क्षमी विनीतो नवनीत - चेताः
प्रीतोऽथ पार्थं - प्रवरः प्रहासी ।
वित्तैः प्रदत्तैः प्रचुरैः स साकम्
अभीतमेनं विदधे वराकम् ॥ ९६ ॥

सौभाग्य - लक्ष्मीः करुणा - कटाक्षे
कालो भ्रुकुट्यामथ कुञ्चितायाम् ।
बृहत्तमानां वसतीह येषां
स्तुवीमहे तान् गुणिता - निकेतान् ॥ ९७ ॥

भूमण्डलाऽऽखण्डल एष एवं
स्मितानि वार्तासु तथाऽमितानि ।
वसूनि वर्षन् गुणिनां गणेषु
जातः प्रभुः प्रार्थक - पारिजातः ॥ ९८ ॥

द्विषन्तपो दिग्विजयस्य कार्यम्
अशेषयित्वाऽथ धराऽधिराजः ।
निष्कण्टकीकृत्य दिशः समस्ताः
चक्रे क्षमा - भृत्त्वमसौ [1]यथार्थम् ॥ ९९ ॥

गगनममलतामैद् घोर-घान्या[2] घनाली
भुवन-जनित-भीर् दिक्-चक्रवाले विलिल्ये ।
नलिन-कुल-विकासी तेजसा विश्व-शासी
[3]हिरण-किरण-शाली दिद्युतेऽथांऽ[4]शुमाली ॥ १०० ॥

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते 'त्रिवेणी' इत्याख्ये महाकाव्ये 'प्रधन - परिणाम - वर्णनम्' इत्यभिधेयः षड्विंशः सर्गः पर्यवसितः ॥



---

१. सार्थकम् । २. घान्यं=घनता ।
३. हिरणं=स्वर्णम् । ४. सूर्यः ।

# सप्तविंशः सर्गः

आमुत्रिकं मङ्गलमातनोतु
ध्वान्तं धियामात्रिकमुद्धुनोतु ।
मुष्णातु मोहं चरितं च पुण्यम्
पुष्णातु [1]सैशी सततं प्रभा वः ॥ १ ॥

विश्वं वशीकृत्य वशी स विश्वम्
विशांपतिर् नप्तृ - पुरस्थ एवम् ।
सुशीलता - रूपक - सूत्रधारः
सञ्चालयामास सुराष्ट्र - तन्त्रम् ॥ २ ॥

मरीचिमालीव महीमहेन्द्रो
महोमहिम्नेरयति स्म लोकान् ।
येनाऽऽसमुद्रात् सततं समेषां
स्मेराण्यराजन्त मुखाम्बुजानि ॥ ३ ॥

ततः कदाचिन् नरनाथ एष
प्रवर्तयम् पुण्य - पथे प्रजाः स्वाः ।
स्वर्ग्यैः सुखैः संवलितां सुरम्यां
निर्मित्सुरासीन्नगरीं स्व - नाम्ना ॥ ४ ॥

क्षेत्रं शुभं दिव्यमथाऽपि लग्नं
जिज्ञासमानः क्षितिपः क्षपायाम् ।
स एकदा साहसिकोऽद्वितीयः
कृपाण - पाणिर् निरगान्नगर्याः ॥ ५ ॥

[2]अन्वीयमानस् तिमिराऽसुरेण
[3]त्रस्नुस् तदाऽसौ तरणिस्तरस्वी ।
प्रधावनाच्छोणमुखश्चिरात् खे
छन्नः प्रतीची - कुहरान्तरेऽभूत् ॥ ६ ॥

---

१. सा+ऐशी=ईश सम्बन्धिनी । २. अनुगम्यमानः । ३. कातरः ।

घनान्धय - पङ्केन समत्वमाप्ते
मार्गे कथञ्चिन्नृप - कुञ्जरोऽसौ ।
[1]चङ्क्रम्यमाणो निज - तेजसैव
प्रवर्त्यमानः पुरतो बभूव ॥ ७ ॥

कराऽऽलोकेन यच्चित्रं [2]मित्रेण व्यञ्जितं भुवि ।
तत्र कालेन रङ्गेणाऽकारि कालेन लेपनम् ॥ ८ ॥

द्रवताऽर्केण दग्धेवाऽचिराद् क्रमाद् धरा ।
या [3]सुधा - सूतिना भूय उपेत्योज्जीवयिष्यते ॥ ९ ॥

तमसोपेयुषाऽऽकाशात् प्लाविते वसुधा - तले ।
व्यलुपद् [4]वस्तु - वैशिष्ट्यं दिगेकैवाऽभितो बभौ ॥ १० ॥

योगिनी भस्मकेशीव कृत्तिवासा भियां जनी ।
रजनी नीरजानां वा रेजेऽलक्ष्मीः शरीरिणी ॥ ११ ॥

सन्निकृष्टे गिरां [5]पौंस्नी [6]विप्रकृष्टेऽपि वा क्वचित् ।
श्रोत्राणां शष्कुलीष्वद्य लेशतोऽपि न चाऽविशत् ॥ १२ ॥

दुर्दर्श - द्वि - त्र - नक्षत्र - दन्तुरास्यस्तमोऽसुरः ।
सन्ध्या-रक्तमिवापीय तुन्दिलत्वमुपागमत् ॥ १३ ॥

[7]जगच्चक्षुषि जातेऽस्तं नीहाराऽश्रूणि निर्भरम् ।
किरन्ती विप्रयुक्तेव ययावाऽऽन्ध्यं वसुन्धरा ॥ १४ ॥

सूचीभेद्य - तमःस्तोमे दिगन्ताऽनन्त - सन्तते ।
खे विदग्ध इवाऽर्केण प्राज्ये राज्येऽशिश्रिषद् भयम् ॥ १५ ॥

भानु - भर्तरि यातेऽस्तं द्यौः प्रसार्य तमःकचान् ।
हिम-रूप-पतद्बाष्पाऽरोदीद् घूत्कार - कैतवात् ॥ १६ ॥

---

१. परिभ्रमन् । २. सूर्येण । ३. चन्द्रेण ।
४. पदार्थानां भेदः । ५. पुरुष-सम्बन्धिनी । ६. दूरे ।
७. सूर्ये । ८. [illegible] ।

[1]वैजन्यस्यैव नामाऽन्यद् भयमित्यभिमन्यते ।
तत्सत्त्वान्ननु कोऽत्राऽलम्-भूष्णुर् द्रावयितुं दरम् ॥ १७ ॥

मौनिन्यस्तैमिरं चोलं दधाना मेचकं दिशः ।
चिरात् परिचिताश्चाऽपि ययुः रौरव - चित्रताम् ॥ १८ ॥

श्रोत्रयोः सहसाऽऽविष्टः स्वरः सूक्ष्मोऽपि कश्चन ।
मर्मभेदी भ्रमायाऽभूद् असम्यक् सूचि - वेधवत् ॥ १९ ॥

स्वैरण - सौलभ्य - कातर्यात् क्षुल्लकेष्वपि वस्तुषु ।
कल्पना - कुशला दृष्टिर् हिंस्र - च्छायामिवैक्षत ॥ २० ॥

लुण्ठा - लाम्पट्य - कृत्यानि लोके लुप्तान्यहो / दिवा ।
कृष्णानि ध्वान्त - रूपेण साकारत्वमिवाऽऽययुः ॥ २१ ॥

दिवसे विसृता विष्वक् कुञ्चिता सैव साम्प्रतम् ।
तूष्णीं तस्थौ तमस्विन्याः प्रकृतिः श्यामलाऽञ्चले ॥ २२ ॥

अकाण्डे ताण्डवं चण्डं चक्रे माध्वी - मदोद्धता ।
प्रसार्य कुन्तलान् कालान् [2]कालरात्रीव भैरवी ॥ २३ ॥

लोके किं कोक-शोकाऽग्नि-धूमोऽस्तोको व्यलोक्यत ।
यस्य वर्णे व्यलीयन्त सर्वतः पर्वता अपि ॥ २४ ॥

दृक् - शक्ति - तस्करं लोकान्तरेभ्योऽप्यागतं ध्रुवम् ।
मूकीभूय स्थितं मूर्तं [3]शार्वरं सर्वतोदिशम् ॥ २५ ॥

गणरात्रमिवाऽत्राऽभादैककाल्यमुपागतम् ।
किं वैत्य काल - सर्पेण ककुभः कवलीकृताः ॥ २६ ॥

कालिका-श्यामलाऽऽकारैः प्रोर्णुवानैर् नभः-स्थलीम् ।
रौद्र-रूपक आस्वाद्यम् आद्यं दृश्यं पुरस्कृतम् ॥ २७ ॥

सूकिम्नाऽनन्य-सम्भाज्य-प्राज्य-साम्राज्य-शालिमा ।
पटेऽसिते स - सामग्र्या वसुधा पोटलीकृता ॥ २८ ॥

---

१. निर्जनतायाः । २. प्रलयनिशेव । ३. तमः ।

यथो निशा-विषावेशाद् इला [1]कोकिल-कालताम् ।
जगाम जगतोऽशेष [2]ऐकध्यं कृष्णिमैष किम् ? ॥ २९ ॥

कोणे काऽपि कुतोऽप्येत्योत्पतन्ती काञ्चनोज्ज्वला ।
ननर्त्ततस्ततस्तत्र चञ्चला लासिकेव च ॥ ३० ॥

आलोक्येव दृशाऽस्पृश्यं दृश्यं भूयो - भयं भुवि ।
दीना द्यौरबिभः[3] कायं काल-कम्बल-संवृतम् ॥ ३१ ॥

मेदिनी यामुने गर्ते निमग्ना स - [4]परिच्छदा ।
तस्या व्योमस्थली चाप्ता साम्प्रतं [5]प्रतिमल्लताम् ॥ ३२ ॥

नीलिम्नीत्थमग्रश्चोर्ध्वं [6]सङ्कटे लोह - सम्पुटे ।
अस्यन्दिष्ट न लोकोऽयम् अन्तर्धूमो यथा रसः ॥ ३३ ॥

ब्रह्माण्डेऽन्तर्ग्रिमापन्ने प्रलयोऽभूत् तमोमयः ।
सन्नप्यसन्निवाऽभाच्च कायो मिथ्येति साधयन् ॥ ३४ ॥

मायिन्याऽकारि यामिन्याऽलक्षितं मन्त्र - मोहनम् ।
नयने विद्यमाने चाऽपीयतुर् येन शून्यताम् ॥ ३५ ॥

नीरन्ध्रिताऽन्धकारेणैकभाव्यं द्विग्भिरागता ।
द्यौरभ्रिता विदूरस्थामालिङ्गद् विधुरा धराम् ॥ ३६ ॥

बन्धुभूयमिवाऽऽप्तानां भयैर् वारिमुचां रवम् ।
श्रुत्वा प्रतिध्वनि - व्याजाच्चक्रन्दुः पर्वता अपि ॥ ३७ ॥

सहसा सरघा - सङ्घ - सच्छायैर् वारिवाहनैः ।
नभो नेपथ्य - नीकाशम् आस्तीर्णमसिताऽऽस्तरैः ॥ ३८ ॥

वेल्लन्ती बहुलं विद्युद् वात - जातेव वेदना ।
स्थेमानं नैकतो भेजे मेदुरे मुदिरोदरे ॥ ३९ ॥

अलन्तमा दिवामन्या कर्तुं धन्या तमस्विनीम् ।
कृशोराश्वासनीवैवं क्षणायाऽभूत् [7]क्षणप्रभा ॥ ४० ॥

---

१. हिं० कोयला । २. एकस्थतामिति । ३. दधार ।
४. सर्ववस्तुसहिता । ५. स्पर्धानम् । ६. संबाधे । ७. तड़ित ।

एवं तडित् - त्विषा मार्गे दृष्टाऽदृष्टे कथञ्चन ।
वैरल्येनैव वैषम्य - खातोद्घाताद्यबुध्यत ॥ ४१ ॥

हुङ्कारैर् भीषयन् भूरि घस्मरो दानवो यथा ।
जवनो रवणश्चैवा[1]ऽविवेपत् पवनोऽवनीम् ॥ ४२ ॥

उह्यमानेषु वातेन तोय - वाहेष्वभुस् ततः ।
कदाचिद् यामुने नीरे बुद्बुदा इव तारकाः ॥ ४३ ॥

घोरो घुर्घुरिका - घोषो घूर्णते घाति - घोणिनाम् ।
चञ्चच्चमंचटी चीची - कूची - चीत्कार - चण्डिमा ॥ ४४ ॥

झुण्ट - झाटेषु झङ्कारो [2]झिल्लिका - झल्लरीरितः ।
[3]डालेषु डाकिनी - डिम्ब - [4]डुण्डुलानां च डम्बरः ॥ ४५ ॥

ध्वान्ते धीर - धुरीणानां ध्वंसयन् धारणां ध्रुवम् ।
फूत्कारः फणिनां फुल्लत् - फटानां [5]फेरु - फेत्कृतम् ॥ ४६ ॥

भुक्तये भ्रमतां भूयो भल्लूकानां भयोत्कटम् ।
भञ्जतां भूरुहांश्चाऽम्बू[6] - कृतं भूतान्यभत्संयत् ॥ ४७ ॥

ततोऽग्रे चक्रवाकानां वराकाणामदूरतः ।
अशोश्रूयत [7]रोरूया साऽपि मन्ये तमोभयात् ॥ ४८ ॥

तत्र दिग्दाह - शङ्केव सहसाऽभूत् पुरस्तथा ।
सीमा समीपगाऽभासीत् कुम्भीपाकस्य पूतिभिः ॥ ४९ ॥

जम्बाल - जाल - सच्छाये सृमरे तिमिरेऽध्वनि ।
गजराज-[8]व्रजो रेजे वीत - भीतिः स भूपतिः ॥ ५० ॥

तेजस्तारुण्य - लावण्य - गेहं देहमनीदृशम् ।
रुचिरं तडितस्तस्य रोचिषा रुरुचेऽचिरम् ॥ ५१ ॥

---

१. अकम्पयत् ।
२. हिं० झींगुर ।
३. शाखासु ।
४. डुण्डुलानां=क्षुद्रोल्लूकानाम् ।
५. फेरुः=शृगालः ।
६. सनिष्ठीवं गर्जनमित्यर्थः ।
७. क्रन्दनम् ।
८. व्रजः=भ्रमणम् ।

दधानोऽप्रतिमं शौर्यं पर्यटन् सोऽसुगे पथि ।
पार्वतेयीं पुरोऽपश्यत् तरु-तीरां तरङ्गिणीम् ॥ ५२ ॥

उपान्तेऽस्याश्चिताऽलातैर् द्योतमान - तटद्वयम् ।
जाहृस्यते स्म किं धैर्यं श्मशानं गुणयद् भयम् ॥ ५३ ॥

कञ्ज-किञ्जल्क पुञ्जस्य [1]पिञ्जरिम्णेव रञ्जिता ।
मञ्जुला भूपतेर् मूर्त्तिर् बभौ तत्रोज्ज्वले स्थले ॥ ५४ ॥

## त्रिकम्

नृत्यदुत्ताल - वेताल - योगिनी - जाल - सङ्कटम् ।
करालाऽनेक - कङ्काल - कपालाऽस्थि - [2]विशङ्कटम् ॥ ५५ ॥

दशम-द्वार-[3]दाराऽस्तैर् दण्डैर् दारुण - दर्शनम् ।
धूमधारा - घनध्वान्त - पूति - भूति - मलीमसम् ॥ ५६ ॥

धूम्रिमास्तीर्ण - पार्श्व - द्रु - स्कन्धनद्धाऽस्थि - पोट्टलम् ।
पाथेयैरिव भूतानां यच्चितं शश्वदाबभौ ॥ ५७ ॥

चटत्कारि - चिताग्नीनां व्याजेनोल्लसदर्चिषाम् ।
अभूद् गीतं च नृत्यं च भूतानां प्रीत-चेतसाम् ॥ ५८ ॥

सीत्कारा आर्द्र - दारुभ्यो न निरीयुर् निरन्तराः ।
शङ्के शब्दाः शरीराणां दाह - वेदनयाऽभवन् ॥ ५९ ॥

[4]कुणपानां कपालेषु मज्जानो भेजिरे द्रुतिम् ।
अन्धमूषासु कल्काश्च स-रसा धातवो यथा ॥ ६० ॥

रौद्रे नीरवता - राज्ये सूचीभेद्य - तमोवृते ।
[5]वैबोधिका इवाऽमूका घूकारत्रासं व्यबोधयन् ॥ ६१ ॥

तमिस्रायास् [6]तिरोधाने प्राक् कथास्वेव विश्रुतम् ।
साहसोच्चाटकं किञ्चिद् अभ्यनीयत नाटकम् ॥ ६२ ॥

---

१. रक्तेन पीतेन वा वर्णेन । २. भयानकम् ।
३. दारः=विदारणम् । ४. शवानाम् ।
५. वन्दिनः । ६. यवनिकायाम् ।

अस्थिभिर् दन्तुराः शान्ता भसितैश्च सिताश्चिताः।
आस्था पिण्डेषु भूतानाम् मौनीभूयाऽहसन्निव ॥ ६३ ॥

चिति - प्रान्तेषु शान्तेषु विकीर्णाः कोकिलाः किल।
प्रेतानामभवन् शिष्टा अनिष्टा वासना इव ॥ ६४ ॥

पिशाचानां वसाचान्ति - चटत्कारश्चिता - चयैः।
स-स्फुलिङ्गः समुद्गीर्णश् चालयामास चेतनाम् ॥ ६५ ॥

अतृप्ताः कुणपान् जग्ध्वा दग्ध्वाऽपि [1]भस्मकाऽऽमयाः।
जिघत्सयेव चाऽन्येषां पर्यैक्षन्तोच्छिखाश्चिताः ॥ ६६ ॥

वसाया विस्र - गन्धेन विकृष्टा इव विश्वतः।
लम्बि-लाला-ललल्लोला विचरन्ति स्म वञ्चकाः ॥ ६७ ॥

ग्राम्याख्यात - महत्त्वानि भीषयन्ति भयान्यपि।
ज्वालामयानि सत्त्वानि दूरतो द्रागुपागमन् ॥ ६८ ॥

रुद्धा मध्ये पुनर् बुद्धा द्रुता मन्दाः पुरोऽश्रुताः।
कुञ्जेभ्यस् तरु - पुञ्जेभ्य उदीयुर् भैरवा रवाः ॥ ६९ ॥

दूतिका इव भूतानाम् उल्कामुख्योऽभितो रुतैः।
साध्वसोद्घोषणां चक्रुः [2]खिङ्खिर्यो वाऽशिवाः शिवाः ॥ ७० ॥

त्रस्तमेवं तमोग्रस्तं श्मशानं चाऽप्यसंशयम्।
चक्रे चितोल्मुकाऽऽलोकं न लोकं ध्वस्त-साध्वसम् ॥ ७१ ॥

ततो धैर्यवतां धुर्योऽधीशिताऽशेष - भूभृताम्।
भूतं पयस्विनी - पारे प्रादुर्भूतमवैक्षत ॥ ७२ ॥

दूरतोऽपि दृशा स्फारान् दिक्षवङ्गारानिवोद्वमत्।
ऊर्ध्व - केशं तदुद्देशं रौद्राऽऽरावैरभीषयत् ॥ ७३ ॥

निशाटः स चितोद्दीप्त - ललाटः श्वसितैर् नगान्।
पदाघातैर् भुवं दोर्ष्णोरुत्पातैः खमदोलयत् ॥ ७४ ॥

---

१. बुभुक्षातिशय-रोगाः। २. लोमशाः।

सौदामनी - विलासोऽभूत् क्षणं संक्षीण - साध्वसः ।
येन तत् [1]सारितं स्रोतो वैरल्येन विदिद्युते ॥ ७५ ॥

साहसेन पदं न्यस्यन् गन्धमातङ्ग - लीलया ।
स वत्सर्यंचचक्रवर्ती तद् ऐक्षिष्ट स्थिर - चेतनः ॥ ७६ ॥

तथात्वे विस्मयाविष्टः साध्वसो गत - साध्वसः ।
न्यस्त - हस्तस्[2] त्सरौ भाविघटनां प्रत्यपालयत् ॥ ७७ ॥

अत्रासंशयमत्रासं प्रेक्षमाणः क्षमापतिम् ।
स हा हेत्यट्टहासैश्च खगान् बुद्धान् व्यरावयत् ॥ ७८ ॥

दधानं तं ततोऽमानं स्थेमानं मानसे नृपम् ।
स आह वच [3]उत्तानं श्मशानं व्यनुनादयन् ॥ ७९ ॥

मूर्त्तिमानस्मि सन्त्रासः पिशाचानामधीशिता ।
नरनाथ ! निशीथिन्यां शासनं मे प्रवर्तते ॥ ८० ॥

संख्याऽतीताः सुशीतास् तद् - विपरीताश्च भूपते ! ।
सुस्फीताः [4]समया नीताः श्मशानं [5]समया मया ॥ ८१ ॥

सत्त्वोद्रेको जगत्येकः स त्वयि त्वयि ! वीक्षितः ।
एक-द्वा यं पुरा बभ्रुः शौर्य-मूर्त्ते ! क्षिति-क्षितः ॥ ८२ ॥

मस्यामिवाऽद्य तामस्यामस्यां मग्ने महावने ।
उत्सहेताऽन्यथाऽऽगन्तुं को मुमूर्षुमृते पुमान् ॥ ८३ ॥

प्रभाकरस्य वह्नेश्च रजनीरमणस्य च ।
धात्राऽऽदाय कृतोऽस्यंशान् यथार्थं प्र-व-राऽभिधः ॥ ८४ ॥

प्रजासृड् - विष्णु - रुद्राणामंश - भूतोऽथवा भवान् ।
तेन किं ते तपस्विन्यास् तमस्विन्याश्च भीः कुतः ॥ ८५ ॥

---

१. सरित्सम्बन्धि ।　　२. खड्ग-मुष्टौ ।
३. प्रसारितम् ।　　४. ऋतवः ।
५. मध्ये ।

पुण्यं प्रागेव पुष्णाति मुष्णाति दुरितं द्रुतम् ।
शिव - सालोक्यमाप्तानां त्वादृशां दर्शनं शिवम् ॥ ८६ ॥

आ मूलात् ते यथा - वृत्तान्यवदानानि कृत्स्नशः ।
चिकीर्षितं च जानामि [1]चक्रिन् ! वीर्यवतां वर ! ॥ ८७ ॥

वाचा प्राचाऽपि ते राजन् ! गरिमा शौर्य-वीर्ययोः ।
कितरां वर्ण्यतां शस्यो यशस्यश्चाऽतिमानुषः ॥ ८८ ॥

मनीषितस्य ते सिद्धिं विधित्सामीत्यतोऽग्रगाम् ।
स्रोतस्विनीं समुल्लङ्घ्य समीपं समुपैहि मे ॥ ८९ ॥

एवमुक्तः कृती पार्थः प्रत्युवाच प्रसेदिवान् ।
सद्यः फलिष्यमाणां स्वां वीर - चर्यां विभावयन् ॥ ९० ॥

'तरीतुं भगवन्नेवं कुल्यां कल्लोल - मालिनीम् ।
प्रस्फीतामपि संशीताम् अलम्भूष्णुरहं कथम् ?" ॥ ९१ ॥

इति कोणप आकर्ण्य टङ्कं प्रासारयत् स्वकम् ।
सेतु-[2]सीमन्तिता सद्यः समभूद् येन सा सरित् ॥ ९२ ॥

ततो याऽऽन्ध्यादभूद् दृष्टिः पादाग्रेऽपि न गत्वरी ।
भूभर्त्तुः सा तदा जाता तटिन्याः पार-दृश्वरी ॥ ९३ ॥

[3]केतुं काङ्क्षित - सिद्धेस्तं सेतुं दृष्ट्वा महीभृताम् ।
चूडामणीयमानोऽसौ क्षुरिकां द्राग् व्यकोशयत् ॥ ९४ ॥

उद्वेल - कौतुकस्तं प्राक् प्रवीरः सोऽकुतोभयः ।
[4]जालमालोकयत् पश्चाच्छुरिकामुद्दतीनमत् ॥ ९५ ॥

तयोच्छिद्य च तट्टङ्कं सोपानत्वं निनाय सः ।
तेन तां तटिनीं तीर्त्वा तथा भूतमुपागमत् ॥ ९६ ॥

---

१. चक्रवर्तिन् ! ।
२. विभक्ता ।
३. चिह्नम् ।
४. मायाम् ।

प्रतापं प्रतमां पार्थ - प्रवरस्य प्रकाशयत् ।
अधुना तद् [1]धुनी - स्थानं 'खुद्बले' - त्यभिधीयते ।। ९७ ।।

महीपं तं समीपस्थं पुर - निर्माण - लालसम् ।
क्षेत्रं निर्दिश्य लग्नं च भूतमन्तर्दधे ततः ।। ९८ ।।

येनाऽऽपगा - रोधसि रौद्र - रूपे
हा ! रे ! स्व - लक्ष्याय घनान्धकारे ।
भ्रान्तं नितान्तं श्रमिणाऽऽनिशान्तं
[2]चक्री स जातः फलित – प्रयासः ।। ९९ ।।

मलीमसी साध्वस - दारुणाऽऽद्यौ,
हृद्दारणी श्यामलिमाविला द्यौः ।
सुचारुणा राग - विलेपनेन,
प्रसन्न - कान्त्या सह साऽरुणाऽभूत् ।। १०० ।।

इति श्री - वसन्तराम - पाराशर - तनुजनुषा, कविरत्नादि - विविध-विरुदभाजा, डॉ० श्यामदेव - शास्त्रिणा - पाराशरेण प्रणीते 'त्रिवेणी' इत्यभिख्ये महाकाव्ये 'प्रवर - वीरचर्या - वर्णनम्' इत्याख्यः सप्तविंशः सर्गः पर्यवसितः ।।



---

१. धुनी=नदी ।
२. चक्री=चक्रवाकः ; चक्रवर्ती राजा ।

# अष्टाविंशः सर्गः

पूज्यः पाणौ पुटीकृत्य पुरस्तात् परमः प्रभुः।
लोकोपक्रम - संहारा यस्य लीलायितं मतम् ॥ १ ॥

एवमावेदितस्तेन भूतेन वा
देव - दूतेन वा चक्रवर्ती निशि।
बोधितस् सन् परेद्युश्च नाथः स्वयं
[1]चेटकेनाऽथवाऽऽखेटकेनाऽथवा ॥ २ ॥

ऐक्षताऽऽरात् स 'शारीटक'-ग्रामकाच्-
चूर्ण - रेखाङ्कितं सूत्र - पातं स्फुटम्।
शारिकायाश्च यक्षस्य यत्राऽभवत्
पूर्वमेव स्थितं सुन्दरं मन्दिरम् ॥ ३ ॥

स्वेन नाम्ना स निर्मापणात् प्राक् पुरः
ईश्वरस्य प्रतिष्ठां चिकीर्षुः शुभाम्।
[2]काकतालीयवद् वैष्णवं विग्रहं
संददर्श स्वतः सम्प्रजातं [3]ततः ॥ ४ ॥

रक्षसा तेन निर्दिष्टमिष्टं शुभं
लग्नमाजानतो [4]वास्तु - विद्याविदः।
ख्यापितोऽभूज् 'जया'ऽऽख्यस्य नाम्ना तु स
न स्व-नाम्ना गुण-ग्राहिणा भूभुजा ॥ ५ ॥

तस्य भक्त्या च शक्त्यात्मनस् स्फीतया
प्राक् प्रतीच्याननो 'भीम'-नाम्ना श्रुतः।
पत्तनस्याऽभिमुख्याय विघ्नान्तको
हन्त! पूर्वाननत्वं प्रपेदे स्वयम् ॥ ६ ॥

---

१. दासेन।
२. सहसा।
३. तत्र।
४. स्थपतेः।

लाञ्छिताः 'श्री'-ति शब्देन [1]नामाऽवधौ
वाञ्छिताऽर्थ-प्रदाः कल्प-वल्ल्यो यथा ।
[2]धावकाः स्तावकानां पुराणांऽहसाम्
पावकाश्चैव 'सद्भावश्री'-त्यादिकाः ॥ ७ ॥

मूर्त्तयः पञ्चशीलस्य पञ्चामृतं
स्वैरुदस्तैः प्रहस्तैः किरन्त्योऽभितः ।
पञ्च-भूतात्मिका वाऽपि पञ्चाग्नयः
पञ्च तेनाऽथ देव्यः प्रतिष्ठापिताः ॥ ८ ॥

तत्र पारे 'वितस्ता' - ऽऽपगायाः परे
जग्मुषां नागराणां हिताशंसया ।
सोऽथ निर्मापयामास सूक्ष्मेक्षिको-
ऽदृष्ट-पूर्वं तथा पोत - सेतुं पृथुम् ॥ ९ ॥

भूभुजो मातुलेनाऽस्य निर्मापितस्
स्वेन नाम्ना विहारो 'जयेन्द्रा'ऽभिधः ।
निष्ठया तेन तत्र प्रतिष्ठापिता
सा 'बृहद्-बुद्ध'-मूर्त्तिर् विशाला तथा ॥ १० ॥

मन्त्रि-मुख्योऽस्य 'मोराक'-नामा महद्
मन्दिरं निर्ममे भूतले [3]निस्तुलम् ।
शौर्य-शाली च शालीन-शीलोऽपि यस्
'सिंहला'दीनशात् नीतिविद्या-वशात् ॥ ११ ॥

गोष्पदीकृत्य विष्वक् [4]तरीपं तथा
द्वीप - सङ्घेऽसमीपान्तरीपेषु च ।
आनृशंस्येन [5]शंस्येन साकं प्रभोः
तेन तेने महीपस्य तद् गौरवम् ॥ १२ ॥

विश्वकर्मैकतस् सीम्नि तत्राऽन्यतो
वर्धनस्वाम्यभूद् विघ्न - विध्वंसनः ।
येन काल - त्रयेऽप्यत्र ताप-त्रयी
दैन्य-हैन्यादि-मूला न चोज्जृम्भताम् ॥ १३ ॥

---

१. नामान्ते । २. प्रक्षालकाः । ३. निरुपमम् ।
४. सिन्धुम् । ५. [illegible] ।

सार्थवाहैः समृद्धैस् तथा वाणिजैः
सप्त - भूमानि च द्वित्र - भूमानि च ।
तत्र सौधानि मुख्यानि सुख्यानि च
श्रेणि - बद्धान्यरच्यन्त सद्मान्यपि ॥ १४ ॥

[१]तुल्य - कुल्याऽधिवासाय मध्येपुरि
धर्म - साम्राज्य - नेता विजेता भुवः ।
[२]काशमानान्यनन्यैः कला - कौशलैः
कल्पयामास रम्याणि हर्म्याणि सः ॥ १५ ॥

मध्य - देशे समेषां तथैषां कृतं
[३]तारलं चारिमाणं दधानं परम् ।
राजराजस्य सौधं विरेजे हसद्
ऐन्दवं मण्डलं तारकैरावृतम् ॥ १६ ॥

वर्तुलं वर्त्म तत्पत्तनान्ते कृतम्
[४]पूल - वत् संबबन्धैकसूत्रे जनान् ।
ऐकमत्येन तस्थुः सकुल्या यथा
येन तद्वासिनो भिन्न - वर्णा अपि ॥ १७ ॥

आपणान्तेषु [५]शृङ्गाटकैः सन्ततैः
सा बभासे चतुष्पट्ट - चित्रैरिव ।
स्वस्तिकी - कृत्य किंवाऽन्तरङ्गं पुरी
स्वस्ति सार्वत्रिकं सर्वदैवैहत ॥ १८ ॥

ते सुधौता निकेताः सुधाभिर् ध्रुवं
स्थास्नु - चन्द्रातपोर्व्वांशुक - प्रावृताः ।
[६]वैजयन्तं हसन्तोऽथवा[७]ऽभिख्यया-
ऽख्यापयन् पौर - सम्पत्सुखोद्दामताम् । १९ ॥

---

१. स्ववंशजनिवासाय ।
२. द्योतमानानि ।
३. हार-मध्य-मणि-तुल्यमित्यर्थं ।
४. गुच्छवत् ।
५. चतुष्पथैः ।
६. इन्द्रभवनम् ।
७. शोभया ।

सौध-मुख्या बभुः केऽपि चाऽभ्रंलिहा
नातिदूरे हिमाद्रेर् यथा सोदराः ।
ये गवाक्षाऽऽस्य - वातोर्मि - हुङ्कारिण
आह्वयन्तोच्चता-स्पर्धिनोऽन्यान् गृहान् । २० ॥

व्योम - चूडास्पृशोऽप्युच्च - [1]शाला इह
[2]हैम-मेघच्छलात् कम्बलैः पाण्डुरैः ।
सर्वतस् संवृताङ्गा द्रढिम्ना स्थिताः
शीतभीता बभूवुर न कम्पं दधुः ॥ २१ ॥

राजशाला विशालाऽभितो वर्तुला
वाटिकां धारयन्ती लसच्छाद्वलाम् ।
न्यक्करोति स्म रूपाऽतिर्भूमिं गतां
शाटिकां कीर-कान्तिं दधानां वधूम् ॥ २२ ॥

कारुभिः कल्पितैः प्रस्तरैश् चारुभिस्
तां ध्रुवं विश्वकर्मात्मभिः कल्पिताम् ।
चित्रका नाल्प - सङ्कल्प - वैज्ञानिकाः
शिल्पिनस् सूत्रपातैश्च [3]संचस्करुः ॥ २३ ॥

[4]राजधानी निधानं जगत्सम्पदाम्
आ समुद्राद् धरा - रक्षणेऽलन्तमा ।
विश्व - बाधा विहन्तुं कुठारं दधे
कैतवात् केतनस्योर्जितस्याऽनिशम् ॥ २४ ॥

राजसौधेन हृच्चेतना - शालिनी
नैक - कुल्या - शिरा - स्फूर्ति - सज्जीवना ।
स्फार - वैतस्त - धारोल्लसन् - मेखला
पूरभूत् सा धरा - शायिका नायिका ॥ २५ ॥

दान - शौण्डैर् हि रैराड्भिरावेष्टिता
साऽलकायाः सखीभूयमाप्ता पुरी ।
लक्षिताऽलक्षिता [5]धूलिकायां बभौ
शुभ्र - कौशोत्तरीया वधूटी नवा ॥ २६ ॥

---

१. गृहाः ; प्राचीराः ; द्रुमाः । २. हैमाः=हिमसम्बन्धिनः ।
३. अलंचक्रुः । ४. राजभवनम् । ५. कुज्झटिकायाम् ।

भूसुरैर् भासमानाऽमरी सा पुरी
विश्व - पूः - पट्टराज्ञी - पदे निष्ठिता।
[1]वीजनैर् वोत्तरङ्गैः सदाऽवीज्यत
देवदारु - द्रु - मित्रीकृतैर् मारुतैः ॥ २७ ॥

स्पृष्ट-तारैश् [2]चिनारैः स्व-शाखा-करैर्
दिक्षु रोरुध्यमानोऽपि लोलोऽनिलः।
वासितात्मा सिषेवे विलासी बलात्
तां पुरीं [3]वासतेय्यां तथा वासरे॥ २८ ॥

राजमार्गाश्च रथ्याश्च वीथ्यस्तथा
राजधान्या धमन्यो यथाऽस्या बभुः।
वीचयो वेग - वातस्य सम्पिण्डिता
यत्र चोद्दीपयन्ति स्म माराऽनलम्॥ २९ ॥

सर्वं - गेहेषु सौस्थित्य - हेतोरिह
प्रीति - गीताऽमृतानीव सस्यन्दिरे।
आश्रिता बन्धुभूयं ध्रुवं नागराः
मित्रतां तेनिरे येन पारस्परीम्॥ ३० ॥

कुल्या नगर्याममृतौघ - तुल्याः
प्रत्येकमागारमभि - स्रवन्त्यः।
तापं व्यपोहन्त्यनिशं सतापं
स्वर्गोत्सुको येन न पौर - वर्गः॥ ३१ ॥

विभासमाना विबुधैः प्रसन्नैर्
जिताऽप्सरोभिश्च वराङ्गनाभिः।
मिषाद् विमानाग्रग - [4]धूमिकाया
न पूरहासीदमरावतीं सा ? ॥ ३२ ॥

सा [5]सर्वतोभद्रमुखैश्च नन्द्या—
वर्तैश्च वाताऽऽतप - रम्य - हर्म्यैः
सज्जीकृता स्वस्तिक - वर्धमानैर्
न्यमन्त्रयत् - शं ध्वज - हस्त - कम्पैः॥ ३३ ॥

---

१. व्यजनैः। २. तदाख्यैः वृक्षैः। ३. निशि।
४. कुम्भिकायाः। ५. सर्वतोभद्रादयो हर्म्यभेदाः।

[1]यम - क्षयं नित्यमिह स्मरन्ती
नाऽविप्रवृत्ता जनता बभूव।
यमक्षयं सा विभवं बिभेद
तद् धर्म - कर्मैव तदीयमासीत् ॥ ३४ ॥

स्वरैर् द्रुतैः क्वापि विलम्बितैश्च
मध्यैश्च तारैर् भवनेषु मन्द्रैः।
मोदाय मिश्रीकृत - वेणु - वीणाः
[2]जोषा जगुर् हन्त! यशांसि यस्याः ॥ ३५ ॥

काञ्ची-क्वणा नूपुर - निस्वनाश्च
श्रव्या निशीथेष्विह दत्तकर्णैः।
उद्घोषयन्ति स्म गृहेषु नूनम्
उच्छृङ्खलत्वं नव - यौवनानाम् ॥ ३६ ॥

सा पूर् निशीथेऽतिगतेऽबलाभिर्
मौक्यं भजन्नूपुर - मेखलीभिः।
प्रसुप्त - हंस - भ्रमरावलीभिस्
सरोजिनीभिस् सरसीव रेजे ॥ ३७ ॥

पुरस्य सीमासु खमुल्लिखन्त
उद्ग्रीविणः श्रेणिषु तस्थिवांसः।
वातं विचिक्षुं प्रतिरुध्य [3]शाला
आस्वादयन् नागर - कौतुकानि ॥ ३८ ॥

तत्र पानं सतानं सगानं बभौ
क्वापि लास्यं सहास्यं क्वचित् कौतुकम्।
क्वापि लज्जा नवानां वधूनां रहः
क्वापि सज्जा धवानां च मादी [4]महः ॥ ३९ ॥

पौर - वर्गः [5]क्षमा - वत् क्षमावानभूत्
तस्य तथ्यं च पथ्यं च कथ्यं सदा।
सच्चरित्रोऽत्र कौलीं श्रियं वर्धयन्
कोऽपि नाऽनीप्सनीयं परैरातनोत् ॥ ४० ॥

---

१. यमगृहम्, मृत्युमित्यर्थः। २. स्त्रियः। ३. तरवः।
४. उत्सवः। ५. भू-वत्।

उच्छास्त्र - वर्तीह न कश्चिदासीद्
नाऽनार्य - जुष्टे पथि कोऽप्यचालीत् ।
लज्जावशादात्मन एव चाऽभूद्
नाऽपेयिवानत्र च लोक - वृत्तात् ॥ ४१ ॥

प्रसाद - सौम्यैर् वदनैः सदैव
स्मेरैः सरोजानि जना जयन्तः ।
निन्युः परीतां सरसी - समूहैः
पुरीमपीमां सरसीत्वमेव ॥ ४२ ॥

सरोज - सच्छाय - शुभाननाभिश्
चेतो हरन्ती वर - वर्णिनीभिः ।
पुरी विजेतुं धरणीं स्मरेण
स्यात् साऽस्त्र-शालेव विनिर्मिताऽभूत् ॥ ४३ ॥

पोप्लूयमानाः सरसीष्वजस्रं
दोधूयमाना मरुदूर्मिभिश्च ।
मन्ये [1]तरण्योऽपि च तीर - बद्धा
आनर्तिषुर् वीक्ष्य पुरस्य कान्तिम् ॥ ४४ ॥

[2]अनीदृशः शोभयिता धरायाम्
वर्वर्ति मध्येपुरि केलि - शैलः ।
दृश्या यतोऽनन्त - दिगन्त - शान्ता
[3]हैमी प्रभा [4]मन्थज - कूट - कान्ता ॥ ४५ ॥

नगो न चाऽसौ नगराऽन्तराले
किं तर्हि काश्मीर - धराऽधिदेव्या ।
सा तर्जनी सन्ततमुच्छ्रिताऽत्र
दुष्कर्मणो नागर - वारणार्थम् ॥ ४६ ॥

देवालयापावितमेनमद्रिम्
आरोहिणस् साकमभीष्ट - सिद्ध्या ।
पदे पदे संनिधिमभ्युपेतं
निर्वाण - सोपानमिवाऽऽश्रयन्ते ॥ ४७ ॥

---

१. नौकाः । २. अनुपमः ।
३. हिम-सम्बन्धिनी । ४. मन्थजकूटम्=नवनीतसञ्चयः ।

रोह - श्रमोल्लासि - भुजान्तरा आः !
नितम्बिनीर् दम्भ - दृशेक्षमाणाः ।
निषादिनो मार्ग - शिलासु तत्र
तारुण्य - मत्ताः क्षपयन्ति यामान् ॥ ४८ ॥

देशान्तरेभ्योऽत्र समाहृतानि
क्रीतानि नीतानि च विक्रयाय ।
पण्यान्यगण्यानि समन्ततोऽभुर्
हट्टेषु घट्टेषु च विस्तृतानि ॥ ४९ ॥

क्वचित् [1]प्रसेवा परिपूर्ण - सेवा
अक्षोट - कोषाः कृत - मन्दघोषाः ।
[2]द्रोण्यः क्वचिद् देशज - दाडिमानां
[3]गोण्यः क्वचिच् छोषित-सत्फलानाम् ॥ ५० ॥

[4]कूपाः कुतश्चित् [5]कुसुमासवानां
स्तूपाः सवासोत्तम - तण्डुलानाम् ।
कस्तूरिका - कुङ्कुम - [6]वासनानि
कुत्रापि चौर्णानि कुथासनानि ॥ ५१ ॥

दृष्टान्यपि स्वेदमुपानयन्ति
क्वाप्युत्तमौर्णानि च कम्बलानि ।
स्पर्शैक - वेद्यानि च कौशिकानि
प्रकाश - भेद्यानि वराऽम्बराणि ॥ ५२ ॥

मध्येपुरं [7]वैकटिकापणेषु
नीलोपलाऽऽलोक - विभासितेषु ।
वामा विशन्त्यः प्रिय - रत्न - भूषाः
श्यामाऽभिरामाऽऽननतामुपेयुः ॥ ५३ ॥

---

१. स्यूतकाः, हिं० बोरियां ।
२. पेटिकाः ।
३. शाणपुटाः ।
४. कुतुपाः ।
५. मधूनाम् ।
६. संपुटकाः; हिं० डिब्बे ।
७. रत्नपरीक्षक-विपणिषु, हिं० जौहरी ।

स्थानेऽत्र सम्पत् - सुख - सन्निधाने
समा - सहस्रं न जिजीविषेत् कः ।
को नीरसो मुग्ध - मतिर् वराकस्
स्वप्नेषु चिन्तास्वपि वा मुमूर्षेत् ॥ ५४ ॥

नभः - स्पृशामुत्तम - मन्दिराणां
निषेदिवासोऽत्र शिरोगृहेषु ।
पौरा जगत्सौभग - सार - चौरास्
[1]तौल्यं नितान्तं द्युसदां वितेनुः ॥ ५५ ॥

महीसुरान् संवसतोऽभिवीक्ष्य
सौभाग्य - साधुत्वजुषो व्यभाद् यत् ।
भूयोऽनुभूयाऽत्र सुखं सुरा वै
नाकादनेके निभृतं निविष्टाः ॥ ५६ ॥

अट्ट - स्थलीभ्यो नगराङ्गना - गणैः
कपोल - पट्टे मुकुराऽमले मिथः ।
निर्वर्ण्यते ऽसौ 'नगराज' - विश्रुतेर्
[2]गौरी-गुरोर् वै गरिमा च गौरिमा ॥ ५७ ॥

उच्चैस्तमेष्वत्र शिरो - गृहेषु
नैदाघ - राकासु निरीक्ष्य यूनः ।
खे पार्श्वगास् [3]त्रैदिशिकाऽङ्गनास्ताः
कण्डूयनं स्वोरु - युगेषु चक्रुः ॥ ५८ ॥

सदैव सर्वर्तु - समृद्धिमद्भिर्
महीरुहैः पुष्पफलाऽवनम्रैः ।
समाचिता कस्य पुरी न चक्रे
स्मेरं मुखं सा सफलं जनुश्च ॥ ५९ ॥

इतस्ततोऽभ्येत्य मिथो मिलन्तो
मूर्त्ताः प्रभोः कारुणिकस्य भावाः ।
कुल्या - प्रवाहा इह नागराणां
तृषां च तापं शमयांबभूवुः ॥ ६० ॥

---

१. तुलनाम् । २. हिमालयस्य । ३. अप्सरसः ।

देशान्तरे स्वेदमलं सखेदं
कालो निदाघो जनयन्निहैत्य ।
पटीमिवोत्पुष्प - वर्णीं दधानो
ना[1]ऽवीवदत् कस्य स दन्त-वीणाम् ॥ ६१ ॥

वैतस्त - वारीणि करैर् वराको
भानुः परामृश्य जडत्वमाप्तः ।
निगूहनायाश्रित - शैल - सानुः
भवेत् तपर्त्ताविह शीत - भानुः ॥ ६२ ॥

प्रस्पर्धिभिस् तत्र मिथो महीपैर्
देवालयेभ्यो यददायि वित्तम् ।
ते तेन भेदेऽपि हि देवतानां
सर्वेऽपि पद्मालयतामुपाऽगुः ॥ ६३ ॥

साद्गुण्य - पुण्यैः परिपूरिताऽभवत्
सा रत्न - भूतैः पुरुषैर् यथा पुरी ।
सौवर्ण - सौन्दर्य - समृद्धिभिस् तथा
नितम्बिनीभिर् गुणितात्म - गौरवा ॥ ६४ ॥

अलक्तकाऽङ्कौ नव - पल्लवाभौ
काचित् किशोरीह करौ दधाना ।
को वेद हा ! सा करसाद् - विधाय
कियन्त्यमर्दीद् हृदयानि पूर्वम् ॥ ६५ ॥

सिन्दूर - सौन्दर्य - सखौ कपोलौ
करौ च केचिद् वनिते अधत्ताम् ।
मिथोऽरुणिम्नेव विलिप्त - वक्त्रे
स्याल्लीलया खेलित - होलिके ते ॥ ६६ ॥

लावण्य - लक्ष्म्या रमणाय नूनं
लीलाऽचलाभ्यां रुचिरा कुचाभ्याम् ।
वपुष्यशेषे ऽत्र वधूर् बभार
काचिद विधेः कौशल - कौतुकानि ॥ ६७ ॥

---

१. भूयोऽस्वादयत् ।

मौग्ध्येन तत्रा[1]ऽऽजननाद् वृतायाः
पराग - सौरभ्य - परिष्कृतायाः ।
मुखाम्बुजाते सुम - लाविकायास्
तिलेन तावद् मधुपायितं वै ॥ ६८ ॥

आसीत् तया यौवनमर्थवच्च
दृष्टिः परेषां सफला तयैव ।
समासतोऽसावभवन्न कस्य
बहिश्चरं जीवनमेव मूर्त्तम् ॥ ६९ ॥

लीला - गतेऽस्याश् चलनावुरोजौ
धैर्यं दलन्तौ प्रसभं समेषाम् ।
मन्ये समीनं मिलनाय यूनां
हृद्भिर् मुहुश्चक्रतुरिङ्गितानि ॥ ७० ॥

पार्श्वाद् गतायाः प्रलयैक - मूर्त्तेस्
तस्या गुणान् वर्णयितुं त एव ।
तस्थुः ससंज्ञा [2]विशिखासु दीना
ये वै [3]तृतीयां प्रकृतिं प्रपन्नाः ॥ ७१ ॥

उत्क्रम्य कौमार - विशेष - सीमां
सद्यः प्रविष्टा वय एषणीयम् ।
नाप्तुं सुवर्णाऽवयवां क ऐच्छत्
लावण्य - तास्कर्य - रतः कुमारः ॥ ७२ ॥

नीहारसार - स्फटिकेन नूनं
धात्रा सयत्नं घटिताऽङ्गकायाः ।
नीलाऽलकाली वदनाम्बुजेऽस्या
मिलिन्द - माला - ललिता ललम्बे ॥ ७३ ॥

श्रोतुः सहासा दशनांशुभिर् द्राक्[4]
साऽऽकर्षयन्ती हृदयं प्रसह्य ।
कञ्जारुणे पाणितले वहन्ती
किं रागिणो हस्तगतांश्चकार ? ॥ ७४ ॥

---

१. आ जन्मतः ।
२. राजमार्गे ।
३. तृतीयां प्रकृतिम् = नपुंसकत्वम् ।
४. झटिति ।

ज्वालां चरिष्णुं वनपाल - बालां
स्पृष्ट्वा दृशैवाऽऽकुलिताः कुमाराः ।
दीनाः कुकूलानल - पच्यमाना
धूपायमाना द्युनिशं च तस्थुः ।। ७५ ।।

चन्द्र – प्रभा - [1]कञ्चुकिताऽङ्ग - यष्टिर्
बाला . वरेण्या वणिजो विरेजे ।
तस्यां विलासाऽलस - वीक्षितायां
न्यासी - कृतं केन मनो न यूना ।। ७६ ।।

सौरूप्य - सम्पत्तिमनन्य - लभ्यां
प्राप्तां परां कोटिमसौ दधाना ।
पान्थान् परित्यक्त - पुरः - प्रयाणान्
अक्रीत - दासांस्तरुणांश्च चक्रे ।। ७७ ।।

प्रेङ्खाधिरूढेन्दुकलाऽमल - श्रीः
सुधोपदिग्धेव वधूवराऽन्न ।
दोदुल्यमाना पुरतश्च पश्चात्
प्रेङ्खोलयामास जगत् सहैव ।। ७८ ।।

ननर्त काचित् तरुणीह तस्यास्
ततोऽपि भूयोऽनटतामरोजौ ।
स्तब्धेक्षणानां व्यधुरन्तरेव
यूनां मनांस्युद्धत - ताण्डवं च ।। ७९ ।।

लयाऽनुकूलं विहिता[2]ऽङ्गहारा
भ्रुवौ सलीलं परिनर्तयन्ती ।
जिगीषयाऽन्या जगतो ललास
स्मरास्त्र - विद्यामिव शिक्षमाणा ।। ८० ।।

सा [3]पाटलात्मेव कपोल - कान्त्या
विडम्बयन्ती तरुणाऽरुणाभाम् ।
स्वैश् [4]चाकचक्यैस् तरुणाक्षि - पद्मा-
न्युद्घाटयामास [5]कुडी प्रसह्य ।। ८१ ।।

---

१. कञ्चुकिता=आवेष्टिता । २. अङ्गहारः=अङ्ग-विक्षेपः ।
३. पाटला=शतपत्री ; जपा । ४. उज्ज्वलताभिः । ५. बाला ।

लेह्या दृशा मादकता मदस्य
ज्योत्स्नाऽधिदेवी भुवि तस्थुषी वा ।
या [1]मान्मथी मूर्त्तिमती बभूव
मन्ये मनो - मोहन - मन्त्रशक्तिः ॥ ८२ ॥

[2]ऐन्दवं मण्डल चूर्णयित्वा ध्रुवं
कल्पिताङ्गीं विधाता चिराद् यत्नतः ।
तां करैरैन्दवैरेव कूर्ची - कृतैर्
मार्जयामास लब्ध - क्षणोऽसौ शनैः ॥ ८३ ॥

रम्भैव मूर्त्यन्तरमाश्रिताऽत्र
काचिद् बभौ काम - कलत्र - दोला ।
तपस्विनां या विवशाऽङ्गनानाम्
उच्चैश्च नीचैश्च चकार चेतः ॥ ८४ ॥

वेलेव मैरेय - मदाम्बुराशेर्
ज्वालोल्लसन्ती नव - यौवनस्य ।
पाञ्चालिका काऽपि विलोभनीया
रेजेऽपरा [3]दर्पक - दूतिकैव ॥ ८५ ॥

स्वरङ्गना - सौभग - सार - सर्व -
स्वं सङ्कलय्येव कृताङ्ग - यष्टिः ।
चान्द्री कला काऽपि चला[4]ऽचलायां
कं न स्वसात्कर्तुमलन्तमासीत् ॥ ८६ ॥

कापीह कन्यात्वमपास्य पश्चात्
शालीनता - मुग्धिम - सम्पदासीत् ।
प्रद्यैव या ऽऽद्यां कुसुमर्द्धिमाप्ता
रराज चाम्पेय - लता चरिष्णुः ॥ ८७ ॥

विलुण्ठिताऽऽराम - रमेव काचिद्
हैमी सचेष्टा छुरिकेति[5]वित्ता ।
भ्राः ! जगमुषी दृक्पथमन्यथाऽपि
मर्माणि यूनां व्रणयाम्बभूव ॥ ८८ ॥

---

१. काम-सम्बन्धिनी ।
२. चान्द्रम् ।
३. दर्पकः = कामः ।
४. भुवि ।
५. विदिता ।

एकाऽमृतांशु - द्युतिना मुखेन
बाधासमानाऽङ्गलता किशोरी ।
किं वात्मनैवोपमितिं भजन्त्य-
प्यबूबुधद् हृत्कुमुदानि यूनाम् ॥ ८९ ॥

हुङ्कृत्य सद्यः स्फुट - यौवन - श्रीः
काचिच्चला काञ्चन - शालभञ्जी ।
रोमाञ्च - [1]सन्नाह - भृतामपीह
मर्माणि यूनामभिनत् कटाक्षैः ॥ ९० ॥

अनञ्जिते चाऽप्यसिते दधाना
विलोचने काचन काञ्चनाङ्गी ।
सुधाऽधिवासैः कलवाग् - विलासैर्
अपीपठन्मोहन - मन्त्रमेव ॥ ९१ ॥

[2]प्रौढिं प्रपन्ना रति - रुच्य - रूपा
वधूर् [3]वरारोह - विलोभनीया ।
दृष्टा क्षणायाऽपि न कस्य साऽभूद्
मनोरथानां मिलन - स्थलीव ॥ ९२ ॥

पुण्यैः पुराणैः प्रचुरैर् असूर्यं-
पश्याऽद्य सद्योऽक्षि - पथं प्रपन्ना ।
लावण्य - कल्पद्रुम - कन्दलीव
निःश्वास-शेषान् न चकार कास्कान् ॥ ९३ ॥

लसत्प्रबालामल - पाणिपादा
स्मेरानना कौसुम - मण्डनैका ।
वासन्तिका वात - धुतेव वल्ली
कूले सरस्या विललास तन्वी ॥ ९४ ॥

[4]उत्पङ्कजेऽस्वाऽन्यतमा प्रतीरे
समेत - सौन्दर्यभरानताङ्गी ।
सद्योऽद्य संत्यज्य सरोज - राजिं
साक्षात् स्थिता श्रीरुपमाऽतिगाऽभात् ॥ ९५ ॥

---

१. संनाहः=कवचः । २. परिपूर्णतां, परिपक्वताम् ।
३. वरारोहः=प्रशस्तनितम्बः । ४. [illegible]कमले ।

[1]अभ्युक्ष्य कर्पूरक - पांसु - पूरं
[2]धौतेव काऽपीन्दु - मरीचि - कूर्चैः ।
साक्षात् सखी कैरव - कुञ्ज - कान्तेः
क्षीराऽब्ध्यजाताऽपि रमैव रेजे ॥ ९६ ॥

पाथोजपद्मां परिमुष्य पश्चात्
प्राप्ताऽनुतीरं पयसः सरस्याः ।
सा पाणि - पादेन तथाऽऽननेन
रेजेतरां विद्रुम - पाटलेन ॥ ९७ ॥

सिक्तेन सक्तेन च देह - यष्ट्या
तन्वंशुकेनाऽप्यु[3]पगुह्यमाना ।
जग्राह कान्ति किमु साऽब्ज - षण्डात्
तद् वाऽपि तस्या मधु - मोह - मूर्तेः ॥ ९८ ॥

दिगम्बराभामवलोक्य तां च
प्रस्पन्दमानं हृदयं हि यूनाम् ।
नेत्रत्वमाप्तुं बहिरायियासद्
उत्पुप्लुवे तीव्रतयाऽभिकण्ठम् ॥ ९९ ॥

घन - स्तनी वृत्त - सुसंहतोरुः
जपा - सुम - स्पर्धि - कपोल - कूपा ।
मनोरथाऽश्वैश् चपला किशोरी
स्वप्नेऽप्युपानीयत दर्शकैः सा ॥ १०० ॥

प्रत्येकमङ्गेऽपि तदीय - काये
[4]मायेत्यमन्यन्त सचेतसोऽत्र ।
पश्यन् किमप्यङ्गमतः किशोर्यास्
तत्रैव कोऽप्यैक्ष्यत कीलिताक्षः ॥ १०१ ॥

शस्तेन साऽभूद् रचिता सुसिद्ध-
हस्तेन केनाऽप्यपरेण धात्रा ।
तादृश्यतोऽदर्शि न काऽपि बाला
हाला - मदं मुग्ध - दृशा किरन्ती ॥ १०२ ॥

---

१. अवसिच्य; विकीर्य ।
२. Polished.
३. आलिङ्ग्यमाना ।
४. इन्द्रजालम् ।

रोम - रेखाऽदसीया दुकूलान्तराद्
रोचमाना दुरालक्षिता चोदरे ।
दूरतो भूधराभ्यां बहिर् निर्गता
यामुनी काऽपि धारा तनूः प्रत्यभात् ॥ १०३ ॥

नीरे कुमार्याविह नाभि - दघ्ने
मिथो हृदस् सेचन - सम्प्रवृत्ते ।
उद्दाम - माराऽग्नि - शिखाः प्रदीप्ताः
[1]निर्वापयन्त्याविव ते अभूताम् ॥ १०४ ॥

इहाऽधिकूलं सरितोऽपरायाः
कुच - द्वयं कौङ्कुममङ्गनायाः ।
जलेऽचले बिम्बितमूर्मि - रुद्धे
दधे[2]ऽर्थतः कोक - युगस्य लीलाम् ॥ १०५ ॥

नैसर्गिकः पाटलिमा कपोल—
पालीष्ववालोक्यत यौवतानाम् ।
लग्नो बभौ योऽरुणिमा प्रियाणां
ताम्बूल - रोमन्थ - रसस्य नित्यम् ॥ १०६ ॥

वीक्ष्याऽङ्गनाकर्षणमिन्द्रजालं
जनातिगं देश इहोच्च - कूटे ।
कान्त्या लसद् मन्मथजमेव भाति
तर्क्कं प्रदेशेष्वितरेषु शिष्टम् ॥ १०७ ॥

भ्रू - कार्मुकैः काक्ष - शिलीमुखैश्च
सुसज्जिताभिर् वनिताभिराभिः ।
अमोघ - लक्ष्य - व्यधनोत्कटाभिः
पुरं बभौ तत् कटकं स्मरस्य ॥ १०८ ॥

परिस्रवद् - यौवन - [3]कार्म्मणाया
वक्त्रे विजाता वलयोऽपि सूक्ष्माः ।
कृष्टाः सुरम्ये शिशुनाऽत्र चित्रे
रेखा इव स्वादुतरा बभूवुः ॥ १०९ ॥

---

१. शमयन्त्यौ । २. वस्तुतः । ३. कार्म्मणम्=इन्द्रजालम् ।

रसाल - शालस्य नव - प्रवालान्
यद्यापि पश्यन् लसतोऽत्र बालान् ।
स्मरस्य सज्जी - भवतोऽचिरेण
सैन्यानिवाऽऽवन्य - जनोऽनुमेने ॥ ११० ॥

प्रेक्ष्य स्फुटाऽब्जानन - पाणि - पादाः
कौमार - चापल्य - जुषोऽत्र बालाः ।
जिष्णुर् भविष्यत्यपि मार - वीरस्
स्वाऽस्त्राऽऽप्ति - चिन्ता - रहितो बभूव ॥ १११ ॥

सर्वेश्वरस्य प्रवरस्य तावद्
आकृष्यमाणेव गुणैरनन्यैः ।
जय - श्रिया साकमुपागताऽत्र
बभूव भव्या किमु वैभव - श्रीः ॥ ११२ ॥

समुल्लसन्तीं श्रियमत्र विष्णुर्
दृष्ट्वा मुहुर् दिव्य - दृशाऽऽकुलात्मा ।
'श्रीः' साम्प्रतं मेऽस्ति न वेति तिर्यक्
स्वं वाम - पार्श्वं दिवि वीक्षते स्म ॥ ११३ ॥

राष्ट्रस्य सर्वा अपि सम्पदः स्याद्
भूपान्तराभोगमनीहमानाः ।
सन्तप्त - चित्ता इव कुप्रयोगा-
च्छीतां प्रपन्नाः शरण - स्थलीं ताम् ॥ ११४ ॥

स्व - राष्ट्र - कोणान्तगतेऽपि चैवं
स तस्थिवांस्तत्र पुरेऽधिराजः ।
रङ्गे पटीयानिव सूत्र - धारो
न्ययन्त्रयद् भूतल - राज्यतन्त्रम् ॥ ११५ ॥

पेपीयमानोऽथ च देव - मूर्तिर्
उपोषिताभ्यामिव लोचनाभ्याम् ।
संतृप्तयेऽकल्पत स प्रजानां
तद्दर्शनं पारणतां यदापत् ॥ ११६ ॥

संतो धरित्रीमथ शासतोऽस्यं
धर्म्येण मार्गेण शुभङ्करेण ।
गता धृतोत्कर्ष - धुरे पुरेऽस्मिन्
सुखेन षष्टिर् वसतो वसन्ताः ॥ ११७ ॥

अत्रान्तरे शैव - पथाश्रितस्य
[1]प्राज्येऽस्य लङ्कावधि पुण्य - राज्ये ।
मारोऽभवद् हन्त ! कथाऽवशेषो
लोकाश्च विष्वक् शिवमन्वभूवन् ॥ ११८ ॥

न [2]पारदार्यं न किमप्यनार्यं
[3]वार्यं च कार्यं श्रुतिमप्युपागात् ।
लोका विनीताः परलोक - भीताः
जनूंषि चक्रुर् न मलीमसानि ॥ ११९ ॥

अथाऽत्र पूर्वोदितमक्षपादं
श्रीपर्वते पाशुपत - व्रतस्थम् ।
[4]क्षपाकृता मण्डित - मौलिदेशो
ध्याने महेशो निदिदेश किञ्चित् ॥ १२० ॥

वेला - विलम्बं परिवर्जयन् स
तदैव काश्मीरिकमभ्युपेतम् ।
विप्रं 'जयन्ते' - त्यभिधान - भाजं
क्षिप्रं न्ययुङ्क्तेहित - कार्य - सिद्ध्यै ॥ १२१ ॥

"श्रान्तोऽसि जानेऽनघ ! किन्तु वाञ्छा-
पूर्तिर् न तेऽन्यत्र भविष्यतीति ।
तत्रैव गत्वा प्रवरेश्वराय
पत्रं तदेतत् प्रतिदर्श्यतां मे" ॥ १२२ ॥

---

१. विस्तृते इत्यर्थः । २. परस्त्रीसंसर्गः ।
३. निवारणार्हम् । ४. चन्द्रेण ।

संद्यो निगद्येति वितीर्ण - पत्रे
कापालिके [1]वाग्यततां प्रयाते ।
भ्रू - कुञ्चनाद्यैर् [2]विवृताऽनपेक्षो
भूदेव एवं शनकैरवादीत्— ॥ १२३ ॥

"क्रमेण मार्ग - भ्रमण - श्रमेण
[3]तान्तो नितान्तं सुचिरेण साधो ! ।
[4]पृथून् पथो गन्तुमितोऽक्षमोऽहं
क्षमोचितोऽस्मी" - ति स च व्यरंसीत् ॥ १२४ ॥

कापालिनाऽभाणि ततो - "द्विजाते !
स्पृष्टो मया स्नानमिहाऽऽचराऽऽशु" ।
इत्येवमुक्त्वा निकट - स्थिताया-
श्चिक्षेप वाप्याः सलिले तमेनम् ॥ १२५ ॥

एवङ्कृते - ऽचेतनतामितस्य
शिला - शरीरस्य जले निपातात् ।
द्वैधं गताया वदति स्म वाप्या
द्विजात्यनीहामिव बुद्बुदाली ॥ १२६ ॥

ततः स सुप्तोत्थित - सन्निकाश
उन्मुद्रिताक्षो द्विज आकुलात्मा ।
आत्मानमुद्वीक्ष्य [5]दिवोऽविशेषे
काश्मीर - देशे नितरां ननन्द ॥ १२७ ॥

तत्रैव भक्त्याऽर्चन - संरतस्य
शिवालये श्री - प्रवरस्य भर्तुः ।
भृत्यान् स मुक्ताऽपर - राजकृत्यान्
अम्भांसि कुम्भैर् नयतो ददर्श ॥ १२८ ॥

---

१. मौनम् ।
२. प्रकटिताऽनिच्छः ।
३. श्रान्तः ।
४. दूरत्वाद्दीर्घानित्यर्थः ।
५. स्वर्ग-तुल्ये ।

इच्छुः स्वमावेदयितुं द्विजोऽसौ
पश्यन्नदूरेऽपि च वाञ्छितार्थम् ।
आनीयमाने निकषा नरेशम्
पत्रं न्यधात् तत् त्वरयोदपात्रे ॥ १२९ ॥

संस्नापयन् क्षालित - लोकपङ्कम्
महेश्वरं श्रीप्रवरो महीशः ।
पत्रं पुरस्तात् पतितं स कुम्भाद्
आदाय सुस्पष्टमवाचयद् यत्— ॥ १३० ॥

"कृत्यं कृतं दिक्षु च नीति - नृत्यं
नो शिष्टमिष्टं, विहितं हितं यत् ।
पापस्य सारोऽपगतः स मारो
प्रीताः प्रजाः पुण्य - पथेषु नीताः ॥ १३१ ॥

पर्याप्तमाप्तं सुकृतं सुखं च
[1]निरन्ध्रितास् ते ककुभो यशोभिः ।
हेयं जगत्, किन्त्विह ते विधेयं
तद् याहि शैवं नरनाथ ! लोकम् ॥ १३२ ॥

वृत्तं वसु क्वाऽप्यसुखं न दृष्टं
जराऽभ्युपेताऽऽर्त्ति - भरैः समेता ।
[2]अह्नाय तस्मात् प्रविहाय सर्वं
सुख - स्वरूपं समुपैहि [3]सर्वम्" ॥ १३३ ॥

इत्येवमासाद्य कृपा - निकेतः
प्रस्थान - सङ्केतमसौ [4]क्षितिक्षित् ।
उपान्तमानीत[5]मरं जयन्त-
मरञ्जयत् तं वसुभिर् वितीर्णैः ॥ १३४ ॥

---

१. परिपूर्णाः । २. सपदि ।
३. शिवम् । ४. भूपः ।
५. अरम् = शीघ्रम् ।

अहो ! ततः श्रीप्रवरः प्रतापी
पुण्येषु सौभाग्य - कटाक्षितेषु ।
[1]प्रेष्येषु पश्यत्सु पुरश्च पश्चाद्
भित्त्वा[2]ऽऽश्मनं धाम दिवं जगाम ॥ १३५ ॥

ज्वाला विशाला सहसा द्रवन्ती
तडिद् भुवो वा गगनं विशन्ती ।
यद्वेन्द्रचापस्य हि काऽप्यकाण्डे
ऽलोकि लोकैर् द्युतिरुल्लसन्ती ॥ १३६ ॥

इत्थं स भद्रङ्करणो धरण्याः
भुक्त्वाऽपि भूभृद् भुवि भूरि-भोगान् ।
स - भौतिकाङ्गो भगवद् - भवस्य
सालोक्यमापद् भुवनस्य भर्त्ता ॥ १३७ ॥

[3]वित्तं च तुष्टात् प्रवरात् प्रभूतं
वित्तं ततो विप्र - वरो जयन्तः ।
कृत्येषु नित्यं व्यययन् शुभेषु
स्वस्मै सुगं स्वर्ग - पथं व्यधत्त ॥ १३८ ॥

दीनाऽबल - प्रार्थक - पारिजाते
हाऽस्तं प्रयाते प्रवरे प्रवीरे ।
साधुत्व - सज्जाऽपि च सत्र - सम्पद्
निर्वाणमापद् [4]जगदूर्जिनाऽर्चिः ॥ १३९ ॥

अहो ! विचित्रैरथ पुण्य - मित्रैः
पवित्रयित्वा स धरां चरित्रैः ।
उन्निद्रयन्नर्क इवाऽत्र लोकान्
देदीप्यतेऽद्याऽपि पथोपदेष्टा ॥ १४० ॥

१. भृत्येषु । २. प्रस्तरनिर्मितम् । ३. लब्धम् ।
४. संसारस्य शक्तिशालिनी महती ज्वाला (द्युतिः) ।

अद्याऽपि तत् 'श्रीनगरे' विकीर्णं
जीर्णं च शीर्णं भवनं सरन्ध्रम् ।
मन्ये स्वमुद्घाट्य मुखं तदीयं
विस्तीर्णमाख्याति महाप्रयाणम् ॥ १४१ ॥

यद् बाष्प - रूपं दधदम्बुराशेर्
नीरं वियुक्तं जगतो हिताय ।
नभो - नगादौ च नदीष्वचारीत्
तदेत्य भूयोऽपि ततो विलिल्ये ॥ १४२ ॥

पूर्वं मूर्ध्नि गतेन येन महसा दग्धा दुराशा द्विषां
कृत्ता दृष्टि-निरोधिनी खर-करैर् मूलात् तमस्सन्ततिः ।
जाड्यं दूरमपोहितं तदहितं यस्य प्रतापैर् दिशां
शोकाऽब्धौ भुवनं निपात्य विलयं भेजे स भास्वानपि ॥ १४३ ॥

इति 'श्रीवसन्तराम'-पाराशर-तनुजनुषा, 'प्रसन्ना-देवी'-गर्भजातेन, 'सुशीला'-स्वाम्य-सौभाग्यजुषा कविरत्नादि-विविध-विरुदभाजा, डॉ० श्यामदेवशास्त्रिणा पाराशरेण सन्दब्धे 'त्रिवेणी' इत्याख्ये महाकाव्ये 'प्रवर-परलोक-प्रयाणवर्णनम्' इत्याख्यः अष्टाविंशः सर्गः परिसमाप्तः, पर्यवसितश्चायं ग्रन्थ इत्योम् ॥

# प्रबन्धप्रणेतुः पूर्वपुरुष - परम्परा - परिचयः

विश्वविश्रुतविक्रान्ते प्रान्ते 'पञ्चाप'-संज्ञके ।
जागरूक - जने नित्यं देश - रक्षण - दक्षिणे ॥ १ ॥

वर्तते मण्डलं रम्यं 'होश्यारपुर' - नामकम् ।
मण्डिता पण्डितैर् यत्र पावनी चोर्वराऽवनी ॥ २ ॥

तत्र 'रञ्जीतसिंहा'ऽऽख्ये प्रजापालनपेशले ।
गीयमान - यशोगाथे नृनाथे सति शासति ॥ ३ ॥

'मल्लोर'-संज्ञके ग्रामे ऽभिरामे च पुरा युगे ।
'शान्तनुपुर' - 'नाम्नैव विश्रुते क्षत्रियोर्जिते ॥ ४ ॥

आसीत् परात्पर - पराशर - वंशजातो,
विद्वद्वरः 'सहजराम' - पवित्रनामा ।
चक्रेऽनिशं विसृमरैः स्वयशःप्रसारैर्,
यो वासितानथ सितान् ककुभां कपोलान् ॥ ५ ॥

जज्ञे सुतोऽति-विनतस्य 'कृपा'ऽभिधानो,
नाम्नैव नैव किमु ? तस्य कृपावतारः ।
प्रायो गुणाः स्वपितुरुच्चपदाधिकारे,
यस्मिन् समे परिणताः सहजा इवासन् ॥ ६ ॥

'कर्त्ता'ऽऽख्यस्य सुतस्य तस्य तनुजा ज[illegible]ाश्चतुस्संख्यकाः,
ते कर्त्तुर्वदनैः समा बलभरे वैकुण्ठ - बाहूपमाः ।
आसन्नार्य - वरेण्य - कार्यकरणाद् धर्मावतारा इव,
चत्वारश्चतुराश्चतुर्दिगधिपैस्तुल्याः समस्तैर्गुणैः ॥ ७ ॥

वंशपल्यङ्कपादेषु यविष्ठस्तेषु साधुषु ।
सौजन्यधन्यजन्माऽभूज् 'जङ्गीरामा'ऽभिधः सुधीः ॥ ८ ॥

गुरवो ग्राम - गोष्ठीषु गायन्तो गुणगौरवम् ।
श्राम्यन्ति यस्य नाऽद्यापि स मेऽभूत् प्रपितामहः ॥ ९ ॥

भूयोऽनुकम्पा - सहितेन तेन,
परोपकाराऽविरत - व्रतेन ।
प्रसाविता हन्त ! महत्यकाले,
वैन्येत दूना धनधान्यदानैः ॥ १० ॥

आस्तां पवित्रहृदयो तनुजो तदीयो,
नासत्यतुल्यचरितो नितरां विनीतो ।
यन्नाम सज्जनकथासु मुहुर्महद्भिर्-
उत्कीर्त्यते शुभनिदर्शनतामुपेतम् ॥ ११ ॥

माङ्गल्यमूर्त्तिस्तकयोः कनीयान्, 'श्रीमूलराजः' स्मरणीयनामा ।
रात्रिदिवं विश्वजनीनवृत्तिः क्षेमङ्करः प्राणभृतां बभूव ॥ १२ ॥

सौशील्यसत्त्व-प्रकृतेश्च तस्माद् मूलादिव स्कन्धयुगं प्रजातम् ।
सूनुद्वयं साहससत्यरूपं साद्गुण्य - सङ्घे बल-कृष्ण - कल्पम् ॥ १३ ॥

उदारप्रकृतेः स्पष्टवक्तुस्तत्र यवीयसः ।
सत्य - सौहार्द - सारल्य - सौमुख्यैः संस्कृतात्मनः ॥ १४ ॥

श्रीमद् - 'वसन्तराम'स्य पुण्यारामस्य सूनुना ।
अगुरु - ग्राम-वास्तव्येनास्तव्येनाल्पमेधसा ॥ १५ ॥

'प्रसन्ना' - गर्भसंजातेन पाराशर्याणुरेणुना ।
धर्मं इत्येव मत्वा च पित्रादेशानुवर्तिना ॥ १६ ॥

येन सास्वाद्यते स्थेयः सुधा-स्वादिम-संस्कृतम् ।
सख्यं साप्तपदीनं च 'सुशीलाया' दिवानिशम् ॥ १७ ॥

सता वशंवदेनाऽलं तेनात्र वसतां सताम् ।
प्रियसंस्कृतसेवेन 'श्यामदेवेन' निर्मिता ॥ १८ ॥

सर्वतः सत्त्वसम्पन्नैः संस्तुता सूक्ष्मदर्शनैः ।
संसृतौ स्वस्ति-सौजन्य-सौहित्य-सम्प्रसारिणी ॥ १९ ॥

'त्रिवेणी'त्यभिधा सैषा रुचिरा रचना चिरम् ।
काव्यकौशल्य-शीलानां प्रीतयेऽस्तु सचेतसाम् ॥ २० ॥

—श्यामदेवः पाराशरः
कविरत्नम्, साहित्यशिरोमणिः,
शास्त्री, एम्० ए०, एम्० ओ० एल्०,
पी-एच्० डी०, पी० ई० एस्० (से० नि०),
सम्पादकः 'विश्वसंस्कृतम्'
५२३-हरिनगरम्, होश्यारपुरम् (पंजाब) ।

# शुद्धि - पत्रम्

| पृष्ठ | श्लोक | पाद | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| १९ | ८५ | ३ | धनञ्मन्तो | धनुष्मन्तो |
| २३ | १७ | १ | मुहूत | मुहूर्तें |
| २४ | २३ | ४ | प्रणन्न: | प्रणुन्न: |
| २६ | ४० | १ | प्रजाना | प्रजानां |
| २८ | ५२ | ३ | रुदन्त्य: | रुदत्य: |
| ३७ | ८ | १ | सम्यरायान् | सम्परायान् |
| ४२ | ४७ | २ | कोतुहल | कोतूहल |
| ४३ | ५१ | २ | किञ्चित | किञ्चित् |
| ४५ | ६७ | ३ | संनिधातृन | संनिधातृन् |
| ४९ | १३ | ३ | रुपैथमाने | रुपैधमाने |
| ५८ | ७१ | २ | विश्वग् | विष्वग् |
| ५९ | ३ | ४ | वध्या | वध्यो |
| ६२ | २७ | २ | वाग्मिर् | वाग्मिर् |
| ७५ | ११२ | १ | स्पधि | स्पर्धि |
| ७६ | ११७ | २ | वगी | वेगी |
| ७८ | १० | १ | अजङ्गा | अजङ्गमा |
| ७८ | १३ | २ | प्राणंदवं | प्राणप्रवं |
| ७९ | २० | २ | ऽबर | ऽम्बर |
| ८८ | ७७ | ४ | बीभीथमान | बेभीयमान |
| ८९ | ८४ | ४ | ववानल | ववानलं |
| ९५ | ३५ | ४ | अर्चो | अर्चों |
| ९८ | ५६ | ३ | ऽछवनन: | ऽछवनीन: |
| १०४ | १३ | ३ | प्रमाण | प्रणाम |
| ११५ | ८९ | १ | स यायी | प्रयायी |
| १२२ | १ | २ | क्तुचरा | चचतुरा |
| १२५ | २७ | १ | सोमग्य | सौभाग्य |

| पृष्ठ | श्लोक | पाद | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| १३३ | ८१ | २ | स्मारी- | स्मारी |
| १४५ | ४० | १ | शष्केषु | शुष्केषु |
| १४७ | ५१ | १ | विशष्का | विशुष्का |
| ,, | ,, | ३ | सहस्र | सहस्रै |
| १५३ | ९२ | २ | कौतुकिन: | कौतुकिन: |
| १६३ | ५१ | ३ | मखारविन्दात् | मुखारविन्दात् |
| १६९ | ९७ | १ | वै तान् | वैताम् |
| १७२ | ५ | १ | पृष्ठे | पृष्ठे |
| १७७ | ३८ | ३ | शैली | शैलो |
| १८१ | ६६ | ४ | तथार्हतत्वं | तथाहितत्वं |
| १८५ | १० | ४ | परास्तम | परास्तम् |
| १९९ | ३० | ३ | मीक्ष्येव | मुद्वीक्ष्य |
| २०१ | ४४ | २ | रन्ध्रषु | रन्ध्रेषु |
| २०२ | ५० | ४ | सौकुमायण | सौकुमार्येण |
| २२२ | ८१ | २ | क्षिवेश | क्षिवेष |
| २२६ | १०५ | १ | शोतानि | शीतानि |
| २३० | ४ | २ | विकसितेष | विकसितेषु |
| २३० | ५ | ४ | किमधना | किमधुना |
| २३४ | ३१ | ३ | [२]कौसुम | कौसुम |
| २३४ | ३२ | २ | द्विकाश्च | [२]द्विकाश्च |
| २६३ | ७२ | १ | माग | मार्गे |
| २६७ | ५ | ४ | वार्थि- | वार्धि- |
| २८१ | १०० | १ | गञ्जतु | गुञ्जतु |
| २९० | ५७ | ४ | वितुलं | विपुलं |
| २९३ | ७७ | ३ | साकं | सा कं |
| २९३ | ७७ | ३ | मदने | मदनेन |
| ३०१ | १२ | १ | स्फुरितोऽप्र | स्फुरिताऽप्र |
| ३०४ | २९ | ४ | हृष्टा | हृष्टा: |
| ३०४ | ३२ | २ | मखे | मुखे |
| ३१० | ७० | ४ | मागण | मार्गेण |
| ३१२ | ८३ | ३ | बभ्रर् | बभुर् |

